# TĪRTHACINTĀMANI

OF

VĀCASPATI MISRA.






EDITED BY

KAMALAKRISHNA SMRITITIRTHA.



CALCUTTA:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRT PRESS,

No. 5, Nandakumar Chaudhury's 2nd Lane,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1912.



# तीर्थचिन्तामणिः ।

## वाचस्पतिमिश्रविरचितः ।

एशियाटिकसोसाइटीनामिकायाः सभाया अनुमत्या

भट्टपल्लीनिवासिना

श्रीकमलकृष्णस्मृतितीर्थेन

संशोधितः ।

कलिकाता-नगर्य्याम्

श्रीउपेन्द्रनाथचक्रवर्त्तिना

संस्कृतयन्त्रे मुद्रितः

एशियाटीकसोसाइटीनामिकया सभया प्रकाशितश्च ।

१९१२ खृष्टाब्दः ।

# PREFACE.

The present treatise "Tirtha Cintamani" is one of the series of "Smriti Cintamani" by Vācaspati Misra and treats of the holy places of Hindu pilgrimage. The details of rites and ceremonies prescribed in the Castras for performance in the five foremost places of Hindu pilgrimage, Gaya, Purushottama ( Puri ), Prayag ( Allahabad ), Kashi ( Benares ), and Ganga ( the sacred river Ganges ) have been dealt with in extenso, while the other places of pilgrimage have also been treated generally. The work shows the devoted religious faith of the Hindus and is full of information derived from laborious researches and investigation; the other works of the same series are Sradha Cintamani, Suddhi Cintamani, etc.

The author Vācaspati Misra belonged to Mithila and flourished in the court of Raja Harinarain Deb, a Brahmin Raja of Mithila, at whose instance he composed the famous Smriti collection "Kirtya Maharnava." After the demise of the Raja, he composed another important Smriti collection "Dwaita Nirnaya" at the instance of the widowed Rani Jayadevi.

The period of the works of the great Bengali savant, Pandit Raghunandana Bhattacharjya, has been determined to be the latter half of the sixteenth century. Raghunandana has freely quoted from Dwaita Nirnaya and also from Sraddha Cintamani and other works of the present author in many places of his famous Smriti collection. Quotations from the present work occur in the chapter deal-

ing with "GANGA MAHATMYA" of his Prayaschittwa tatwa and also in Malamasa tatwa. The period of the present author then dates back before the latter half of the sixteenth century. *Biswakosha* ( the Bengali Encyclopaedia ) in the article on "*Smriti*" has fixed the age ef Raja Harinarayan Deb and of the present author to be the first period of the sixteenth century.

In editing this book I have consulted *Brahma purana*, *Tristhali Sethu*, Raghunandan's *Asthabingsati tatwa* and other authorities.

Three manuscripts indicated in the foot notes as ক, খ, and গ respectively have been collated for the present publication, one obtained from the rooms of the Asiatic Society of Bengal, the other from the library of the Sanskrit College, Calcutta, and the third from Pandita Panchanana Tarkaratna of my native village, Bhatpara. But the last page was either wanting or illegible in the first two manuscripts and Pandit Bindhweswari Prasad, Librarian of the Benares, Sanskrit College, very kindly lent me the last page of a manuscript in his possession for which I am grateful to him.

In conclusion I am much indebted to the learned members of the Asiatic Society for kindly permitting me to edit these valuable old manuscripts. The services which the Society is rendering to the cause of old Sanskrit literature by the publication and consequent preservation of ancient and useful manuscripts are invaluable and most praise worthy.

*The 21st July, 1912.*
BHATPARA, 24 PERGANAS.

KAMALA KRISHNA SMRITITIRTHA.

श्रीश्रीरामो जयति ।

# तीर्थचिन्तामणेर्विषयसूची ।

---

## ऋषिनामानि ।

विषयाः     पृः     पं



---

## संग्रहकारनामानि ।



---

## संग्रहग्रन्थनामानि ।



---

## अन्यान्यग्रन्थनामानि ।

## पुराणनामानि ।

---

# तीर्थचिन्तामणिधृतव्यवस्थापकवचनाना-मकारादिक्रमेण सूची ।



## अ ।

आ ।

## उ ।



## ऋ ।



## ए ।

## प ।

## श ।

## ष ।



## स ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठायाम् | पंक्त्याम् । |
|---|---|---|---|
| तीर्थे प्राप्तिदिने | तीर्थप्राप्तिदिने | १४ | १६ |
| अयज्ञीयाः | अयज्ञियाः | १७ | १२ |
| तत्व | तत्त्व | १८ | १७ |
| मोक्षकामिनः | मोक्षकामिणः | २६ | ३ |
| कर्व्वूरे | कर्व्वुरे | ३७ | २० |
| तत्वाम्रुतासौ | तत्वाम्रुतासो | ४७ | ८ |
| रोमकूपानि | रोमकूपाणि | ५० | ७ |
| दर्शनजनं | दर्शनजं | १९९ | ३ |
| भित्वा | भित्त्वा | २०६ | ३ |
| दानेपु | दानेषु | २३३ | १७ |
| संस्थाप्य | संस्नाप्य | २४७ | १० |
| लमेत् | लभेत् | २५० | ३ |
| प्रतिपच्चदर्शो | प्रतिपच्चदर्शि | २५६ | २० |
| कव्यालो | कव्यवालो | २८८ | १ |
| याथपूर्व्वं | यथापूर्व्वं | २८५ | ४ |
| पितृणावाह्य | पितृनावाह्य | २८४ | १३ |
| ईरीणि | ईरिणि | २८१ | १७ |
| श्वेतछत्व | श्वेतच्छत्र | २५१ | ७ |
| परं | परा | ३६० | १८ |

ॐ नमः सरस्वत्यै ।

# तीर्थचिन्तामणिः ।

ॐ नमो रामचन्द्राय ।

कनकनलिनलक्ष्मीस्पर्द्धिराधाकुचाग्र-
ग्रथितनयनभृङ्गः स्मेरवक्त्राम्बुजश्रीः ।
नवगगन-तमालश्यामलामन्दगात्रः[१]
क्षपयतु मम कर्म्म क्रूरमक्रूरमित्रः ॥

श्रीकृत्यकल्पद्रुम-पारिजात-
रत्नाकरादीनवलोक्य यत्नात् ।
प्रणम्य मूर्ध्ना मधुसूदनाय
वाचस्पतिस्तीर्थविधिन्तनोति ॥

तत्र महाभारते—

ऋषिभिः क्रतवः प्रोक्ता वेदेष्विह यथाक्रमम् ।
फलञ्चैव यथातत्त्वं प्रेत्य चेह च सर्व्वशः ॥
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते[२]! ।
बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥
प्राप्यन्ते पार्थिवैरेव समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनैरवगणैरेकात्मभिरसंहतैः ॥

---

१ क, ग श्यामलानन्दगात्रः । जलद इत्युचितः । २ ख महामते ।

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तन्निबोध युधाम्वर ॥
ऋषीणां परमं गुह्यमिदमुक्तं मया तव ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि[१] विशिष्यते ॥
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्वा काञ्चनं गाश्च दरिद्रो जायते नरः ॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन यत् ॥
अज्ञानेनापि यस्येह तीर्थयात्रादिकं भवेत् ।
सर्व्वकामसमृद्धः स स्वर्गलोके महीयते ॥
स्थानञ्च लभते नित्यं धनधान्यसमाकुलम् ।
ऐश्वर्य्यज्ञानसम्पन्नः सदा भवति भोगवान् ।
तारिताः पितरस्तेन नरकात् प्रपितामहाः ॥

अवगणैः सहायरहितैः । एकात्मभिः पत्नीरहितैः । असंहतैः ऋत्विगादिरहितैः । अनुपोष्येति—त्रिरात्रोपोषण-तीर्थाभिगमन-काञ्चनदान-गोदानानां प्रत्येकं दारिद्र्याभावः फलमित्यर्थः ।

तथा—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ।

हस्तसंयमः परस्वग्रहणनिवृत्तिः । पादसंयमः अगम्यदेशगमन-

---

१ ख यज्ञैर्दानैः ।

निवृत्त्या । मनःसंयमः कुत्सितेच्छानिवृत्त्या । विद्या तीर्थगुणादि[१]-ज्ञानं । तपस्तीर्थनिवासोपवासादिलक्षणम् । कीर्त्तिः सच्चरितत्वेन प्रसिद्धिः ।

तथा—

प्रतिग्रहादपावृत्तः सन्तुष्टो येन केनचित् ।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते ॥
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्व्वसङ्गैस्तु स तीर्थफलमश्नुते ॥

प्रतिग्रहादपावृत्तत्वन्तु यात्रानन्तरमेव यात्रामुपक्रम्यैवाभिधानात् । अकल्कको दम्भरहितः । निरारम्भः-अर्थार्ज्जनादिव्यापाररहितः । सर्व्वसङ्गैरिति—सङ्गोऽत्र अविहितासक्तिः[२] ।

तथा—

अकोपनश्च राजेन्द्र सत्यवादी दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥

आत्मोपम इति सर्व्वभूतहिते रत इत्यर्थः ।

शङ्खः—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥

इदन्तु हस्तसंयमनादिकं तीर्थस्नानात् पूर्व्वं[३] यात्रामुपक्रम्यैवाभिधानात् ।

---

१ क पुस्तके तीर्थगमनादिज्ञानम् ।   २ ख विहारसङ्गः ।
३ ख तीर्थस्नानादिकर्म्माङ्गम् ।

वायुपुराणे—

तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः ।
कृतपापो विशुध्येत किं पुनः शुद्धकर्म्मकृत् ॥
तिर्य्यग्योनिं न गच्छेच्च कुदेशे नैव जायते ।
स्वर्गी[१] भवति वै विप्रो मोक्षोपायञ्च विन्दति ॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः ।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥

पापात्मा बहुपापग्रस्तस्तस्य पापशमनं तीर्थं भवति न तु यथोक्तफलम् ।

तदुक्तं—

नृणां पापवतां तीर्थं पापस्य शमनं भवेत् ।
यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥

इति ।

अच्छिन्नसंशयः फलोपायेतिकर्त्तव्यतार्थनिश्चयशून्यः, हेतुनिष्ठः कुतर्केण शास्त्रोपप्लावकः[२] ।

भारते—

कामं क्रोधञ्च लोभञ्च यो जित्वा तीर्थमाविशेत् ।
न तेन किञ्चिद्प्राप्तं तीर्थाभिगमनाद्भवेत् ॥
तीर्थानि च यथोक्तेन विधिना सञ्चरन्ति ये ।
सर्व्वद्वन्द्वसहा धीरास्ते नराः स्वर्गगामिनः ॥

सर्व्वद्वन्द्वसहाः शीतातपादिक्लेशसहिष्णवः ।

---

१ क, ग पुस्तकद्वये पूतः ।   २ ख शास्त्रोद्धारकः ।

ब्रह्मपुराणे—

गङ्गादितीर्थेषु वसन्ति मत्स्या
देवालये पक्षिगणाश्च सन्ति।
भावोज्झितास्ते न फलं लभन्ते
तीर्थाच्च देवायतनाच्च तात[१] ॥
भावं ततो हृत्कमले निधाय
तीर्थानि सेवेत समाहितात्मा ॥
या तीर्थयात्रा कथिता मुनीन्द्रैः
कृता प्रयुक्ताप्यनुमोदिता च।
[२]तां ब्रह्मचारी विधिवत् करोति
सुसंयतो गुरुणा सन्नियुक्तः ॥
सर्व्वस्वनाशेऽप्यथवात्मपक्षे
सद्ब्राह्मणानग्रत एव कृत्वा।
यज्ञाधिकारेऽप्यथवा निवृत्ते
विप्रस्तु तीर्थानि परिभ्रमेत्तु ॥
तीर्थे फलं यज्ञफलं हि यस्मात्
प्रोक्तं मुनीन्द्रैरमलस्वभावैः।
यस्येष्टियज्ञेष्वधिकारिताऽस्ति
वरं गृहं गृहधर्म्माश्च सर्व्वे ॥

---

१ क, ख पुस्तके मुख्यात्।
२ ख, ग पुस्तकद्वये इत एकादशसंख्यकपत्रं यावत् न दृश्यते।

एवं गृहस्थाश्रमसंस्थितस्य
तीर्थे गतिः पूर्व्वतरैर्निषिद्धा ।
सर्व्वाणि तीर्थान्ययवाग्नि-
होत्रतुल्यानि नैवेति वयं वदामः ॥

ब्रह्मचारीत्यादि—ब्रह्मचारिणो गृहस्थस्य च तीर्थगमनेऽधिकारः साग्नेस्त्वनधिकार इति वर्त्तुलार्थः ।

तथा ब्रह्मपुराणम्,—

यो यः कश्चित्तीर्थयात्रान्तु गच्छेत्
सुसंयतः स च पूर्व्वं गृहे स्वे ।
कृतोपवासः शुचिरप्रमत्तः
सम्पूजयेद्भक्तिनम्रो गणेशम् ॥
देवान् पितॄन् ब्राह्मणांश्चैव साधून्
धीमान् प्रीणयन् वित्तशक्त्या प्रयत्नात् ।
प्रत्यागतश्चापि पुनस्तथैव
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ॥

एवं कुर्व्वतस्तस्य तीर्थाद्युक्तफलं तत् स्यान्नात्र सन्देह एव। सुसंयत इति पूर्व्वदिने कृतैकभक्तादिनियमः। तदुत्तरदिने कृतोपवास-स्तदुत्तरदिने गणेशं यथानिष्टदेवताश्च सम्पूज्य पार्व्वणञ्च कृत्वा ब्राह्मणान् भोजयेत् ।

इदञ्च पार्व्वणं घृतमुख्यद्रव्यकम् ।

गच्छन् देशान्तरं यत्तु श्राद्धं कुर्य्याच्च सर्पिषा ।
यात्रार्थमिति तत् प्रोक्तं प्रवेशे च न संशयः ॥

इति भविष्यपुराणवचनात् ।

इदानीमाभ्युदयिकमिति तु केचित्—तन्न प्रकृतित्वेन उपस्थितिलाघवात् प्राप्ते पार्व्वणे विशेषानभिधानात् । गणेश्वर-मिश्रादयोऽप्येवम् ।

उपवासदिने मुण्डनमपि-

प्रयागे तीर्थयात्रायां पितृ-मातृ-वियोगतः ।

कचानां वपनं कुर्य्याद्वृथा न विकचो भवेत् ॥

इति स्मृतिसमुच्चयधृतविष्णुलिखितवचनात् ।

कार्पटीवेशेन तीर्थगमने चिकीर्षिते श्राद्धे वपनमित्यर्थः । श्राद्धानन्तरञ्च गमनं सङ्गच्छते ।

ततो वेशधारणम् । तदुक्तं वायुपुराणे,—

उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः ।

विधाय कार्पटीवेशं कृत्वा ग्रामं प्रदक्षिणम् ।

ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ॥

ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्ज्जितः ।

पदे पदेऽश्वमेधस्य स्यात् फलं गच्छतो गयाम् ॥

इदञ्च कार्पटीवेशधारणं गणेशं ग्रहानिष्टदेवताञ्च सम्पूज्य गमनफलञ्च यद्यपि गयायामेव श्रूयते तथापि तीर्थान्तरयात्राया-मपि द्रष्टव्यम् "एकत्र निर्णीत इति न्यायात् । फलाकाङ्क्षायाञ्च गमनफलत्वेन एतस्यैवान्यत्रापि गमनफलत्वमुचितमन्तरङ्गत्वात् ।

न तु विश्वजिन्न्यायादन्यत्र फलकल्पनं तस्य बहिरङ्गत्वेनोप-स्थितिगौरवात् ।

ग्रामान्तरं क्रोशाभ्यन्तरमेव "अध्वनि च क्रोशपूरणे"
इत्यादिना श्राद्धोत्तरं क्रोशगमननिषेधात्।

मत्स्यपुराणे मार्कण्डेयवाक्यम्—

कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम्।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम्॥
वलीवर्द्दसमारूढ़ः शृणु तस्यापि यत्फलम्।
नरके वसते घोरे गवां क्रोधो हि दारुणः।
सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः॥
ऐश्वर्य्यलाभमाहात्म्याद्गच्छेद्यानेन यो नरः।
निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्ज्जयेत्॥

अयञ्च याननिषेधः प्रयागमात्रपरः तत्प्रकरण एव मत्स्यपुराणस्य श्रुतत्वादिति कल्पतरुः।

पठन्ति च—

गोयाने गोवधः प्रोक्तो हययाने तु निष्फलम्।
नरयाने तदर्द्धं स्यात् पद्भ्यां स्यात्तु चतुर्गुणम्॥

पद्भ्यामिति उपानत्त्वादिव्यतिरेकेण सातिशयं तीर्थफलं भवति। न तु तत्परिधाने दोषो निषेधाश्रवणात्। मिताक्षरादिस्वरसोऽप्येवम्।

यत्—ऊर्द्ध्वं हरति पादुकेति पठन्ति तत् सर्व्वैरेव निबन्धकारैरनादरणादनाकरमिति निर्णीयते।

एवञ्च—उपानन्निषेधे बाधिते

वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च।

शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत् ॥

इति विष्णुपुराणीयवचनेन निष्प्रतिपक्षसदाशब्दस्वरसात्तीर्थ-यात्रायामप्युपानत्परिधानमावश्यकमिति। एवं वर्षास्वपि—

यस्तु वर्षासु तन्निषेधः स तदा खट्वादिनिषेधवत् काम्य इति।

तदयं यात्रानुष्ठानक्रमः,—

कस्मिंश्चिद्दिने एकभक्तादिकं कृत्वा तदुत्तरदिनेऽधिकारि-विशेषणत्वेन प्राप्तं मुण्डनमुपवासञ्च विधाय तदुत्तरदिने कृतनित्य-क्रियो गणेशं ग्रहानिष्टदेवताञ्च सम्पूज्य—

ॐ अद्य तीर्थयात्रायां पार्व्वणश्राद्धमहं करिष्ये इति संकल्प्य घृतेन श्राद्धं निर्व्वर्त्त्य ब्राह्मणत्रयं सम्पूज्य हिरण्यादिना परितोष्य—

ॐ अद्य प्रतिपदमश्वमेधयज्ञजन्यफलसमफलप्राप्तिकामोऽमुक-तीर्थयात्रामहं करिष्ये—

इति संकल्प्य तत्रैव मुद्राकङ्कणकाषायपरिधानरूपं छत्रोपानह-दण्डधारणरूपञ्च कार्प्पटीवेशं कृत्वा ग्रामं वासावच्छिन्नं प्रदक्षिणं परिवृत्य क्रोशाभ्यन्तरस्थं ग्रामान्तरं गत्वा श्राद्धशेषघृतेन पारणं कुर्य्यात्।

ततो दिनान्तरे प्रातः शुचिवस्त्रयुगे धृत्वा कृतस्नानाचमनो गृहीतकार्प्पटीवेशः पूर्व्वाह्णे तीर्थाभिमुखं गच्छेत्।

वेशधारणञ्च यात्राङ्गत्वात् गमनकाल एव न त्वाह्निक भोजनादिकालेऽपि मानाभावात्।

एवमेव यावत्तीर्थप्राप्ति प्रत्यहं गच्छेत तीर्थेऽपि तद्वत् चैत्रा-दिकमनुसरन् कार्पटीवेशं बिभृयात्।

न तु तत्र स्नानश्राद्धादिकालेऽपि प्रमाणाभावात् ।
एवं तीर्थात्तथैव प्रत्यावृत्तः स्वग्रामसमीपे ग्रामान्तरे तत्पूर्व्वप्राप्ति-दिने कृतोपवासस्तदुत्तरदिने ग्रहानिष्टदेवतांश्च सम्पूज्य—

अद्य तीर्थयात्रायां पार्व्वणश्राद्धमहं करिष्ये इति संकल्प्य तत्रैव घृतेन पार्व्वणं विधाय ब्राह्मणत्रयं पूर्व्ववत् सम्पूज्य स्वग्रामं प्राप्य तं पूर्व्ववत् प्रदक्षिणीकृत्य स्वगृहं प्रविश्य वेशधारणस्थाने वेशमुज्झित्वा श्राद्धशेषघृतेन पारणां कुर्य्यादिति ।

शङ्खः—

तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरन् ।
स्नानजं फलमाप्नोति तीर्थयात्राफलं न तु ॥

अनुषङ्गेण विदेशस्थपित्रादिप्रणामाय चलितो मध्ये तीर्थं प्राप्य स्नात्वा तत्स्नानजं फलमेव लभते ।

पैठीनसिः—

षोड़शांशं स लभते यः परार्थेन गच्छति ।
अर्द्धं तीर्थफलन्तस्य यः प्रसङ्गेन गच्छति ॥

परार्थेन वेतनादिना, प्रसङ्गेन उद्दिश्य तीर्थान्तरप्रसङ्गेन गणेश्वरमिश्रादयोऽप्येवम् ।

देवीपुराणे—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कदाचन ।
अन्नार्थिनमनुप्राप्तं भोज्यन्तं मनुरब्रवीत् ॥
सक्तुभिः पिण्डदानञ्च संयावैः पायसेन वा ।
कर्त्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुड़ेन वा ॥

पिण्याकः तिलकल्कः । तथा तत्रैव,—

श्राद्धञ्च तत्र कर्त्तव्यमर्घ्यावाहनवर्ज्जितम् ॥
श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतञ्च यत् ।
श्राद्धन्तु तीर्थिकं प्रोक्तं पितॄणां तुष्टिकारकम् ॥
अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥
पिण्डदानं तत्र शस्तं पितॄणाञ्चातिदुर्लभम् ।
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ॥

तत्रेति—इयमधिकरणसप्तमी न तु निमित्तसप्तमी उपपद-विभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् । तेन तीर्थाधिकरणकश्राद्धं सर्व्वमेवार्घ्यावाहनवर्ज्जितम् । न तु तीर्थप्राप्तिनिमित्तक-मात्रमपीति केचित् ।

तन्न—प्राप्तैरेव कर्त्तव्यमित्युपसंहारदर्शनादुपक्रमोपसंहारैकवा-क्यतया तीर्थप्राप्तिनिमित्तक एव श्राद्धेऽर्घ्यावाहननिषेधप्रतीतेः ।

ननु आवाहनं पित्रादिसन्निधिफलकं ते च तीर्थे नित्य-सन्निहिता एवेति तीर्थाधिकरणश्राद्धमात्र एवावाहनबाध उचितो वैयर्थ्यात् ।

इति चेत् न शरीरस्य बौद्धस्य वा सन्निधेर्देवताधिकरण-विरोधेन निरस्तत्वात् । किमर्थं तर्ह्यन्यत्रावाहनम् अदृष्टार्थमित्य-वेहि अतएव नावाहनमन्त्रोऽपि ।

नन्वेवं नमो व इत्यत्रादृष्टार्थत्वे कथं मन्त्रोहः समवेतार्थोऽय-मिति यदि तर्हि प्रतिपुरुषं कथं बहुवचनप्रयोग इति । उच्यते—

अत्र तु तत्तद्देवताप्रकाशकत्वेन समवेतप्रकृतिकत्वेऽपि प्रतिपुरुषं बहुवचनम्,—

एतद्वः पितरो वास इति जल्पन् पृथक् पृथक् ।

इति वचनबलादेव[1] ।

नन्वेवं प्रकृतौ विभक्तेरसमवेतार्थत्वे विकृतावपि तथात्वं—

यथा—अदितिः पाशान् प्रमुमोक्त्वित्यत्र वाढ़मिति चेत् तर्हि पितुरेकोद्दिष्टेऽपि एतद्वः पितरो वास इति स्यात् ।

विभक्तेः प्रकृतावेवासमवेतार्थत्वादिति चेत् भ्रान्तोऽसि द्विधा हि विभक्तीनामसमवेतार्थत्वं मन्त्राभिवादबलाद्वाक्यबलाच्च ।

तत्राद्यं पाशाधिकरणे—

अतएव विकृतावपि बहुपाशशून्यायां बहुवचनान्तएव पाश-शब्दप्रयोग इति सिद्धान्तः ।

द्वितीयस्तु—वाक्यविषयमात्रे सम्भवति यावद्बहुवचनं हि वाच-निकमिति न्यायात् । अकाले अमावस्यादिव्यतिरिक्तकाले न तु राच्यादौ निषेधविरोधादिति ।

यत्तु अकाले राच्यादाविति न हि कोऽपि वारः काऽपि तिथिर्वा न श्राद्धस्य कालः सर्व्वदैव श्राद्धविधानादिति तस्माद-कालत्वेन राच्यादिकमेव प्रतिप्रसूतमिति केचित् ।

तन्न—सर्व्ववारतिथीनां श्राद्धकालत्वेन आवश्यकश्राद्धकालत्वा-भावादेव ।

इदन्तु तीर्थश्राद्धमावश्यकम् । तेनायमर्थः—यस्मिन्नपि काले

---

१ ख पुस्तके एतावत् पतितम् ।

प्रतिपदादौ श्राद्धमनावश्यकं तदापि तीर्थप्राप्तिपक्षे श्राद्धमवश्य-कार्य्यमिति ।

अत्र केचिदाहुः—

यस्य तु दैवगत्या सायाह्नादौ तीर्थलाभस्तस्य तत्प्राप्ति-निमित्तकश्राद्धबाध एव तद्दिने विहितमुहूर्त्ताभावादुत्तरदिने च प्राप्तिदिनलाभावादिति ।

वस्तुतस्तु तत्राप्युत्तरदिनेऽचिरोदितमुहूर्त्तद्वयानन्तरं श्राद्ध-मुचितमेव । प्राप्त्युत्तरविहितमुहूर्त्ते एव श्राद्धविधानात् ।

न च विलम्बो दोषाय स्वयमकरणात् ।

न चैवं प्राप्त्यनुपदं चते तदन्तेऽपि श्राद्धापत्तिः । प्राप्त्यनन्तर-विहितमुहूर्त्तस्य "प्राप्तैरेव तु कर्त्तव्यम्" इत्यनेन तच्छ्राद्धाधि-करणत्वेन विहितस्य व्यतिक्रमादिति ।

पिण्डदानमिति—

श्राद्धाङ्गत्वेनैव पिण्डदाने प्राप्ते पुनः पिण्डदानवचनं यत्र द्रव्यसम्पत्त्यादिना श्राद्धं न सम्भवति तत्र पिण्डदानमपि कार्य्य-मित्येवंपरम् ।

एकस्यां यात्रायामेकस्मिंस्तीर्थे एकमेव श्राद्धं यात्राभेदे तीर्थभेदे चावर्त्तते प्राप्तिनिमित्तकत्वात् ।

अतएव गयायामेकस्मिन् दिने नानातीर्थप्राप्तौ तन्निमित्तकानि नानाश्राद्धानीति ।

पैठीनसिः—

प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।

मज्जयेत्तु यमुद्दिश्य सोऽष्टभागं फलं लभेत् ॥

प्रतिकृतिः प्रतिमा।

यत्तु—

कुशोऽसि कुशपुत्रोऽसि ब्रह्मणा निर्म्मितः पुरा।
त्वयि स्नाते स च स्नातो यस्येदं ग्रन्थिबन्धनम् ॥

इति मन्त्रेण बद्धग्रन्थेः कुशस्य मज्जनं तन्निबन्धकृद्भिरनुपग्रहा-
दनाकरमिति।

तीर्थोपवासो विशेषार्थी न त्वावश्यकः—

तीर्थमधिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमानस्त्रिरात्र-
मुषित्वा सर्व्वपापेभ्यो विमुच्यते स्वस्तिमांश्च भवति।

इति देवलवचनात्।

एवञ्चात्र त्रिरात्रोपवासस्नानानां सर्व्वपापविमुक्ति-स्वस्तिमत्त्वे-
फलं। आहितः पूत आहवनीयो भवतीतिवत् एकवाक्यतार्थं
विशिष्टान्वयात्। न तु प्रत्येकमन्वयो वाक्यभेदापत्तेः।—

केचित्तु—

सर्व्वत्रैव तीर्थे प्राप्तिदिने मुण्डनमुपवासञ्चेच्छन्ति।
मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजान्तथा ॥

इति स्कन्दपुराणीयवचने सर्व्वपदस्वरसात् गयादिविशेष-
निषेधाच्च।

तन्न—

सर्व्वपदस्यासङ्कोचेऽतिप्रसङ्गात्।

तथाहि—

भौमानामपि तीर्थानां पुण्यत्वे कारणं शृणु ।
यथा शरीरस्योद्देशाः केचिन्मुख्यतमाः स्मृताः ॥
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः ।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता ॥

इति महाभारते तीर्थोद्देशे भीष्मवाक्येन सातिशयफलकस्य स्थलस्य जलस्य च तीर्थत्वाभिधानात् स्वदेशान्तर्गतप्रस्रवणादौ वपनोपवासयोः प्रसङ्गः । न चेष्टापत्तिः सर्व्वदेशीयशिष्टाचार-विरुद्धत्वात् ।

न च सर्व्वपदं विदेशतीर्थपरं मध्यदेशीयानां सकलशिष्टानु-मतस्य प्रयागवपनस्य विलोपापत्तेः ।

न च—

येष्वेव महातीर्थेषु विशेषतो मुण्डनं विहितमस्ति तत्परमेव सर्व्वपदमिति वाच्यम्—

प्रयागादन्यत्र तद्विधानाश्रवणात् ।

अथ—

गङ्गां संप्राप्य यो धीमान् मुण्डनं नैव कारयेत् ।
वृथा तस्य क्रियाः सर्व्वा तीर्थद्रोही भवेन्नरः ॥
गङ्गायां भास्करक्षेत्रे मुण्डनं यो न कारयेत् ।
स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत् ॥
गङ्गां प्राप्य सरिच्छ्रेष्ठां कल्पानु[१] पापसञ्चयाः ।

केशानाश्रित्य तिष्ठन्ति तस्मात्तान् परिवापयेत् ॥
यावन्ति नखरोमाणि गङ्गातोये पतन्ति वै ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इत्यादिवचनाद्गङ्गायां प्रयागव्यतिरेकेऽपि मुण्डनमिति चेत् अस्तु तावदेवं तथापि बहुवचनानुपपत्तिः । प्रयाग-गङ्गयोरेव मुण्डनविधानात् ।

न चैतद्विशेषनिषेधबलादेव तेषु मुण्डनमबाधितं । [१]बाधस्योक्तत्वात् ।

वस्तुतस्तु—गङ्गामुण्डनविधायकानाममीषां कल्पतरुकारादिभिः सर्व्वैरेवानिबद्धत्वेन निर्मूलतैव ।

अथ—

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरोर्मृते ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥

भास्करक्षेत्रं प्रयागस्तत्र मुण्डनमिति स्मृतिसमुच्चयलिखितवचनात् गङ्गायामपि वपनमिति चेत् ।

मुण्डनञ्चोपवासश्च सर्व्वतीर्थेष्वयं विधिः ।
वर्ज्जयित्वा गयां गङ्गां विशालां विरजां तथा ॥

इति स्कन्दपुराणीयवचनेन गया-गङ्गा-विशाला-विरजाव्यतिरिक्ततीर्थे वपनं विदधता गङ्गायामर्थतो वपनस्य निषेधात् ।

तर्हि षोड़शिग्रहणाग्रहणवद्विकल्पोऽस्त्विति चेत् भवेदेवं यदि विषयभेदेनाविरोधो न स्यात् ।

---

१ ख पुस्तके व्यवहारविरोधस्य ।

नन्वेवं[1] तथाहि –

यावन्ति नखलोमानि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्म्मणाम् ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।

इत्यादि वचनानां गङ्गायां सकलमुण्डनविधायकानामविगीत-शिष्टाचारोपष्टम्भेन प्रयागावच्छिन्नगङ्गापरत्वं[2] । निषेधवचनस्य तदनवच्छिन्नगङ्गापरत्वमिति निर्णयात् ।

कथन्तर्हि सर्व्वतीर्थेष्विति बहुवचनं सर्व्वतीर्थपदस्य बहु-व्रीहिणा प्रयागवचनत्वे सिद्धे तस्याविवक्षितत्वात् ग्रहं संमार्ष्टीति-वत् । कथन्तर्हि गयादिविशेषनिषेधः ।

इत्थं यदा मौद्गस्चरुर्भवतीति विशेषविधिनैव माषादिनिषेधे सिद्धे पुनरप्ययज्ञीया वै माषा इति माषनिषेधवचनं यथा प्रति-निधिविषया अपि[3] माषा न ग्राह्या अत्यन्तायज्ञीयत्वादित्येवंपरम्। तथा गयादिवपननिषेधोऽपि अत्यन्ताप्राशस्त्यपर इति ।

सर्व्वतीर्थपदस्य प्रयागवाचकपरत्वे किम्मानमिति चेत्—

एवं कुरुष्व कौन्तेय सर्व्वतीर्थाभिषेचनम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

इति प्रयागवर्णनाभ्यन्तरस्थं मत्स्यपुराणवचनमित्यवेहि ।

इति सामान्यविधिः ॥

---

१ ग पुस्तके तदेवं ।  २ ख पुस्तके गङ्गाम्बुपरतरम् ।
३ क पुस्तके प्रतिनिधिविधया ।

## अथ प्रयागविधिः ।

अत्र पद्मपुराणे[१]—

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ।
तस्माद्दशगुणा प्रोक्ता यत्र विन्ध्येन सङ्गता ॥
तस्माच्छतगुणा प्रोक्ता काश्यामुत्तरवाहिनी ।
काश्याः शतगुणा प्रोक्ता गङ्गायामुनसङ्गमे ॥
सहस्रगुणिता साऽपि भवेत् पश्चिमवाहिनी
सा राजन् दर्शनादेव ब्रह्महत्यापहारिणी ॥
पश्चिमाभिमुखी गङ्गा कालिन्द्या सह सङ्गता ।
हन्ति कल्पशतं पापं सा माघे नृप दुर्लभा ॥
अमृतं कथ्यते राजन् सा वेणी भुवि कीर्त्तिता ।
तस्यां माघे मुहूर्त्तन्तु देवानामपि दुर्लभम् ॥

तथा—

पृथिव्यां यानि तीर्थानि पुण्याः सन्तीह याः पुनः ।
स्नातुमायान्ति ता वेण्यां माघे मासि नराधिप ॥
ब्रह्मविष्णुशिवा देवा रुद्रादित्यमरुद्गणाः ।
गन्धर्वा लोकपालाश्च यक्षकिन्नरगुह्यकाः ॥
अणिमादिगुणोपेता ये चान्ये तत्वदर्शिनः ।
ब्रह्माणी पार्व्वती लक्ष्मीः शची मेधाऽदिती रतिः ॥
सर्व्वास्ता देवपत्न्यश्च तथा नागाङ्गना नृप ।
घृताची मेनका रम्भा उर्व्वशी च तिलोत्तमा ॥

---

१ क पुस्तके भविष्यमत्स्यपुराणे ।

गणाश्चाप्सरसां सर्व्वे पितॄणाञ्च गणास्तथा।
स्नातुमायान्ति ते सर्व्वे माघे वेण्यां नराधिप॥
कृते युगे स्वरूपेण कलौ प्रच्छन्नरूपिणः॥
सर्व्वतीर्थानि कृष्णानि पापिनां सङ्गदोषतः।
भवन्ति शुक्लवर्णानि प्रयागे माघमज्जनात्॥

तथा—

मकरस्थे रवौ माघे गोविन्दाच्युत माधव।
स्नानेनानेन मे देव यथोक्तफलदो भव॥
इति मन्त्रं समुच्चार्य्य स्नायान्मौनं समाश्रितः।
वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः॥
तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः।
षडाब्देन फलं तद्धि मकरस्थे दिवाकरे॥
बहिः स्नानन्तु वाप्यादौ द्वादशाब्दे फलं स्मृतम्।
तड़ागे द्विगुणं राजन् नद्यादौ तु चतुर्गुणम्॥
दशधा देवखाते च शतधा च महानदीम्।
शतं चतुर्गुणं राजन् महानद्यास्तु सङ्गमे॥
सहस्रगुणितं सर्व्वं तत् फलं मकरे रवौ।
गङ्गायां स्नानमात्रेण लभते मानुषो नृप॥

तथा—

गङ्गां येऽत्रावगाहन्ति माघे मासि नराधिप[1]।
चतुर्युगसहस्रान्ते[2] न पतन्ति सुरालयात्॥

---

१ क पुस्तके युधिष्ठिर। २ ख सहस्रं ते।

शतेन गुणितं माघे सहस्रं राजसत्तम ।
निर्द्दिष्टमृषिभिः स्नानं गङ्गायामुनसङ्गमे ॥
पापौघभूरिभारस्य[1] दाहदेशं प्रजापतिः ।
प्रयागं विदधे[2] भूप प्रजानाञ्च हिते रतः ॥
सूनास्थानमिदं सम्यक् सितासितजलं किल ।
पापरूपपशूनां हि ब्रह्मणा विहितं पुरा ॥
सितासिता तु या धारा सरस्वत्या विदर्भिता[3] ।
तन्मार्गं[4] ब्रह्मलोकस्य सृष्टिकर्त्ता ससर्ज्ज वै ॥

तथा—

स्नानकृन्मानसे माघस्त्वमोक्षफलप्रदः ।
हिमवत्पृष्ठतीर्थेषु सर्व्वपापप्रणाशनः ॥
इन्द्रलोकप्रदो माघो निर्द्दिष्टो वेदवादिभिः ।
सर्व्वकामप्रदो माघो मोक्षदो वदरीवने ॥
पापहा दुःखहारी च सर्व्वकामफलप्रदः ।
रुद्रलोकप्रदो माघो नार्म्मदः पापनाशनः ॥
सारस्वतोऽघविध्वंसी ब्रह्मलोकफलस्तथा ।
विशालफलदो माघो विशालायां द्विजोत्तम ॥
पापेन्धनदवाग्निस्तु गर्भहेतुक्षयावहः ।
विष्णुलोकाय मोक्षाय जाह्नवः परिकीर्त्तितः ॥

---

१ ख, ग पुस्तकद्वये पापौघस्य क्षतस्यास्य । २ क पुस्तके प्रयागे-विदधद् । ३ ग पुस्तके विगर्भिता । ४ क पुस्तके तस्याङ्गम् ।

सरयूर्गण्डकी सिन्धुश्चन्द्रभागा च कौशिकी ।
तापी गोदावरी भीमा पयोष्णी कृष्णकौशिकी[१] ॥
कावेरी तुङ्गभद्रा च याश्चान्याश्च समुद्रगाः ।
तासु स्नायी नरो याति स्वर्गलोके विकल्मषः ॥
नैमिषे विष्णुसारूप्यं पुष्करे ब्रह्मणोऽन्तिकम् ।
आखण्डलस्य लोको हि कुरुक्षेत्रे च माघतः ॥
माघो देवह्रदे[२] विप्र योगसिद्धिफलप्रदः ।
प्रभासे मकरादित्ये माघे रुद्रगणो भवेत् ॥
देवक्यां देवतादेहो नरो भवति माघतः ।
माघस्नानेन भो विप्र गोमत्यामपुनर्भवः ॥
हेमकूटे महाकाले ॐकारे ह्यपरे तथा ।
नीलकण्ठार्व्वुदे माघाद्रुद्रलोके महीयते ॥
सर्व्वासां सरितां विप्र संप्लवे मकरे रवौ ।
स्नानेन सर्व्वकामानामवाप्तिर्जायते नृप ॥
माघस्तु प्राप्यते धन्यैः प्रयागे द्विजसत्तम ।
अपुनर्भवदं तत्र सितासितजलं यतः ॥

[३]गायन्ति देवाः सततं दिविष्ठा
माघः प्रयागे किल नो भविष्यति ।
स्नाता नरा यत्र न गर्भवेदनां
पश्यन्ति तिष्ठन्ति च विष्णुसन्निधौ ॥

---

१ क, ख कृष्णवेणिकी । २ क द्रवङ्कदः ।
३ ख पुस्तके श्लोकोऽयं पतितः ।

तथा—

तीर्थैर्व्रतैर्दानतपोभिरध्वरैः
सार्द्धं विधात्रा तुलया धृतः पुरा ।
माघः प्रयागस्य तयोर्द्वयोरभूत्
माघो गरीयांश्च तयोश्च सोऽधिकः ॥
वाय्वम्बुपर्णाशन-देहशोषणै-
स्तपोभिरुग्रैश्चिरकालसञ्चितैः ।
योगैश्च संयान्ति नराश्च यां गतिं
स्नानात् प्रयागस्य हि यान्ति तां गतिम् ॥
स्नाता हि ये माकरभास्करोदये
तीर्थे प्रयागे सुरसिन्धुसङ्गमे ।
तेषां गृहद्वारमलङ्करोति
भृङ्गावली कुञ्जरकर्णचालिता[१] ॥
यो राजसूयाद्ध्यमेधयज्ञतः
स्नानात् फलं सम्प्रददाति चाखिलम् ।
पापानि सर्व्वाणि विलुप्य लीलया
नूनं प्रयागः स कथं न वर्ण्यते ॥

तथा समयमात्रे च—

चतुर्वेदेषु यत्पुण्यं सत्यवादेषु चैव हि ।
स्नात एव तदाप्नोति गङ्गायामुनसङ्गमे ॥

---

१ ख, ग पुस्तकद्वये-ताड़िता ।

तथा—

तत्राभिषेकं कुर्व्वीत सङ्गमे संशितव्रतः ।
तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।
प्रवेशादस्य भूमौ तु अश्वमेधः पदे पदे ॥

तथा—

त्रीणि कुण्डानि राजेन्द्र तेषां मध्ये तु जाह्नवी ।
प्रयागस्य प्रवेशेन पापं नश्यति तत्क्षणात् ॥

त्रीणीति एकं प्रयागनगरे द्वितीयं प्रतिष्ठानगरे तृतीयं यमुनादक्षिणे अलर्कनगरे । कुण्डानि कूपा इत्यर्थः ।

तथा—

मासमेकन्तु स्नायीत प्रयागे नियतव्रतः ।
मुच्यते सर्व्वपापेभ्यो यथादिष्टं स्वयम्भुवा ॥
शुचिस्तु प्रयतो भूत्वा अहिंसः श्रद्धयान्वितः ।
मुच्यते सर्व्वपापेभ्यः स गच्छेत् परमं पदम् ॥

प्रयागस्तु ब्रह्मयूपोपलक्षितः प्रदेशः ।

तथा च मत्स्यपुराणे—

शृणु राजन् प्रयागस्य माहात्म्यं पुनरेव हि ।
नैमिषं पुष्करञ्चैव गोतीर्थं सिन्धुसागरम् ।
गया च [1]धेनुकञ्चैव गङ्गासागरमेव च ॥

---

[1] ख पुस्तके वेणकञ्चैव—मूले-चैत्रकञ्चैव ।

एते चान्ये च बहवो ये च पुण्याः शिलोच्चयाः ।
दशतीर्थसहस्राणि त्रिंशत्कोट्यस्तथा पराः ॥
प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः ।
त्रीणि चाप्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥
प्रयागादभिनिष्क्रान्ता सर्व्वतीर्थपुरस्कृता ।
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥
यमुना गङ्गया सार्द्धं सङ्गता लोकपावनी ।
गङ्गायमुनयोर्मध्ये पृथिव्यां यत्परं[1] स्मृतम् ॥
प्रयागं राजशार्द्दूल कलां नार्हन्ति षोड़शीम् ।
तिस्रः कोट्योऽर्द्धकोटिश्च[1] तीर्थानां वायुरब्रवीत् ॥
दिवि भुव्यन्तरीक्षे च तत्सर्व्वं जाह्नवी स्मृता ।
प्रयागं समधिष्ठाय कम्बलाश्वतरावुभौ ॥
भोगवत्यथ या चैषा वेदिरेषा प्रजापतेः ।
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तो युधिष्ठिर ॥
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ।
यजन्ते क्रतुभिर्देवा स्तथा चक्रधरा नृप ॥
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ।
प्रभावात् सर्व्वतीर्थेभ्यः प्रभवत्यधिकं विभो ॥
तथा दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् ।
मुच्यते सर्व्वपापेभ्यः शशाङ्क इव राहुणा ॥

---

१ ख-[illegible] ।

तथा—

ततो गत्वा प्रयागन्तु सर्व्वदेवाभिरक्षितम्।
ब्रह्मचारी[१] वसन्मासं पितॄन्देवांश्च तर्पयेत्॥
ईप्सितान् लभते कामान् यत्र यत्राभिजायते।

तथा—

सितासिते तु यो मज्जेदपि पापशतावृतः।
मकरस्थे रवौ माघे न स गर्भेषु मज्जति॥
दुर्ज्जया वैष्णवी माया देवैरपि सुदुस्त्यजा।
प्रयागे दह्यते सा तु माघे मासि नराधिप॥
तेषु तेषु च लोकेषु भुक्त्वा भोगाननेकशः।
पश्चाच्चक्रिणि लीयन्ते प्रयागे माघमज्जिनः॥
उपस्पृशति यो माघे मकरार्के सितासिते।
तस्य पुण्यस्य सङ्ख्यां नो चित्रगुप्तोऽपि वेत्त्यलम्॥
राजसूयसहस्रस्य राजन्नविकलं फलम्।
सितासिते तु माघे च स्नातानां भवति ध्रुवम्॥

तथा—

आकल्पजन्मभिः पापं सञ्चितं यन्नरैर्नृप।
तद्भवेद्भस्मसान्माघे स्नातानान्तु सितासिते॥

भविष्ये—

गङ्गायमुनयोश्चैव सङ्गमो लोकविश्रुतः।
स एव कामिकं तीर्थं तत्र स्नानेन भक्तितः॥

यस्य यस्य च यः कामस्तस्य तस्य भवेद्धि सः ।
भोगकामस्य भोगाः स्युः स्याद्राज्यं राज्यकामिनः ।
स्वर्गः स्यात् स्वर्गकामस्य मोक्षः स्यात् मोक्षकामिनः ॥
कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि च ।
तानि सर्व्वाणि सेवन्ते गङ्गायामुनसङ्गमम् ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ॥

भारते—

सितासिते तु यत् स्नानं माघे मासि युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥

मात्स्ये—

सत्यवादी जितक्रोधो अहिंसापरमास्थितः ।
धर्म्मानुसारी तत्त्वज्ञो गो-ब्राह्मणहिते रतः ॥
गङ्गा-यमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् ।
मनसा चिन्तितान् कामांस्तत्र प्राप्नोति पुष्कलान् ॥

पाद्मे—

स्वर्णभारसहस्रेण कुरुक्षेत्रे रविग्रहे ।
यत्फलं लभते माघे वेण्यां तच्च दिने दिने ॥

---

## अथ त्र्यहस्नानफलम् ।

मात्स्ये—

गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
प्रयागे माघमासे तु त्र्यहस्नातस्य तद्भवेत् ॥

तथा—

संवत्सरशतं साग्रं निराहारस्य यत्फलम् ।
प्रयागे माघमासे तु त्र्यहस्नातस्य तत्फलम् ॥

तथा—

योगाभ्यासेन यत्पुण्यं संवत्सरशतत्रये ।
प्रयागे माघमासे तु त्र्यहस्नानस्य तद्भवेत् ॥

तथा—

प्रयागे माघमासे तु यस्त्र्यहं स्नाति मानवः ।
पापं त्यक्त्वा दिवं याति जीर्णां त्वचमिवोरगः ॥

पाद्मे—

प्रयागे माघमासे तु त्र्यहस्नातस्य यत्फलम् ।
नाश्वमेधसहस्रेण तत्फलं लभते भुवि ॥

तथा—

त्र्यहस्नानफलं माघे पुरा काञ्चनमालिनी ।
राक्षसाय ददौ भूप तेन युक्तः स पापकृत् ॥
त्र्यहात्पापक्षयो जातः सप्तविंशतिभिर्दिनैः ।
शेषं मे यदभूत्पुण्यं तेन देवत्वमागता ॥
रममाणा[1] तु कैलासे गिरिजायाः प्रिया सखी ।

जातिस्मरा तथा जाता प्रयागस्य प्रसादतः ॥

तथा[१]—

मज्जन्ति येऽपि श्रहमत्र मानवा-
स्तीर्थे प्रयागे बहुपापकारकाः ।
मज्जन्ति ते नो निरयेषु धर्म्मतः
स्वर्गेऽपि ते चापि वसन्ति देववत् ॥

तथा—

अवन्तीविषये राजा वीरसेनोऽभवत्पुरा ।
नर्म्मदातीरमाश्रित्य राजसूयञ्चकार सः ॥
षोड़शैरश्वमेधैश्च स्वर्णवाढ़धिराजितैः ।
स्वर्णभूषणरौप्याद्यै रीजेसोपि[२] यथाविधि ॥
प्रददौ धान्यराशिञ्च द्विजेभ्यः पर्व्वतोपमम् ।
श्रद्धावान् देवताभक्तो गोप्रदः स सुवर्णदः ॥
ब्राह्मणो भद्रको नाम मूर्खो हीनकुलस्तथा ।
कृषीवलो दुराचारः सर्व्वधर्म्मबहिष्कृतः ॥
सीरकर्म्मसमुद्विग्नो बन्धुभिश्च स वञ्चितः ।
इतस्ततः परिक्रम्य निर्गतो वृष्टिपीड़ितः ॥
देवतासानुमाश्रित्य प्रयागं स समाश्रितः ।
महामाघीं पुरस्कृत्य सस्नौ तत्र दिनत्रयम् ॥
अनघः स्नानमात्रेण स भूत्वेह द्विजोत्तमः ।
प्रयागाच्चलितस्तत्र पुनर्यस्मात् समागतः ॥

---

१ ख, ग पद्यमिदं नास्ति । २ इष्टवान् स इति साधुः ।

स राजा सोऽपि विप्रश्च विपन्नावेकदा तदा ।
तयोर्गतिः समा दृष्टा मया गङ्गस्य सन्निधौ ॥
तेजो रूपं बलं स्त्रैणं देवयानं विभूषणम् ।
माला च पारिजातस्य नृत्यगीतं समन्तयोः ॥
इति दृष्ट्वा हि माहात्म्यं क्षेत्रस्य कथमुच्यते ।
माघः सितासिते विप्र राजसूयसमोऽनघः ॥

एतेषान्तु त्र्यहस्नानफलत्वे विकल्पो योगसिद्धिन्यायात् । परिग्रहस्त्वैच्छिक एव विनिगमकाभावात् ।

यत्तु—

त्र्यहसंकल्पक्रोड़ीकृतेऽपि माघसप्तमी-प्रातःस्नानादावसाधारणसंकल्पेन पुनस्तदैव प्रातःस्नानाचरणम् । तदयुक्तं तदा सकृत् स्नानस्यैव विहितत्वात् अन्यथा तत्त्र्यहफलकामनायां तदानन्त्यापत्तेः । कथं तर्हि दिवा नानातीर्थलाभे स्नानावृत्तिर्विशेषवचनादिति ।

त्र्यहसंकल्पस्तु प्रातःस्नानमात्रविषय इति शिष्टाः ।

तथा मत्स्यपुराणे—

धनुर्विंशतिविस्तीर्णे सितनीलाम्बुसङ्गमे ।
माघादपुनरावृत्ती राजसूयी भवेत् पुनः ॥
माघमासीयवातोऽपि सितासितजलं स्पृशन् ।
अधन्यान् स्पृशेन्नूनं महापातकहा हि सः ॥
कम्बलाश्वतरौ नागौ विपुले यमुनातटे ।
तत्र स्नात्वा च पीत्वा च मुच्येते सर्व्वपातकैः ॥
तत्र गत्वा च संस्थाने महादेवस्य धीमतः ।

नरस्तारयते पुंसो दशपूर्व्वान् दशावरान् ॥
कूपञ्चैव तु सामुद्रं प्रतिष्ठाने तु विश्रुतम् ।
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति ।
सर्व्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ।
उत्तरेण प्रतिष्ठानाद् भागीरथ्याश्च पूर्व्वतः ।
हंसप्रपतनन्नाम त्रिषु लोकेषु विश्रुतम् ।
अश्वमेधफलन्तत्र स्नानमात्रेण भारत ।
यावच्चन्द्रश्च सूर्य्यश्च तावत्स्वर्गे महीयते ॥

तथा—

ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु ।
दशाश्वमेधिकं नाम तत्तीर्थं परमं भवेत् ॥
कृत्वाभिषेकं तु नरः सोऽश्वमेधफलं लभेत् ।
धनाढ्यो रूपवान् दक्षो दाता भवति धार्म्मिकः ॥
चतुर्वेदेषु यत्पुण्यं सत्यवादेषु यत्फलम् ।
अहिंसायान्तु यो धर्म्मो गमनात्तत्र तत्फलम् ॥
तत्र भोगवती नाम वासुकेरुत्तरेण तु ।
तत्राभिषेकं यः कुर्य्यात् सोऽश्वमेधमवाप्नुयात्[१] ॥

तथा—

यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे ।
ऋणमोचनकं[२] नाम तीर्थन्तु परमं स्मृतम् ॥

---

१ ख पुस्तके फलं लभेत् ।

२ क ऋणप्रमोचकं—मूलग्रन्थे ऋणप्रमोचनं ।

एकरात्रोषितः स्नात्वा ऋणैः सर्व्वैः प्रमुच्यते ।
स्वर्गलोकमवाप्नोति अमृतश्च सदा भवेत् ॥

तथा—

विप्र-गो-घातकानान्तु प्रयागे शृणु यत्फलम् ।
त्रिकालमेव स्नायीत आहारं [1]युक्तमाचरेत् ।
त्रिभिर्मासैः प्रमुच्येत प्रयागे तु न संशयः ॥

तथा—

तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर ।
कीर्त्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ।
अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥

अत्र च प्रातःस्नानमरुणोदयवेलायां "प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्" इति विष्णुवचनात् ।

यत्तु—

माकरभास्करोदये इत्यादि वाक्यश्रवणात् सूर्य्योदयकालेऽपि प्रयागे प्रातःस्नानमिति । तन्न—

तस्य फलमात्रविधायकत्वेन कालाविधायकत्वात् सामीप्य-लक्षणया चैकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वात् ।

मकरस्थे रवौ माघे न स्नात्यनुदिते रवौ ।
कथं पापैः प्रमुच्येत कथं वा त्रिदिवं व्रजेत् ॥

इत्यादौ बहुत्र अनुदितस्नानश्रवणाच्च ।

मध्याह्नस्नानन्तु काम्यं प्रहरद्वयाभ्यन्तर एव "पूर्व्वाह्ण एव कुर्व्वीतेति वचनाच्च ।

---

१ ख, ग नक्तम् ।

## अथ मुण्डनम् ।

तत्र यद्यपि कल्पतरुकारेण प्रयागे मुण्डनं नोक्तं न वा तत्प्रमाणं दर्शितमिति तथापि बहुभिर्निबन्धृभिः परिगृहीतानि तु तत्तद्वचनान्युपसंगृह्यन्ते ।

तथाहि—

प्रयागे वपनं कुर्य्याद्गयायां पिण्डपातनम् ।
दानं दद्यात् कुरुक्षेत्रे वाराणस्यां तनुन्त्यजेत् ॥
किं गयापिण्डदानेन किं काश्याम्मरणेन वा ।
किं कुरुक्षेत्रदानेन प्रयागे मुण्डनं यदि ॥

अत्र प्रयागे वपनं कुर्य्यादिति विधिः । तत्र फलाकाङ्क्षायां रात्रिसत्रन्यायेनार्थवादिकमेव फलमन्वीयते ।

तच्च-किं गयापिण्डदानेनेत्यादिश्रवणात् गयापिण्डदानाज्जन्यं फलं तेन गयापिण्डदानजन्य-काशीमरणजन्य-कुरुक्षेत्रदानजन्य-फलकामोऽत्राधिकारी ।

इदन्तु चिन्त्यते—यद्यपि मुण्डनस्य परिवापनरूपतया तत्रानुवादेन फलनिर्द्देशान्न विहिते वपने फलान्वयः प्रतिभाति वपनवापनयोर्भेदात् तथापि विहितं कर्म्मानूद्यानुवादस्य तत्र फलमात्रसमर्पकतया विधेः प्राधान्यात् विहित एवात्र फलसम्बन्धः ।

नन्वेवं वप्तुः फलं स्यान्न वापयितुरिति चेन्न विधेरपि हि वापनपरत्वात्तेन कारयेदित्यर्थे कुर्य्यादिति णिचो लोपेन निर्द्देशः ।

नन्वेवं णिजगर्भितमेवार्थं स्फुटीकृत्य यथोक्तफलकामः प्रयागे वपनमहं कारयिष्ये इत्यभिलापः कार्य्यः—इति चेत्—

मत्यम्—

किन्तु प्रकृतिवद्विकृतिरिति न्यायेन प्रकृत्यनुसारेणैव करिष्ये शब्दाभिलापोऽत्रोचितः।

अतएव यत्र ऋत्विग्द्वारापीज्या निर्वाह्यते तत्रापि यजेतेति विध्यनुरोधाद् यजमानो यक्ष्ये इत्येवाभिलपति न तु याजयिष्ये इति केचित्।

तत्रोच्यते—प्रकृतिवद्विकृतिरिति हि विकृतियागेषु प्रकृतियागधर्म्मातिदेशो न तु लौकिकवाक्ये आर्षवाक्यस्थशब्दनियमविधिर्बेकृत्र व्यभिचारात्।

न च—"यथाश्रुति विहारे" इति श्रवणाद् यदेव पदं श्रुतं तदत्याज्यमिति वाच्यम्।

देवतापरशब्दस्यादृष्टोपयुक्तजप्यादिशब्दस्य च तथात्वात्। अयं त्वर्थपरः शब्दः। अर्थस्यैव वापनस्याच देशितत्वात्।

नन्वस्तु तथापि लुप्तणिच्कत्वमेव निर्द्दिश्यतां कुर्य्यादित्यत्रैवान्वयधीः स्यादिति चेत् हन्तैवं परिवापनस्य देशितत्वे अस्मदायत्ते हि शब्दप्रयोगे किमवाचकं प्रयोक्ष्यामहे इति न्यायात् कारयिष्ये इत्येवास्तु यक्ष्ये इति प्रयोगस्य न दृष्टान्तो वैषम्यात्।

तत्र हि देवतोद्देश्यकहविस्त्यागो यागः स च यजमानकर्त्तृक एव सम्बिभागपूर्व्वकस्तत्त्यागानुवादस्तत्त्यक्तद्रव्यप्रक्षेपफलको होमः स एव ऋत्विक्कर्त्तृकः।

अतएव ऋत्विजो याजका न तु यष्टारः। अतएव च विश्वामित्रस्त्रिशङ्कुं याजयामास इति टीकापीति दिक्।

एवं प्रयागावच्छिन्नगङ्गायामपि मुण्डनम् ।

केशानां यावती संख्या छिन्नानां जाह्नवीजले ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
यावन्ति नखलोमानि वायुना प्रेरितानि वै ।
पतन्ति जाह्नवीतोये नराणां पुण्यकर्म्मणाम् ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

इत्यादिभिः शिष्टपरिगृहीतैर्वचनैस्तत्रापि मुण्डनविधानात् । हन्तैवं स्वर्गफलकमिदं, मोक्षफलकञ्च प्रयागीयमुण्डनमनयोर्न तन्त्रेण प्रसङ्गेन वा युगपत्सिद्धिः नानाफलकामाधिकारिकत्वात् । कामनयोश्च युगपदसम्बन्धात्[1] । ततश्च क्रमाकाङ्क्षायां गङ्गामुण्डनमाद्यं गङ्गां प्राप्येत्यादिश्रवणात् प्राप्तमात्राधिकारिकत्वात् । प्रयागमुण्डने तु न तथा कालाश्रवणात्[2] ।

ननु प्रयागेऽपि च "मुण्डनं चोपवासञ्च" इत्यादिश्रुत्या मुण्डनोपवासयोरेककालीनत्वं प्राप्यते उपवासस्य तत्र प्राप्तिदिनकर्त्तव्य इति तत्र मुण्डनमपि तथाऽस्त्विति चेत्—

सत्यम्—उपवासमुण्डनयोर्द्वयोरपि तत्र प्राप्तिनिमित्तकत्वात्तस्य च मुण्डनस्य गङ्गामुण्डनेनैव काम्येन प्रसङ्गतो निर्वाहाच्च ।

यत्तु—

तत्र काम्यं मुण्डनं तदनियतकालमतो दिनान्तरे प्रयाग-

---

१ ख पुस्तके ऽसम्भवात् ।

२ ख० तत्र कालाश्रवणात् ।

मण्डलाभ्यन्तरे स्थले तदनुष्ठानं नन्विदं मुण्डनं केवलकाम्यञ्चेत् तत्र स्नानवत् प्रतिदिनमापद्येत ।

प्राप्तिनिमित्तकमिति चेत्—

प्रथमाह्न एव क्रियते निमित्त-कामनयोस्तदह्नरेव सन्निपातात् समयस्य चेपायोगादिति ।

अत्र केचित्—

संवत्सरं द्विमासोनं पुनस्तीर्थं व्रजेद्यदि ।

मुण्डनञ्चोपवासञ्च ततो यत्नेन कारयेत् ॥

इति वचनादेकोपाधिप्रयुक्तं मुण्डनं दशमासाभ्यन्तरे पुनस्तत्तीर्थे न कर्त्तव्यम् ।

न चैवं प्रयागीयप्रथममुण्डनमपि न स्यात्तस्यापि तदवच्छिन्न गङ्गामुण्डनापेचया द्वितीयत्वादिति वाच्यम् ।

तस्य प्रयागविहितस्य गङ्गामुण्डनेन भिन्नाधिकारिकेण प्रसङ्गतस्तन्त्रतो वा न निष्पत्तिरिति पृथगनुष्ठानस्य तत्र न्याय्यत्वादित्याहुः ।

तन्न—

एतद्वचनस्य निर्मूलत्वात् समूलत्वेऽपि प्राप्तिनिमित्तकमुण्डनपरत्वात्तन्निमित्तकोपवाससाहचर्य्याद्व्रजेदित्यभिधानाच्च इति ।

तत्रोच्यते—

गङ्गायां भास्करचेत्रे मुण्डनं यो न कारयेत् ।

स कोटिकुलसंयुक्त आकल्पं रौरवे पचेत् ॥

इत्यादिना अकरणे निन्दाश्रवणात्करणे फलश्रवणाच्च ।

प्रयागमुण्डनं नित्य-काम्यतया निष्पन्नम् ।

तच्च सकृत्करणादेव शास्त्रार्थसिद्धेरेकस्यां यात्रायामेकमेव नियतकालञ्चेत्यवसीयते । एवं तदवच्छिन्नगङ्गामुण्डनमपीति ।

अन्ये तु,—

प्रयाग-गङ्गयोः प्राप्तिनिमित्तकमेकैकं मुण्डनम्—

तथा स्वर्गफलमेकैकम्—अतो नैमित्तिकयोः काम्यप्रसङ्गेण काम्ययोश्च तन्त्रेणानुष्ठानमिति प्राप्तिदिन एव सकृदेव मुण्डनं प्रयागमण्डलाभ्यन्तरगङ्गायामिति चतुर्णामपि निर्वाह इत्याहुः ।

अत्र स्त्रीणां प्रयागप्राप्तानां मुण्डने प्राप्ते,—

सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् ।

एवमेव तु नारीणां मुण्डनं [1]वरमादिशेत् ॥

इत्यादेः प्रायश्चित्तप्रकरणे श्रुतस्याप्याकाङ्क्षातौल्येनान्यत्राप्यन्वयात् प्रयागेऽपि तासां द्व्यङ्गुलकेशाग्रकर्त्तनमात्रं वपनमिति वदन्ति ।

तन्न,—

केशमूलान्युपाश्रित्य सर्व्वपापानि देहिनाम् ।

तिष्ठन्ति तीर्थस्नानेन तस्मात्तान्यत्र वापयेत् ॥

इत्यादिना तीर्थे केशमूलवपनस्यैव विशिष्य विहितत्वादिति ।

अन्ये तु प्रयागप्राप्तिनिमित्तकमेव मुण्डनं फलश्रवणात् काम्यमपि भेदे प्रमाणाभावादेवं गङ्गाप्राप्तिनिमित्तकमपि फलश्रवणेन काम्यमपि, काम्यस्योभयत्र स्वर्ग एवेति ।

---

१ ग० मुख्यमुण्डनम् ।

स्वर्गपदेनोभयप्राप्तिनिमित्तत्वादुभयकामनासत्त्वाच्च प्राप्तिदिन एव तन्त्रेणोभयसिद्धिरित्याहुः।

तदयमत्र प्रयोगः।

अ(थ)क्तवैधयात्रेण प्राच्यां गौतमाश्रमात् प्राक् पूर्व्वदिने उषित्वा प्रवेशदिने प्रातःस्नानादि कृत्वा प्रयागप्रवेशनादिसङ्कल्पः करणीयः।

तद्यथा,—

ॐ अद्य प्रयागमण्डलभूम्यधिकरणकमत्कर्त्तव्यगमनपदसमसङ्ख्याश्वमेधफलप्राप्तिकामः प्रयागमण्डलप्रवेशपूर्व्वकतद्भूम्यधिकरणकगमनमहं करिष्ये।

इति सङ्कल्प्य प्रयागं प्राप्यादावुद्धृतोदकेन स्नात्वा ततः शुचिर्वेणीं प्रविश्य अमाघे,—

ॐ अद्य विष्णुपुरगमनकामो गङ्गायामुनसङ्गमे स्नानमहं करिष्ये इति सङ्कल्प्य स्वशाखोक्तविधिना तदज्ञाने सर्व्वसाधारणविधिना स्नायात्।

माघे तु,—

अद्य कुरुक्षेत्राधिकरणक रविग्रहकालीनब्राह्मणसम्प्रदानकसुवर्णभारसहस्रदानजन्यफलसमफलप्राप्तिकामो माघे वेण्यां स्नानमहं करिष्ये इति सङ्कल्प्य स्नायात्।

सितासितप्रवाहसम्भेदावच्छिन्न विंशतिधनुरवच्छिन्ने पश्चिमबाहिगङ्गाप्रवाहे यामुनप्रवाहकर्व्वूरे स्नाने,—

ॐ अद्यापुनरावृत्तिकामो माघे सितासिते स्नानमहं करिष्ये।

तत्रैव सत्यवादित्व जितक्रोधत्वाहिंसापरत्व धर्म्मानुसारित्व

तत्त्वज्ञत्व-गोब्राह्मणहितपरत्वविशिष्टस्य स्नाने किल्बिषविमुक्तिमन-स्विन्वितपुष्कलकामप्राप्तिः फलम्।

तदित्थं प्रयोगः,—

ॐ अद्य किल्बिषविमुक्ति-मोक्षप्राप्तिकामो गङ्गायमुनयोर्मध्ये स्नानमहं करिष्ये।

काम्यान्तरपक्षे मुक्तिपदमपहाय तदेव नामग्राहं प्रयोज्यम्।

अथैवं स्नात्वा नित्यकर्म्म देवार्च्चनान्तं कृत्वा,—

ॐ अद्य गङ्गापतिष्यद्यावच्छेदनीय केशलोमसमसङ्ख्य बहुवर्षा-वच्छिन्न स्वर्गलोकमहितत्त्वकामो गङ्गायां वपनमहं कारयिष्ये।

इति सङ्कल्प्य स्थलोपविष्टस्तथा वापयेद्यथा स्वयमेव केशादीनि गङ्गायां पतन्ति।

तत ॐ अद्य स्वर्गप्राप्तिकामस्तीर्थोपवासमहं करिष्ये। इत्युपवसेत्।

ब्रह्मलोकप्राप्तिः फलमस्येति केचित्।

ततः,—श्राद्धाधिकारिणा तीर्थप्राप्तिनिमित्तकं पार्व्वणञ्च कार्य्यम्। तदसम्पत्तौ षट्पुरुषपिण्डदानमपि। वस्तुतस्तु नैमित्तिक-तयाप्युपवासानुष्ठानसम्भवो विश्वजिन्न्यायेन फलकल्पनागौरवाद्य-मुपवासो निष्फल एव देशनाबलात्। ततस्तानेनैवोपवासेन सम्प-न्नाधिकारस्तदुत्तरदिने ऋणमोचनतीर्थे स्नायात्।

तथा हि,—कम्बलाश्वतरपूर्व्वे प्रयागग्रामभित्तिमभिव्याप्य उत्तर-कूलावच्छिन्नयमुनायामृणमोचनतीर्थम्। तत्र ॐ अद्य सकलर्ण-विमुक्तिस्वर्गलोकावाप्त्यमृतत्वकामः ऋणमोचनतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानतर्पणे कुर्य्यात्।

प्रातःस्नाने तु,—ॐ अद्य गजपतिमहाराजत्वभवनकामो गङ्गा-यमुनासङ्गमे माकरभास्करोदये स्नानमहं करिष्ये ।

ॐ संवत्सरशतावच्छिन्न[1] योगाभ्यासजन्यपुण्य-समपुण्यप्राप्ति-कामोऽद्यादि प्रयागे माघे अहं प्रातःस्नानमहं करिष्ये ।

तथा,—पापविमुक्तिपूर्व्वक स्वर्गगमनकामोऽद्यादि प्रयागे माघे अहं स्नानमहं करिष्ये ।

ओमद्याश्वमेधसहस्रजन्यफलसमफलप्राप्तिकामो अद्यादि प्रयागे माघे स्नानमहं करिष्ये ।

ॐ मुक्तिप्राप्तिकामोऽद्यादिप्रयागे माघे अहं स्नानमहं करिष्ये ।

तथा—ॐ सकलनिरयामज्जनदेववत्स्वर्गवासकामोऽद्यादि प्रयागे माघे स्नानमहं करिष्ये ।

तथा माघीसन्निहितअहस्नाने,—

ॐ सत्तीर्थकृतबहुसम्भार यथाविधिषोड़शाश्वमेध-ब्राह्मणसम्प्र-दानकपर्व्वतोपमधान्यराशिदान-देवताभक्ति-गोसुवर्णदानजन्यफल-समफलप्राप्तिकामोऽद्यादि प्रयागे अहं स्नानमहं करिष्ये ।

मध्यदेशीयास्तु पठन्ति,—

अमाऽर्कपातश्रवणैर्युक्ता चेत् पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः सूर्य्यपर्व्वशताधिकः ॥

पातो व्यतीपातः प्रात्यहिकयोगगणपठितः ।

---

१ ग० शतत्रयावच्छिन्न— ।

गौड़ास्तु,—अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।

प्रयागे यदि लभ्येत सहस्रार्कग्रहैः समा ॥

ज्योतिःशास्त्रे तु सामान्यतः,—

अयने कोटिपुण्यं स्यात् लक्षन्तु विषुवे फलम् ।

षड़शीत्यां सहस्रन्तु तथा विष्णुपदीषु च ॥ इति ।

अन्ये तु,—ये कालविशेषोपाधिना फलविशेषा गङ्गायां स्मर्य्यन्ते ते तत्प्रकरण एव प्रपञ्चिताः । ते च सातिशयास्तत्र द्रष्टव्याः ।

यमुनाया उत्तरकूले कम्बलाश्वतरसमीपे प्रयागपश्चिमे यमुनास्नाने—

ॐ अद्य सर्व्वपापविमुक्तिकामः कम्बलाश्वतरसमीपे यमुनायां स्नानमहं करिष्ये ।

इति सङ्कल्प्य स्नानतर्पणे तत्र कुर्य्यात् । अत्रैतज्जलपानेऽप्येतदेव फलमिति ।

इदन्तु स्नानं महादेवस्य सन्निधौ । एतद्गमने तु,—

ॐ अद्य दशपूर्व्वदशावरपुरुषतारणकामः कम्बलाश्वतरोपलक्षित यमुनातटरूपमहादेवस्थानगमनमहं करिष्ये इति सङ्कल्प्य तत्स्थानं यायात् ।

अथ वासुकेः समीपे दशाश्वमेधिकं नाम स्थलं, तद्गमने तु,—

ॐ अद्य चतुर्वेदाध्ययनजन्य सत्यवादितजन्याहिंसाजन्यफलसमफलप्राप्तिकामो दशाश्वमेधिकगमनमहं करिष्ये । इति सङ्कल्प्य तत्र गच्छेत् ।

तत्र स्नाने तु,—ओमश्वमेधजन्यफलसमफलप्राप्तिधनाढ्यत्व-

रूपवत्त्व-दक्षत्व-दातृत्व-धार्म्मिकत्व-भवनकामो दशाश्वमेधिकतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानतर्पणे कुर्य्यात्।

तत्रैव भोगवतीनदीस्नाने,—

ओमद्याश्वमेधजन्यफलसमफलप्राप्तिकामो भोगवत्यां स्नानमहं करिष्ये इति सङ्कल्प्य स्नानतर्पणे कुर्य्यात्।

गङ्गापूर्व्वकूले प्रतिष्ठानं नाम नगरम्। तत्रैव सामुद्रो नाम कूपः।

तत्र ब्रह्मचर्य्यवतो जितक्रोधस्य तत्फलम्।

विशुद्धात्मत्वाश्वमेधफलसमफलप्राप्तिकामोऽद्यादि त्रिरात्रं सामुद्रकूपसमीपेऽवस्थानमहं करिष्ये।

इति सङ्कल्प्य त्रिरात्रावस्थितिं कुर्य्यात्। ततः प्रतिष्ठानादुत्त-रस्मिन् गङ्गापूर्व्वतः हंसप्रपतनं नाम कुण्डं तत्र स्नाने,—

ओमद्याश्वमेधफलसमफलप्राप्ति चन्द्रसूर्य्यसमकालीनस्वर्गाधि-करणकमहीयमानत्वकामो हंसप्रपतने स्नानमहं करिष्ये। इति सङ्कल्प्य स्नानतर्पणे कुर्य्यात्।

प्रयागमण्डलावच्छिन्नयमुनास्नाने तु,—

ओमद्य सप्तकुलपवित्रीकरणकामः प्रयागमण्डलाभ्यन्तरयमु-नायां स्नानमहं करिष्ये इति सङ्कल्प्य स्नानतर्पणे कुर्य्यात्।

एतज्जलपानेऽप्येतदेव फलम्। यदा कदाचिन्मासव्यापिनि प्रयागावस्थाने ब्रह्मचर्य्ययुक्तस्य पितृदेवतर्पणशीलस्य तन्मज्जनकरणे स्वेष्टबहुकामलाभः फलम्।

यदा कदाचिन्मासस्नाने,—

ओमद्य सर्व्वपापविनिर्म्मुक्ति-परमपदप्राप्तिकामोऽद्यादि मासं

प्रयागे स्नानमहं करिष्ये। माघव्यापितत्स्नाने तु तत्तल्लोकाधि-करणकबहुभोगोपभोगपूर्व्वक चक्रिलीनत्वं फलम्।

तथाच—ॐ तत्तल्लोकाधिकरणक बहुभोगोपभोगपूर्व्वक चक्रि-लीनत्वकामोऽद्यादि माघं प्रयागे स्नानमहं करिष्ये।

इति सङ्कल्प्य माघं प्रत्यहं द्विकालं स्नायात्। प्रयागावच्छिन्न गङ्गामात्रस्नाने तु,—

श्रीमद्द्यावाद्युभूम्यन्तरीत्वाधिकरणक सार्द्धत्रिकोटीतीर्थस्नानजन्य-फलसमफलप्राप्तिकामः प्रयागावच्छिन्नगङ्गायां स्नानमहं करिष्ये इति सङ्कल्प्य तत्र स्नायात्।

अथ कस्मिन्नपि मासे कस्मिन्नपि दिने प्रयागमुण्डनं तच्च प्रयागनगराभ्यन्तरे ब्रह्मयूपसन्निधानादौ क्वापि शुचौ देशे कार्य्यम्। कारितगङ्गावपनस्यापि च तत्राधिकारः कामनाभेदादावश्यकत्वाच्च।

ॐ गयापिण्डदानजन्यफलसमफल काशीमरणजन्यफलसमफल कुरुक्षेत्रदानजन्यफलसमफलप्राप्तिकामः प्रयागे वपनमहं कारयिष्ये। इति सङ्कल्प्य स्थल एव कारयितव्यम्। केचित्तु नेदमाचरन्ति।

तथा च मात्स्ये,—

तत्र दानं प्रदातव्यं यथाविभवविस्तरम्।
तेन तीर्थफलञ्चैव वर्द्धते नात्र संशयः।
स्वर्गे तिष्ठति राजेन्द्र यावदाहूतसंप्लवम्॥

तथा मात्स्ये,—

गङ्गायमुनयोर्मध्ये यस्तु गां वै प्रयच्छति।
सुवर्णं मणिमुक्तां वा यदि वान्यं प्रतिग्रहम्॥

तथा तत्रैव,—

कपिलां पाटलवर्णां यस्तत्रैव प्रयच्छति।
स्वर्णशृङ्गीं रौप्यखुरां चेलकण्ठीं पयस्विनीम्॥
प्रयागे श्रोत्रियं साधुं ग्राहयित्वा यथाविधि।
शुक्लाम्बरधरं शान्तं धर्म्मज्ञं वेदपारगम्॥
सा च गौस्तस्य दातव्या गङ्गायामुनसङ्गमे।
वासांसि च महार्हाणि रत्नानि विविधानि च॥
यावन्ति रोमकूपानि तस्या गोर्वत्सकस्य च।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥
यत्रासौ लभते जन्म सा गौस्तत्राभिजायते।
न च पश्यन्ति नरकं दातारस्तेन कर्म्मणा॥
उत्तरांश्च कुरून् प्राप्य मोदते कालमक्षयम्।
गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम्॥
पुत्रान् दारांस्तथा भृत्यान् गौरेका प्रतिकारयेत्।
तस्मात् सर्व्वेषु दानेषु गोदानन्तु विशिष्यते॥
दुर्गमे विषमे घोरे महापातकसंक्रमे।
गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे॥

तदयमत्र प्रयोगः,—

ॐ सोपकरण-सवत्स-कपिलगव्यै नमः। ॐ ब्राह्मणाय नमः।

श्रीमद्यामुकनिमित्ते गङ्गायमुनसङ्गमे दातव्यगोवत्सोभयरोम-कूपसमसङ्ख्य बहुवर्षसहस्रावच्छिन्न स्वर्गलोकमहितत्व नरका-दर्शनोत्तरकुरुप्राप्तिपूर्व्वकाक्षयकालहर्ष बहुपुत्रदारभृत्यप्राप्तिपूर्व्वक-

विषमघोरमहापातकसंक्रमपरित्राणकाम इमां कपिलां सुवर्णशृङ्गीं रौप्यखुरां चेलकण्ठीं पयस्विनीं सवत्सां महार्हवस्त्रविविधवस्त्र-रत्नान्वितां गां रुद्रदैवतां अमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

इति दद्यात्। ततः स्वस्तीति प्रतिवचनम्।

ततः,— ॐ अद्य कृतैतत् सोपकरणसवत्सकपिलगवीदानप्रति-ष्ठार्थमिदं सुवर्णमग्निदैवतं अमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय तुभ्यं दक्षिणामहं सम्प्रददे।

ततः स्वस्तीत्युक्त्वा प्रतिग्रहीता पुच्छं गृहीत्वा यथाशाखं कामस्तुतिं कुर्य्यात्।

तद्यथा ऋग्वेदे,—

क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु।

यजुर्वेदे,—

द्यौस्त्वां ददातु पृथिवी त्वा प्रतिगृह्णातु इत्यनेन प्रतिगृह्य,—

कोऽदात् कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामैतत्ते।

सामवेदे,—

क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वां प्रतिगृह्णामि कामैतत्ते।

अथर्व्ववेदे,—

क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वां प्रतिगृह्णामि कामैतत्ते भूमिस्त्वा प्रतिगृह्णातु अन्तरीक्षमिदं महत् माहन्प्रागेन।

दानान्तरेषु तीर्थफलवृद्धिर्यावदाहूतसंप्लवस्वर्गस्थितिश्च फलम्।

तथा मात्स्ये,—

गङ्गायमुनयोर्मध्ये यस्तु गां प्रतिपद्यते।
सुवर्णमणिमुक्तां वा यदि वान्यत् प्रतिग्रहम्॥
स्वकार्य्ये पितृकार्य्ये वा देवताभ्यर्च्चनेऽपि वा।
विफलन्तस्य तत्तीर्थं यावत्तद्धनमश्नुते॥
तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु वा।
निमित्तेषु च सर्व्वेषु न प्रमत्तो भवेन्नरः॥

निमित्तेषु च संक्रान्त्यादिषु न प्रमत्तः प्रमादशून्यः समाहित इति यावत्।

तथाच तीर्थप्रतिग्रहे तत्तीर्थप्रतिगृहीतधनस्थितिपर्य्यन्तं तत्तीर्थस्नानादौ प्रतिग्रहीतुः स्वर्गफलजनकं न भवति इति तीर्थमात्रप्रतिग्रहे साधारणो दोषः। गङ्गादौ त्वसाधारणो दोषोऽपि स गङ्गाप्रकरणे वक्ष्यते।

तीर्थं गङ्गादि आयतनं पुरुषोत्तमादि। तथा कौर्म्मे,—

गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति।
न स पश्यति घोरन्तु नरकं तेन कर्म्मणा॥
उत्तरांश्च कुरून् गत्वा मोदते कालमक्षयम्।

पुत्रदारांश्च लभते धार्म्मिकान् रूपसंयुतान् ॥

एवञ्च कन्यादानवाक्यं—इमां कन्यां प्रजापतिदैवतामित्यन्तं पठित्वा घोरनरकादर्शनोत्तरकुरुगमनानन्तराक्षयकालहर्ष-धार्म्मिकरूपसंयुक्तबहुपुत्रदारप्राप्तिकामः पत्नीत्वेनाहं सम्प्रददे इति प्रयोक्तव्यम् ।

प्रयागे धूमपाने तत्रैव,—

अधःशिरास्तु यो धूममूर्द्ध्वबाहुः पिबेन्नरः ।
शतं वर्षसहस्राणां स्वर्गलोके महीयते ॥
परिभ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः ।
भुक्त्वा तु विविधान् भोगान् तत्तीर्थं लभते पुनः ॥

---

## अथ मरणफलम् ।

मत्स्यपुराणे,—

आप्रयागप्रतिष्ठानात् यत्पुरो वासुकिह्रदात् ।
कम्बलाश्वतरौ नागौ नागाश्च बहुमूलकात्[१] ॥
एतत् प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

ऋग्वेदोऽपि,—

सितासिते सरितो यत्र सङ्ग-
स्तत्राप्लुता सो दिवमुत्पतन्ति ।
ये वै तनुं विसृजन्ति धीरा-
स्ते वै जनासोऽमृतत्वं भजन्ते ॥

अत्र प्रजापतिक्षेत्रे यस्य मरणं भवति स मोक्षभाग्भवतीत्यर्थः । दशतीर्थवतीत्यर्थः । काम्यमप्यत्र मरणं तत्र च सर्व्ववर्णाना-मधिकारः ।

तदुक्तम् पाद्मे,—

न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागे मरणं प्रति ॥
दशतीर्थसहस्राणि षष्टिकोट्यस्तथापराः ।
तत्रैव तेषां सान्निध्यं कीर्त्तितं कुरुनन्दन ॥
या गतिर्योगयुक्तस्य सत्यस्थस्य धीमतः ।
सा गतिस्त्यजतः प्राणान् गङ्गायामुनसङ्गमे ॥

---

१ ग न गाश्च प्रङ्कमूलकात् ।

व्याधितो यदि वा दीनो क्रु[द्ध]द्धो वापि भवेन्नरः ।
गङ्गायमुनमासाद्य यस्तु प्राणान् परित्यजेत् ॥
दीप्तकाञ्चनवर्णाभैर्विमानैः सूर्य्यवर्च्चसैः ।
गन्धर्व्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ॥
ईप्सितान् लभते कामान् वदन्ति ऋषिपुङ्गवाः ।
सर्व्वरत्नमयं दिव्यं नानाध्वजसमाकुलम् ॥
वराङ्गनासमाकीर्णं विमानं शुभलक्षणम् ।
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥
यावन्न स्मरते जन्म तावत् स्वर्गे महीयते ।
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्म्मा दिवश्च्युतः ॥
हिरण्यरत्नसम्पूर्णे समृद्धे जायते कुले ।
तदेव स्मरते तीर्थं स्मरणात्तत्र गच्छति ।

तथा,—

वटमूलं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्व्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥
(?) तत्र वै द्वादशादित्यास्तं ते रुद्रं समाश्रिताः ।
निर्दहन्ति जगत् सर्व्वं वटमूलो न दह्यते ॥

वटोऽक्षयवटः—

हरिश्च भगवांस्तत्र प्रजापतिपुरस्कृतः ।

अस्तीति शेषः । तथा मात्स्ये,—

उर्व्वशीपुलिने रम्ये विपुले हंसपाण्डरे ।
परित्यजति यः प्राणान् शृणु तस्यापि यत्फलम् ॥

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
वसेत् स पितृभिः सार्द्धं स्वर्गलोके नराधिप ॥
उर्व्वशीञ्च सदा पश्येद्देवलोके नरोत्तमः ।
पूज्यते सततं देवै ऋषि-गन्धर्व्व-किन्नरैः ॥
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्म्मा दिवश्च्युतः ।
उर्व्वशीसदृशा(शी)नान्तु कन्यानां लभते शतम् ॥
मध्ये नारीसहस्राणां बह्वनाञ्च पतिर्भवेत् ।
दश-ग्रामसहस्राणां भोक्ता भवति भूमिपः ॥
काञ्ची-नूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते ।
भुक्ता तु विपुलान् भोगान् तत्तीर्थं लभते पुनः ॥

तथा,— शुक्लाम्बरधरो नित्यं नियतः संयतेन्द्रियः ।
एककालन्तु भुञ्जानो मासं भोगपतिर्भवत् ॥
सुवर्णालङ्कृतानाञ्च नारीणां लभते शतम् ।
पृथिव्यामासमुद्रायां महाभोगपतिर्भवेत् ॥
धनधान्यसमायुक्तो दाता भवति नित्यशः ।
स भुक्ता विपुलान् भोगान् तत्तीर्थं स्मरते पुनः ॥

तथा,— कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ।
कोटिं वर्षसहस्राणां स्वर्गलोके महीयते ॥
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्म्मा दिवश्च्युतः ।
सुवर्णमणिमुक्ताढ्ये कुले जायेत रूपवान् ॥

तथा,— अकामो वा सकामो वा गङ्गायां यो विपद्यते ।
मृतस्तु लभते स्वर्गं नरकञ्च न पश्यति ॥

[1][अप्सरोगणसङ्गीतैः सुप्तोऽसौ प्रतिबुध्यते ।
हंस-सारसयुक्तेन विमानेन स गच्छति ॥
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्म्मा दिवश्च्युतः ।
सुवर्णमणिमुक्ताढ्ये जायेत विपुले कुले ॥

तथा,— गङ्गायमुनयोर्मध्ये करीषाग्निन्तु धारयेत् ।]
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥
यावन्ति रोमकूपानि तस्य गात्रे तु धीमतः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ।
स भुक्त्वा विपुलान् भोगान् तत्तीर्थं लभते पुनः ॥

तथा,— यस्तु देहं निकृत्य स्वं शकुनिभ्यः प्रयच्छति ।
विहगैरुपभुक्तस्य शृणु तस्यापि यत्फलम् ॥
शतं वर्षसहस्राणां सोमलोके महीयते ।
तस्मादपि परिभ्रष्टो राजा भवति धार्म्मिकः ॥
गुणवान् रूपसम्पन्नो विद्वांश्च प्रियवादकः ।
भुक्त्वा तु विपुलान् भोगान् तत्तीर्थं लभते पुनः ॥

तथा तत्रैव पाद्मे,—
शृणु राजन् प्रयागे तु अनाशकफलं विभो ।
प्राप्नोति पुरुषो धीमान् श्रद्दधानो जितेन्द्रियः ॥
अश्वमेधफलं तस्य गच्छतस्तु पदे पदे ।
कुलानि तारयेद्राजन् दश-पूर्व्वान् दशावरान् ॥

---

१ ख ग पुस्तकद्वये [ ] चिह्नितांशः पतितः ।

मुच्यते सर्व्वपापेभ्यो गच्छति परमं पदम् ॥

तथा,— पञ्चयोजनविस्तीर्णे प्रयागस्य तु मण्डले ।

व्यतीतान् पुरुषान् सप्त भाविनस्तु चतुर्द्दश ।

नरस्तारयते सर्व्वान् यस्तु प्राणान् परित्यजेत् ॥

तथा,— येनैव निःसृता गङ्गा तेनैव यमुना गता—

इत्युपक्रम्य,—

प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् ।

अग्नितीर्थमिति ख्यातं दक्षिणे यमुनातटे ॥

पश्चिमं धर्म्मराजस्य तीर्थन्तु नरकं स्मृतम् ।

तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

तथा यमुनोत्तरतटं प्रक्रम्य,—

अन्ये च बहवस्तीर्थाः सर्व्वपापहराः स्मृताः ।

तेषु स्नाता दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

गङ्गा च यमुना चैव उभे तुल्यफले स्मृते ।

केवलं ज्येष्ठभावेन गङ्गा सर्व्वत्र पूज्यते ॥

तथा,— जन्मान्तरसहस्रेण योगो लभ्येत वा न वा ।

तथा योगसहस्रेण योगो लभ्येत वा न वा ॥

यस्तु सर्व्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति ।

तेन दानेन दत्तेन योगो लभ्येत वा न वा ॥

प्रयागे तु मृतस्येदं सर्व्वं भवति नान्यथा ।

प्रयागं स्मरतोऽन्यत्रापि मरणे फलन्तत्रैव,—

देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे ।

प्रयागं स्मरमाणोऽपि यस्तु प्राणान् परित्यजेत् ॥
ब्रह्मलोकमवाप्नोति वदन्ति ऋषिपुङ्गवाः ।
सर्व्वकामफला वृक्षा मही यत्र हिरण्मयी ॥
ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति ।
स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ॥
मोदते ऋषिभिः सार्द्धं स्वकृतेनेह कर्म्मणा ।
सिद्धचारणगन्धर्व्वैः पूज्यते दिवि दैवतैः ॥
ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ।
ततः शुभानि कर्म्माणि चिन्तयानः[१] पुनः पुनः ॥
गुणवान् वित्तसम्पन्नो भवतीति न संशयः ।
कर्म्मणा मनसा वाचा तस्य धर्म्मो व्यवस्थितः ॥

इति श्रीवाचस्पतिमिश्रविरचिते तीर्थचिन्तामणौ
प्रथमः प्रयागप्रकाशः ॥

---

१ ख चिन्तमानः

## अथ पुरुषोत्तमादिविधिः ।

तत्र ब्रह्मपुराणे ब्रह्मर्षिसम्बादे ब्रह्मवाक्यम्,—

पृथिव्यां भारतं वर्षं कर्म्मभूमिरुदाहृता ।
न खल्वन्यत्र मर्त्यानां भूमौ कर्म्म विधीयते ॥
तत्रास्ते भारते वर्षे दक्षिणोदधिसंस्थितः ।
ओड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः ॥
समुद्रादुत्तरं तावद् यावद्विरजमण्डलम् ।
देशोऽसौ पुण्यशीलानां गुणैः सर्व्वैरलङ्कृतः ॥
सन्ति तीर्थानि पुण्यानि पुण्यान्यायतनानि च ।
उत्कले तु मुनिश्रेष्ठ वेदितव्यानि तानि वै ॥
समुद्रस्योत्तरे तीरे तस्मिन् देशे द्विजोत्तमाः ।
आस्ते गुह्यं परं स्थानं मुक्तिदं पापनाशनम् ॥
सर्व्वत्र वालुकाकीर्णं पवित्रं सर्व्वकामदम् ।
दशयोजनविस्तीर्णं क्षेत्रं परमदुर्लभम् ॥
नदी तत्र महापुण्या विन्ध्यपादविनिर्गता ।
चित्रोत्पलेति[1] विख्याता सर्व्वपापहरा शुभा ॥

तथा,—

नक्षत्राणां यथा सोमः सरसां सागरो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वसूनां पावको यद्वद्रुद्राणां शङ्करो यथा ।

---

१ ग चित्रोत्कलेति ।

तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
[1][ शिखरिणां यथा मेरुः पर्व्वतानां हिमालयः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सेनानीनां यथा स्कन्दः सिद्धानां कपिलो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
ऐरावतो गजेन्द्राणां महर्षीणां भृगुर्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
उच्चैःश्रवा यथाश्वानां कवीनामुशना यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
मुनीनाञ्च यथा व्यासः कुवेरो यक्ष-रक्षसाम् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
[2][ इन्द्रियाणां मनो यद्वद्भूतानामवनी यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अश्वत्थः सर्व्ववृक्षाणां पवनः पवतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ]
अरुन्धती यथा स्त्रीणामस्त्राणां कुलिशो यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अकारः सर्व्ववर्णानां गायत्री छन्दसां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥ ]
वर्णानां ब्राह्मणो यद्वत् वैनतेयश्च पक्षिणाम् ।

---

१ कपुस्तके [ ] चिह्नित श्लोका न दृश्यन्ते ।

२ ग पुस्तके [ ] चिह्नितश्लोकाः पतिताः ।

तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रमदानां यथा लक्ष्मीः सरितां जाह्नवी यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सर्व्वाङ्गेभ्यो यथा श्रेष्ठमुत्तमाङ्गं द्विजोत्तमाः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
यथा समस्तविद्यानां मोक्षविद्या परा स्मृता ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
मनुष्याणां यथा राजा धेनूनामपि कामधुक् ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
भूषणानान्तु सर्व्वेषां यथा चूड़ामणिर्वरः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सुवर्णं सर्व्वरत्नानां सर्पाणां वासुकिर्यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
प्रह्लादः सर्व्वदैत्यानां रामः शस्त्रभृतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
झषाणां मकरो यद्वन्मृगाणां मृगराड् यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
वरुणो यादसां यद्वद्यमः संयमतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
समुद्राणां यथा श्रेष्ठः क्षीरोदः सरितां पतिः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
देवर्षीणां यथा श्रेष्ठो नारदो द्विजसत्तमाः ।

तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
पुरोधसां यथा जीवः कालः कलयतां यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
धनानां काञ्चनं यद्वत् पवित्राणां च दक्षिणा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
अश्वमेधस्तु यज्ञानां यथा श्रेष्ठः प्रकीर्त्तितः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
ओषधीनां यथा धान्यं तृणेषु तृणराड् यथा ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
यथा समस्तधर्म्माणां धर्म्मः संसारतारकः ।
तथा समस्ततीर्थानां वरिष्ठं पुरुषोत्तमम् ॥
सत्यं सत्यं पुनः सत्यं क्षेत्रं तत् परमं महत् ।
पुरुषाख्यं सकृद्दृष्ट्वा सागराम्भः सकृन्मृतम् ।
ब्रह्मविद्यां सकृद् ज्ञात्वा[1] गर्भवासो न विद्यते ॥

एतत् क्षेत्रदर्शनस्य-तथा सागराम्भसि मरणस्य-तथा ब्रह्मविद्याबोधस्य च प्रत्येकं गर्भवासाभावः फलमित्यर्थः ।

एवं सर्व्वगुणोपेतं क्षेत्रं परमदुर्लभम् ।
आस्ते तत्र मुनिश्रेष्ठा विख्यातं पुरुषोत्तमम् ॥
यत्र तिष्ठति देशे स विश्वात्मा पुरुषोत्तमः ।
जगद्व्यापी जगन्नाथस्तत्र सर्व्वं प्रतिष्ठितम् ॥

---

१ ख ज्ञात्वा ।

अहं रुद्रश्च शक्रश्च देवाश्चाग्निपुरोगमाः।
निवसामो मुनिश्रेष्ठास्तस्मिन् देशे सदा वयम्॥
गन्धर्व्वाप्सरसः सिद्धाः पितरो देवमानुषाः॥
यक्षा विद्याधराः सर्व्वे मुनयः शंसितव्रताः।
ऋषयो वाल[1]खिल्याद्याः कश्यपाद्याः प्रजेश्वराः॥
गन्धर्व्वाः किन्नरा नागास्तथाऽन्ये स्वर्गवासिनः।
साङ्गाश्च चतुरो वेदाः शास्त्राणि विविधानि च॥
इतिहासपुराणानि यज्ञाश्च [2]सहदक्षिणाः।
नद्यश्च विविधाः पुण्यास्तीर्थान्यायतनानि च॥
सागराश्च तथा शैलास्तस्मिन् देशे व्यवस्थिताः।
एवं पुण्यतमे देशे देवर्षिपितृसेविते॥
सर्व्वोपभोगसहिते वासः कस्य न रोचते।
श्रेष्ठत्वन्तस्य देशस्य किमन्यदधिकं[3] ततः॥
आस्ते तत्र स्वयं देवो मुक्तिदः पुरुषोत्तमः।
धन्यास्ते विबुधप्रख्या ये वसन्त्युत्कले नराः[4]॥
तीर्थराजजले स्नात्वा पश्यन्ति पुरुषोत्तमम्।
स्वर्गे वसन्ति ते मर्त्त्या न तु ते वै यमालये[5]।
ये वसन्त्युत्कले क्षेत्रे पुण्ये श्रीपुरुषोत्तमे॥
सफलं जीवितं तेषामुत्कलानां सुमेधसाम्।

---

१ क पुस्तके वालिखिल्याद्याः। २ ग पुस्तके वरदक्षिणाः।
३ क पुस्तके किञ्चान्यमधिकं ततः। ख-किञ्चान्यत्।
४ ग शुभे। ५ कग पुस्तके—ते राजसालये।

ये पश्यन्ति सुताम्रोष्ठं[1] प्रसन्नायतलोचनम्।
चारुभ्रुकेशमुकुटं चारुकर्णलताञ्चितम्[2]॥
सुनासं सुकपोलञ्च सुललाटं सुलक्षणम्।
त्रैलोक्यानन्दजननं कृष्णस्य मुखपङ्कजम्॥
पुरा कृतयुगे विप्राः शक्रतुल्यपराक्रमः।
बभूव नृपतिः श्रीमानिन्द्रद्युम्न इति श्रुतः॥
सत्यवादी शुचिर्दक्षः सर्व्वशस्त्रभृतां वरः।
रूपवान् सुभगः शूरो दाता भोक्ता प्रियम्वदः॥
यष्टा समस्तयज्ञानां ब्रह्मण्यः सत्यसङ्गरः।
धनुर्वेदे च वेदे च शास्त्रे च निपुणः कृती॥
वल्लभो [3]नरनारीणां पौर्णमास्यां यथा शशी।
आदित्य इव दुष्प्रेक्ष्यो मधुरश्चन्द्रमा इव॥
वैष्णवः सत्यसम्पन्नो जितक्रोधो जितेन्द्रियः।
अध्यात्मविद्यानिरतो[4] मुमुक्षुर्धर्म्मतत्परः॥
एवं सोऽपालयत् पृथ्वीं राजा सर्व्वगुणाकरः।
तस्य बुद्धिः समुत्पन्ना विष्णोराराधनं प्रति
कथमाराधयिष्यामि देवदेवं जनार्द्दनम्।
कस्मिन् क्षेत्रेऽथवा तीर्थे नदीतीरे तथाश्रमे॥
एवं चिन्तापरः सोऽथ निरीक्ष्य मनसा महीम्।

---

१ ग—सुरश्रेष्ठम्। २ ख—कर्णालकाञ्चितम्।
३ ख पुस्तके अमरनारीणाम्। घ—वरनारीणाम्।
४ ग पुस्तके अध्येता योगसांख्यानां।

आलोक्य सर्व्वतीर्थानि क्षेत्राण्यायतनानि च[1] ॥
तानि सर्व्वाणि सञ्चिन्त्य जगाम मनसा पुनः।
विख्यातं परमं क्षेत्रं मुक्तिदं पुरुषोत्तमम् ॥
स गत्वा नृपतिस्तत्र समृद्धबलवाहनः।
अयजच्चाश्वमेधेन विधिवद्भूरिदक्षिणः[2] ॥
कारयित्वा महोत्सेधं प्रासादं [3]भुवि विश्रुतम्।
तत्र सङ्कर्षणं कृष्णं सुभद्रां स्थाप्य वीर्य्यवान् ॥
पञ्चतीर्थञ्च विधिवत् कृत्वा तत्र महीपतिः।
स्नानं दानं जपं होमं देवताप्रेक्षणं तथा ॥
भक्त्या चाराध्य विधिवत् प्रत्यहं पुरुषोत्तमम्।
प्रसादाद्देवदेवस्य ततो मोक्षमवाप्तवान् ॥

ऋषय ऊचुः—

तस्मिन् क्षेत्रवरे रम्ये वैष्णवे पुरुषोत्तमे।
किन्तत्र प्रतिमा पूर्व्वं न स्थिता वैष्णवी प्रभो! ॥
येनासौ नृपतिस्तत्र गत्वा सबलवाहनः।
स्थापयामास कृष्णञ्च रामं भद्रां शुभप्रदाम् ॥
संशयो नो महांस्तत्र विस्मयश्च जगत्पते।
श्रोतुमिच्छामहे सर्व्वं ब्रूहि तत् कारणञ्च यत् ॥

ब्रह्मोवाच—

शृणुध्वं पूर्व्वसंवृत्तां कथां पापप्रणाशिनीम्।

---

१ घ पुस्तके क्षेत्राणि च पुराणि च।
२ क पुस्तके भूरिदक्षिणाम्।  ३ घ—भुरि—।

ये पश्यन्ति सुताम्रोष्ठं[१] प्रसन्नायतलोचनम्।
चारुभ्रुकेशमुकुटं चारुकर्णलताञ्चितम्[२]॥
सुनासं सुकपोलञ्च सुललाटं सुलक्षणम्।
त्रैलोक्यानन्दजननं कृष्णस्य मुखपङ्कजम्॥
पुरा कृतयुगे विप्राः शक्रतुल्यपराक्रमः।
बभूव नृपतिः श्रीमानिन्द्रद्युम्न इति श्रुतः॥
सत्यवादी शुचिर्दक्षः सर्व्वशस्त्रभृतां वरः।
रूपवान् सुभगः शूरो दाता भोक्ता प्रियम्वदः॥
यष्टा समस्तयज्ञानां ब्रह्मण्यः सत्यसङ्गरः।
धनुर्वेदे च वेदे च शास्त्रे च निपुणः कृती॥
वल्लभो [३]नरनारीणां पौर्णमास्यां यथा शशी।
आदित्य इव दुष्प्रेक्ष्यो मधुरश्चन्द्रमा इव॥
वैष्णवः सत्यसम्पन्नो जितक्रोधो जितेन्द्रियः।
अध्यात्मविद्यानिरतो[४] मुमुक्षुर्धर्म्मतत्परः॥
एवं सोऽपालयत् पृथ्वीं राजा सर्व्वगुणाकरः।
तस्य बुद्धिः समुत्पन्ना विष्णोराराधनं प्रति
कथमाराधयिष्यामि देवदेवं जनार्द्दनम्।
कस्मिन् क्षेत्रेऽथवा तीर्थे नदीतीरे तथाश्रमे॥
एवं चिन्तापरः सोऽथ निरीक्ष्य मनसा महीम्।

---

१ ग—सुरश्रेष्ठम्। २ ख—कर्णालकाञ्चितम्।
३ ख पुस्तके अमरनारीणाम्। घ—वरनारीणाम्।
४ ग पुस्तके अध्येता योगसांख्यानां।

आलोक्य सर्व्वतीर्थानि क्षेत्राण्यायतनानि च[१] ॥
तानि सर्व्वाणि सञ्चिन्त्य जगाम मनसा पुनः।
विख्यातं परमं क्षेत्रं मुक्तिदं पुरुषोत्तमम् ॥
स गत्वा नृपतिस्तत्र समृद्धबलवाहनः।
अयजच्चाश्वमेधेन विधिवद्भूरिदक्षिणः[२] ॥
कारयित्वा महोत्सेधं प्रासादं [३]भुवि विश्रुतम्।
तत्र सङ्कर्षणं कृष्णं सुभद्रां स्थाप्य वीर्य्यवान् ॥
पञ्चतीर्थञ्च विधिवत् कृत्वा तत्र महीपतिः।
स्नानं दानं जपं होमं देवताप्रोक्षणं तथा ॥
भक्त्या चाराध्य विधिवत् प्रत्यहं पुरुषोत्तमम्।
प्रसादाद्देवदेवस्य ततो मोक्षमवाप्तवान् ॥

ऋषय ऊचुः—

तस्मिन् क्षेत्रवरे रम्ये वैष्णवे पुरुषोत्तमे।
किन्तत्र प्रतिमा पूर्व्वं न स्थिता वैष्णवी प्रभो! ॥
येनासौ नृपतिस्तत्र गत्वा सबलवाहनः।
स्थापयामास कृष्णञ्च रामं भद्रां शुभप्रदाम् ॥
संशयो नो महांस्तत्र विस्मयश्च जगत्पते।
श्रोतुमिच्छामहे सर्व्वं ब्रूहि तत् कारणञ्च यत् ॥

ब्रह्मोवाच—

शृणुध्वं पूर्व्वसंवृत्तां कथां पापप्रणाशिनीम्।

---

१ घ पुस्तके क्षेत्राणि च पुराणि च।

२ क पुस्तके भूरिदक्षिणाम्। ३ घ—भुरि—।

प्रवक्ष्यामि समासेन श्रिया पृष्टः पुरा हरिः ॥
सुमेरोः काञ्चने शृङ्गे सर्व्वाश्चर्य्यसमन्विते ।
तत्र स्थितं जगन्नाथं जगत्स्रष्टारमव्ययम् ॥
प्रणम्य शिरसा देवी लोकानां हितकाम्यया
पप्रच्छेदं महाप्रश्नं भूमौ स्थानमनुत्तमम् ॥

श्रीरुवाच—

ब्रूहि त्वं सर्व्वलोकेश संशयं मे हृदि स्थितम् ।
मर्त्त्यलोके महाश्चर्य्ये कर्म्मभूमौ सुदुर्लभे ॥
लोभमोहग्रहग्राहकामक्रोधमहार्णवे ।
येन मुच्यन्ति देवेश नराः संसारसागरात् ॥
आचक्ष्व सर्व्वदेवेश प्रणतां यदि मन्यसे ।
त्वदृते नास्ति लोकेऽस्मिन् वक्ता संशयनिर्णये ॥

ब्रह्मोवाच—

श्रुत्वैवं वचनं तस्या देवदेवो जनार्द्दनः ।
प्रोवाच परया प्रीत्या परं सारामृतोपमम् ॥
सुखोपायः सुसाध्यश्च निरायासो महाफलः ।
आस्ते तीर्थवरो देवि विख्यातः पुरुषोत्तमः ॥
न तेन सदृशः कश्चित्त्रिषु लोकेषु विद्यते ।
कीर्त्तनादस्य देवेशि मुच्यते सर्व्वपातकैः ॥
न विज्ञातोऽमरैः सर्व्वैर्न दैत्यैर्न च दानवैः ॥
मरीच्याद्यैर्मुनिवरैर्गोपितं मे वरानने ।
दक्षिणस्योदधेस्तीरे न्यग्रोधो यत्र तिष्ठति ॥

यस्तु कल्पे समुत्पन्ने महदुल्कानिवर्हणे ।
विनाशं नैवमभ्येति स्वयं तत्रैवमास्थितः ॥
दृष्टमात्रे चैव तस्मिन् छायामाक्रम्य वा सकृत् ।
ब्रह्महत्या प्रमुच्येत पापेष्वन्येषु का कथा ॥
प्रदक्षिणं कृतं यैस्तु नमस्कारस्तु जन्तुभिः ।
सर्व्वे विधूतपापास्ते गताः स्युः केशवालयम् ॥
न्यग्रोधस्योत्तरे तीरे दक्षिणे[1] केशवस्य तु ।
प्रासादं तत्र तिष्ठेत पदं धर्म्ममयं हि तत् ॥
प्रतिमां तत्र तां दृष्ट्वा स्वयं देवेन निर्म्मिताम् ।
अनायासेन वै यान्ति भुवनं[2] मे ततो नराः ॥
गच्छमानांस्तु तान् दृष्ट्वा एकदा धर्म्मराट् प्रिये ।
मदन्तिकमनुप्राप्य प्रणम्य शिरसाऽब्रवीत् ॥

यम उवाच—

नमस्ते भगवन् देव लोकनाथ जगत्पते ।
क्षीरोदवासिनं देवं शेषभोगोपशायिनम् ॥
वरं वरेण्यं वरदं कर्त्तारमक्षयं विभुम् ।
विश्वेश्वरमजं विष्णुं सर्व्वज्ञमपराजितम् ॥
नीलोत्पलदलश्यामं पुण्डरीकनिभेक्षणम् ।
सर्व्वज्ञं निर्गुणं शान्तं जगद्धातारमव्ययम् ॥
सर्व्वलोकविधातारं सर्व्वलोकसुखावहम् ।

---

१ कख पुस्तकद्वये किञ्चित् ।        २ ग पुस्तके भवनम् ।

पुराणं पुरुषं वेद्यं व्यक्ताव्यक्तं सनातनम् ॥
परापराणां स्रष्टारं लोकनाथं जगद्गुरुम् ।
श्रीवत्सोरसि[1] संयुक्तं वनमालाविभूषितम् ॥
पीतवस्त्रं चतुर्बाहुं शङ्खचक्रगदाधरम् ।
हारकेयूरसंयुक्तं मुकुटाङ्गदधारिणम् ॥
सर्व्वलक्षणसंयुक्तं सर्व्वेन्द्रियविवर्ज्जितम् ।
कूटस्थमचलं सूक्ष्मं ज्योतीरूपं सनातनम् ॥
भावाभावविनिर्मुक्तं व्यापिनं प्रकृतेः परम् ।
तं नमस्ये जगन्नाथमीश्वरं सुखदं प्रभुम् ॥
इत्येवं धर्म्मराजस्तु पुरा न्यग्रोधसन्निधौ ।
स्तुत्वा नानाविधैः स्तोत्रैः प्रणाममकरोत्तदा ॥
तं दृष्ट्वा तु महाभागे प्रणतं प्राञ्जलिं स्थितम् ।
स्तोत्रस्य कारणं देवि पृष्टवानहमन्तकम् ॥

भगवानुवाच—

वैवस्वत महाबाहो सर्व्वदेवमयो ह्यसि ।
किमर्थं स्तुतवानित्थं[2] संक्षेपात्तद्ब्रवीहि मे ॥

यम उवाच—

अस्मिन्नायतने पुण्ये विख्याते पुरुषोत्तमे ।
इन्द्रनीलमयी [3]सृष्टा प्रतिमा सर्व्वकामिका(की) ॥
तां दृष्ट्वा पुण्डरीकाक्ष भावेनैकेन श्रद्धया ।

---

१ ग पुस्तके श्रीवत्सोरस्क — ।  २ ग पुस्तके स्तुतवान् मां त्वं ।
३ क पुस्तके-श्रेष्ठा......सर्व्वकालिकी ।

श्वेताख्यं भुवनं यान्ति निष्कामास्तेव मानवाः ॥
अतस्तेनमशक्नोमि[1] व्यापारमरिसूदन ।
प्रसीद सुमहादेव संहर प्रतिमां प्रभो ॥
श्रुत्वा वैवस्वतस्यैतद्वाक्यमेतदुवाच ह[2] ।
यम तां गोपयिष्यामि सिकताभिः समन्ततः ॥
ततः सा प्रतिमा देवि वल्लिभिर्गोपिता मया ।
तथा तत्र न पश्यन्ति मनुजाः स्वर्गकाङ्क्षिणः ॥
प्रच्छाद्य वल्लिकैर्देवि जातरूपपरिच्छदैः ।
यमं प्रस्थापयामास स्वां पुरीं दक्षिणां दिशम् ॥

[3]ब्रह्मोवाच—

लुप्तायां प्रतिमायान्तु इन्द्रनीलस्य वै तदा ।
तस्मिन् क्षेत्रवरे पुण्ये विख्याते पुरुषोत्तमे ॥
यत् कृतं तत्र वृत्तान्तं देवदेवो जनार्द्दनः ।
तत् सर्व्वं कथयामास तस्मै स भगवान् पुरा ॥
इन्द्रद्युम्नस्य गमनं क्षेत्रसन्दर्शनन्तथा ।
क्षेत्रस्य वर्णनञ्चैव व्युष्टिं तस्य च भो द्विजाः ॥
दर्शनं बलदेवस्य कृष्णस्य च विशेषतः ।
सुभद्रायाश्च तत्रैव माहात्म्यं चैव सर्व्वशः ॥
दर्शनं नरसिंहस्य व्युष्टिसंकीर्त्तनं तथा ।

---

१ घ—अतः कर्त्तुं न शक्नोमि ।
२ कख पुस्तकद्वये-अस्माभिरुक्तवान् ।
३ कखग चिह्नितपुस्तकत्रये—ब्रह्मोवाच वाक्यं नास्ति ।

स्थापनञ्चैव प्रासादे सर्व्वेषां भुवनोत्तमे ।
अनन्तवासुदेवस्य दर्शने गुणकीर्त्तनम् ॥
श्वेतमाधवमाहात्म्यं स्वर्गद्वारस्य वर्णनम् ।
उदधिदर्शनं चैव स्नानं तर्पणमेव च ॥
समुद्रस्नानमाहात्म्यं इन्द्रद्युम्नस्य भो द्विजाः ।
पञ्चतीर्थफलञ्चैव महाज्यैष्ठ्यां तथैव च ॥
[1]स्नानं कृष्णस्य हलिनः [2]सर्व्वयात्राफलं तथा ।
वर्णनं विष्णुलोकस्य क्षेत्रस्य च पुनः स्वयम् ॥
पूर्व्वं कथितवान् तथ्यं तस्यै स पुरुषोत्तमः ।

ऋषय ऊचुः—

ब्रूहि नो देवदेवेश यत् पृच्छामि पुरातनम् ।
यथा ताः प्रतिमाः पूर्व्वमिन्द्रद्युम्नेन निर्म्मिताः ॥
केन चैव प्रकारेण तुष्टस्तस्मै स माधवः ।
तत् सर्व्वं वद चास्माकं परं कौतुहलं हि नः ॥

ब्रह्मोवाच—

शृणुध्वं मुनिशार्द्दूलाः पुराणं वेदसम्मितम् ।
कथयामि पुरावृत्तं प्रतिमानाञ्च सम्भवम् ॥
प्रवृत्ते च महायज्ञे प्रासादे च विनिर्म्मिते ।
चिन्ता तस्य बभूवाथ प्रतिमार्थमहर्निशम् ॥
न वेद्मि केन देवेश सर्व्वेषां लोकभावनम् ।
स्वर्गस्थित्यन्तकर्त्तारं पश्यामि पुरुषोत्तमम् ॥

---

१ ग स्थानं । २ घ—पर्व्वयात्रा ।

चिन्ताविष्टस्तभूद्राजा दिवारात्रौ न शेरते ।
न भुङ्क्ते विविधान् भोगान् न च स्नानं प्रसाधनम् ॥
शैलमृद्दारुजा वापि प्रशस्ता या महीतले ।
विष्णोः प्रतिमयोग्यास्तु सर्व्वलक्षणलक्षिताः ॥
एतेषां वै त्रयाणान्तु प्रशस्तं यत् सुरार्च्चितम् ।
स्थापिते प्रीतिमभ्येति इति चिन्तापरोऽभवत् ॥
पञ्चरात्रविधानेन सम्पूज्य पुरुषोत्तमम् ।
चिन्ताविष्टो महीपालः संस्तोतुमुपचक्रमे ॥

इन्द्रद्युम्न उवाच—

वासुदेव नमस्तेऽस्तु नमस्ते मोक्षकारण ।
त्राहि मां सर्व्वलोकेश जन्मसंसारसागरात् ॥
निर्मलाम्बरसङ्काश नमस्ते पुरुषोत्तम ।
सङ्कर्षण नमस्तेऽस्तु त्राहि मां धरणीधर ॥
नमस्ते हेमगर्भाभ नमस्ते मकरध्वज ।
रतिकान्त नमस्तेऽस्तु त्राहि मां सम्बरान्तक ॥
नमस्तेऽञ्जनसङ्काश नमस्ते भक्तवत्सल ।
अनिरुद्ध नमस्तेऽस्तु त्राहि मां वरदो भव ॥
नमस्ते विबुधावास नमस्ते विबुधप्रिय ।
नारायण नमस्तेऽस्तु त्राहि मां शरणागतम् ॥
नमस्ते बलिनां श्रेष्ठ नमस्ते लाङ्गलायुध ।
नमस्ते विबुधश्रेष्ठ नमस्ते कमलोद्भव ॥
चतुर्मुख जगद्धाम त्राहि मां प्रपितामह ।

नमस्ते नीलमेघाभ नमस्ते चिद्गणार्च्चित ॥
त्राहि विष्णो जगन्नाथ मग्नं मां भवसागरे।
प्रलयानलसङ्काश नमस्ते दितिजान्तक ॥
नरसिंह महावीर्य्य त्राहि मां दीप्तलोचन।
यथा रसातलाच्चोर्व्वी त्वया दंष्ट्रोद्धृता पुरा ॥
तथा महावराह त्वं त्राहि मां दुःखसागरात्।
तवैता मूर्त्तयः कृष्ण वरदाः संस्तुता मया ॥
त्वमेव[1] बलदेवाद्याः पृथग्रूपेण संस्थिताः।
अङ्गानि तव देवेश गरुड़ाद्यास्तथा प्रभो ॥
दिक्पालाः सायुधाश्चैव वासवाद्यास्तथाच्युत।
ये चान्ये तव देवेश भेदाः प्रोक्ता मनीषिभिः ॥
तेऽपि सर्व्वे जगन्नाथ प्रसन्नायतलोचन।
मयार्च्चिताः स्तुताः सर्व्वे तथा यूयं नमस्कृताः ॥
प्रयच्छध्वं वरं मह्यं धर्म्मकामार्थमोक्षदम्।
भेदास्ते कीर्त्तिता ये तु हरे सङ्कर्षणादयः ॥
तव पूजानुसम्बद्धास्ते त्वयि च समाश्रिताः।
न भेदस्तव देवेश विद्यते परमार्थतः ॥
विविधं तव यद्रूपमुक्तं तदुपचारतः।
अद्वैतं त्वां कथं द्वैतं वक्तुं शक्नोति मानवः ॥
एकस्त्वं हि हरे व्यापी चित्स्वभावो[2] निरञ्जनः।

---

१ गघ पुस्तकद्वये त्वञ्च मे। २ व पुस्तके विम्बभावः।

परमं तव यद्रूपं भावाभावविवर्ज्जितम् ॥
निर्लेपं निर्मलं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
सर्व्वोपाधिविनिर्मुक्तं सत्तामात्रव्यवस्थितम् ॥
त्वां देवा हि न जानन्ति कथं जानाम्यहं प्रभो ।
अपरं तव यद्रूपं पीतवस्त्रं चतुर्भुजम् ॥
शङ्खचक्रगदापाणिं मुकुटाङ्गदधारिणम् ।
श्रीवत्सोरस्कसंयुक्तं[१] वनमालाविभूषितम् ॥
तदर्च्चयन्ति विबुधा ये चान्ये तव संश्रयाः ।
देव सर्व्वसुरश्रेष्ठ भक्तानामभयप्रद ॥
त्राहि मां चारुपद्माक्ष मग्नं विषयसागरे ।
नान्यं पश्यामि लोकेश यस्याहं शरणं व्रजे ॥
त्वामृते कमलाकान्त प्रसीद मधुसूदन ।
जराव्याधिशतैर्युक्तो नानादुःखैर्निपीड़ितः ॥
हर्षशोकान्वितो मूढ़ः कर्म्मपाशैः सुयन्त्रितः ।
पतितोऽहं महारौद्रे घोरे संसारसागरे ॥
विषयोदकदुष्पारे रागद्वेषझषाकुले[२] ।
इन्द्रियावर्त्तगम्भीरे तृष्णाशोकोर्म्मिसङ्कुले ॥
निराश्रये निरालम्बे निःसारेऽत्यन्तचञ्चले ।
मायया मोहितस्तत्र भ्रमामि सुचिरं प्रभो ॥
नानाजातिसहस्रेषु जायमानः पुनः पुनः ।

---

१ ख ग पुस्तके श्रीवत्सोरसि— ।  २ क — समाकुले ।

मया जन्मान्यनेकानि सहस्राण्ययुतानि च ॥
विविधान्यनुभूतानि संसारेऽस्मिन् जनार्द्दन।
वेदाः साङ्गा मयाधीताः शास्त्राणि विविधानि च।
इतिहासपुराणानि तथा शिल्पान्यनेकशः।
असन्तोषाश्च सन्तोषाः सञ्चयापचया व्ययाः॥
मया प्राप्ता जगन्नाथ चयवृद्ध्युदयेतराः[1]।
भार्य्यारिमित्रबन्धूनां वियोगाः सङ्गमास्तथा॥
पितरो विविधा दृष्टा मातरश्च तथा मया।
दुःखानि चानुभूतानि मया सौख्यान्यनेकशः॥
प्राप्ताश्च बान्धवाः पुत्रा भ्रातरो ज्ञातयस्तथा।
मयोषितं तथा स्त्रीणां कोष्ठे विण्मूत्रपिच्छिले॥
गर्भवासे महद्दुःखमनुभूतं तथा प्रभो।
दुःखानि यान्यनेकानि बाल्ययौवनगोचरे।
वार्द्धके च हृषीकेश तानि प्राप्तानि वै मया॥
मरणे यानि दुःखानि यममार्गे यमालये।
मया तान्यनुभूतानि नरके यातनाकुले[2]॥
कृमिकीटद्रुमाणाञ्च हस्त्यश्वमृगपक्षिणाम्।
महिषाणां गवाञ्चैव तथान्येषां वनौकसाम्॥
द्विजातीनाञ्च सर्व्वेषां शूद्राणाञ्चैव योनिषु।
धनिनां [3]श्रोत्रियाणाञ्च दरिद्राणां तपस्विनाम्॥

---

१ घ क्षयवृद्ध्यक्षयेतराः। २ घ पुस्तके यातनास्तथा।
३ ख – घ पुस्तकद्वये क्षत्रियाणाञ्च।

नृपाणां नृपभृत्यानां तथान्येषाञ्च देहिनाम्।
गृहेषु तेषामुत्पन्नो देव चाहं पुनः पुनः॥
गतोऽस्मि दासतां नाथ भृत्यतां बहुशो नृणाम्।
दरिद्रत्वं चेश्वरत्वं स्वामित्वञ्च तथा गतः॥
हतं मया हतश्चान्यैर्घातितं घातितस्तथा।
दत्तं ममान्यैरन्येभ्यो मया दत्तमनेकशः॥
पितृ-मातृ-सुहृद्बन्धु कलत्राणां कृतेन च।
अहं कृत्वाऽसकृद्दैन्यमश्रुधौताननो गतः॥
देव तिर्य्यङ्मनुष्येषु चरेषु स्थावरेषु च।
न विद्यते च तत्स्थानं यत्राहं न गतः प्रभो॥
कदा मे नरके वासः कदा स्वर्गे जगत्पते।
कदा मनुष्यलोकेषु कदा तिर्य्यग्गतेषु च॥
जलयन्त्रे यथा चक्रे घटी रज्जुनिबन्धिनी।
याति चोर्द्धमधश्चैव कदा मध्ये च तिष्ठति॥
तथा चाहं सुरश्रेष्ठ कर्म्मरज्जुसमाश्रितः।
अधश्चोर्द्धं तथा मध्ये गच्छामि भ्रमयोगतः॥
एवं संसारचक्रेऽस्मिन् भैरवे लोमहर्षणे।
भ्रमामि सुचिरं कालं नान्तं पश्यामि कर्हिचित्॥
न जाने किं करोम्यद्य हरे व्याकुलितेन्द्रियः।
शोकतृष्णाभिभूतस्य कां दिशं याम्यचेतनः[१]॥

---

१ क कीदृग्भूतो विचेतनः।

इदानीं त्वामहं देव विक्लवः शरणं गतः ।
त्राहि मां दुःखितं कृष्ण मग्नं संसारसागरे ॥
कृपां कुरु जगन्नाथ भक्तोऽयं[1] यदि मन्यसे ।
त्वदृते नास्ति मे बन्धु र्योऽसौ चिन्तां करिष्यति ॥
देव त्वां नाथमासाद्य न भयं मेऽस्ति कुत्रचित् ।
जीविते मरणे चैव योगक्षेमे तथा प्रभो ॥
ये तु त्वां विधिवद्देव नार्च्चयन्ति नराधमाः ।
सुगतिस्तु कथं तेषां भवेत् संसारबन्धनात् ॥
किं तेषां निष्कृतिस्तस्मात् विद्यते नरकार्णवात् ।
ये दूषयन्ति दुर्वृत्तास्त्वां देव पुरुषाधमाः ॥
यत्र यत्र भवेज्जन्म मम कर्म्मनिबन्धनात् ।
तत्र तत्र हरे भक्तिस्त्वयि तात[2] दृढ़ा सदा ॥
आराध्य त्वां परं दैत्या नराश्चान्येऽपि संयताः ।
अवापुः परमां सिद्धिं कस्त्वां देव न पूजयेत् ॥
न शक्नुवन्ति ब्रह्माद्याः स्तोतुं त्वां प्रकृतेः परम् ।
तथा चाज्ञानभावेन संस्तुतोऽसि मया प्रभो ॥
तत् क्षमस्वापराधं मे यदि तेऽस्ति दया मयि ।
कृतापराधेऽपि हरे क्षमां कुर्व्वन्ति साधवः ॥
तस्मात् प्रसीद देवेश भक्तस्तेऽहं समाश्रितः ।
स्तुतोऽसि यन्मया देव भक्तिभावेन चेतसा ।
साङ्गं भवतु तत् सर्व्वं वासुदेव नमोऽस्तु ते ॥

---

१ घ पुस्तके भक्तं मां ।　　२ घ चास्तु ।

ब्रह्मोवाच—

इत्थं स्तुतस्तदा तेन प्रसन्नो गरुड़ध्वजः।
ददौ तस्मै मुनिश्रेष्ठाः सफलं मनसेप्सितम्॥
यः सम्पूज्य जगन्नाथं प्रत्यहं स्तौति मानवः।
स्तोत्रेणानेन मतिमान् स मोक्षं लभते ध्रुवम्॥
त्रिसन्ध्यं यो जपेद्विद्वानिदं स्तोत्रवरं शुचिः।
धर्म्मञ्चार्थञ्च कामञ्च मोक्षञ्च लभते नरः॥
यः पठेत् शृणुयाद्वापि श्रावयेद्वा समाहितः।
स लोकं शाश्वतं विष्णोर्याति निर्धूतकल्मषः॥
धन्यं पापहरञ्चेदं [1]भक्ति-मुक्तिप्रदं शुभम्।
गुह्यं सुदुर्लभं पुण्यं न देयं यस्य कस्यचित्॥
न नास्तिकाय मूर्खाय[2] न कृतघ्नाय मानिने।
न दुष्टमतये दद्यान्नाभक्ताय कदाचन॥
दातव्यं भक्तियुक्ताय गुणशीलान्विताय च।
विष्णुभक्ताय शान्ताय श्रद्धानुष्ठानशालिने॥

इदं समस्ताघविनाशहेतुः
कारुण्यसंज्ञं सुखमोक्षदञ्च।
अशेषवाञ्छाफलदं वरिष्ठम्
स्तोत्रं मयोक्तं पुरुषोत्तमस्य॥

---

१ घ भुक्ति—।
२ ग घ पुस्तकद्वये नास्तिकाय न मूर्खाय।

ये तं सुसूक्ष्मं विशदाम्बराभम्
ध्यायन्ति नित्यं पुरुषं पुराणम् ।
ते मुक्तिभाजः प्रविशन्ति विष्णुम्
मन्त्रैर्यथाऽऽज्यं हुतमध्वराग्नौ ॥
एकः स देवो भवदुःखहन्ता
परः परेषां न ततोऽस्ति चान्यः ।
स्रष्टा स पाता स तु चान्तकर्त्ता
विष्णुः समस्ताखिलसारभूतः ॥
किं विद्यया किं [1]सुगुणैश्च तेषाम्
यज्ञैश्च दानैश्च तपोभिरुग्रैः ।
येषां न भक्तिर्भवतीह कृष्णे
जगद्गुरौ मोक्षसुखप्रदे च ॥
लोके स धन्यः स शुचिः स विद्वान्
मखैस्तपोभिः स गुणैर्वरिष्ठः ।
यज्वा[2] स दाता स तु सत्यवक्ता
यस्यास्ति भक्तिः पुरुषोत्तमाख्ये ॥
स्तुत्वैवं मुनिशार्दूलाः प्रणम्य च सनातनम् ।
वासुदेवं जगन्नाथं सर्व्वकामफलप्रदम् ॥
चिन्ताविष्टो महीपालः कुशानास्तीर्य्य भूतले ।
वस्त्रञ्च तन्मना भूत्वा सुष्वाप धरणीतले ॥

---

१ क स्वगुणैश्च। २ क ख पुस्तकद्वये ज्ञाता।

कथं प्रत्यक्षमभ्येति देवदेवो जनार्द्दनः ।
मम चार्त्तिहरो देवस्तदाऽसाविति चिन्तयन् ॥
सुप्तस्य तस्य नृपतेर्वासुदेवो जगद्गुरुः ।
आत्मानं दर्शयामास स्वप्ने तस्मै स चक्रधृक्[१] ॥
स ददर्श तु स्वप्ने वै देवदेवं जगद्गुरुम् ।
शङ्खचक्रधरं देवं गदापद्माग्रपाणिनम् ॥
शार्ङ्गवाणासियुक्तञ्च ज्वलत्तेजोऽग्रमण्डलम् ।
युगान्तादित्यवर्णाभं नीलवैदूर्य्यसन्निभम् ॥
सुपर्णपृष्ठमासीनं षोड़शार्द्धभुजं शुभम् ।
तच्चासौ प्राब्रवीद्धीराः साधु राजन् महामते ॥
क्रतुनाऽनेन दिव्येन तथा भक्त्या च श्रद्धया ।
तुष्टोऽस्मि ते महीपाल वृथा किमनुशोचसि ॥
यदत्र प्रतिमा राजन् राजपूज्या सनातनी ।
यथा तां प्राप्स्यते भूप तदुपायं ब्रवीमि ते ॥
गतायामद्य शर्व्वर्य्यां निर्म्मले भास्करोदये ।
सागरस्य जलस्यान्ते नानाद्रुमविभूषिते ॥
जलं तथैव वेलायां दृश्यते यत्र वै महत् ।
लवणस्योदधे राजन् तरङ्गैः समभिप्लुतम् ॥
कूलालम्बी महावृक्षः स्थितः स्थलजलेषु च ।
वेलाभिर्हन्यमानश्च न चासौ कम्पते ध्रुवम्[२] ॥

---

१ घ पुस्तके समञ्चवत् । २ क द्रुमः ।

[1]परशुमादाय हस्तेन उर्म्मिरन्तस्ततो व्रज।
एकाकी विहरन्नाजन् यं त्वं पश्यसि पादपम्॥
इदं चिह्नं समालोक्य छेदय त्वमशङ्कितः[2]।
शात्यमानन्तु तं वृक्षं प्रांशुमद्भुतदर्शनम्॥
दृष्ट्वा तेनैव सञ्चिन्त्य तदा भूपाल दर्शनात्[3]।
कुरु तां प्रतिमां दिव्यां जहि चिन्तां विमोहिनीम्॥
एवमुक्त्वा महाभागो जगामादर्शनं हरिः।
स चापि स्वप्नमालोक्य परं विस्मयमागतः॥
तां निशां समुदीक्षन् स[4] स्थितस्तद्गतमानसः।
व्याहरन्नात्मवान् मन्त्रान् सूक्तञ्चैव तदात्मकम्॥
प्रभातायां रजन्यान्तु तद्गतो नान्यमानसः।
स स्नात्वा सागरे सम्यक् यथावद्विधिना ततः॥
दत्त्वा दानञ्च विप्रेभ्यो ग्रामांश्च नगराणि च।
कृत्वा पूर्व्वाह्णिकं कर्म्म जगाम स नृपोत्तमः॥
न रथो न पदातिश्च न गजो न च सारथिः।
एकाकी स महावेलां प्रविवेश महीपतिः॥
तं ददर्श महावृक्षं तेजस्वन्तं महाक्रमम्।
महान्तिकं समारोहं[5] पुण्यं विपुलमेव च॥

---

१ क—पुस्तके पर्शुं। २ ख छेदयन्नपशङ्कितः।
३ ख पुस्तके तथा हस्तनिदर्शनं ग—दर्शनम्।
४ खघ पुस्तकद्वये समुदीक्ष्य स।
५ गघ— महातिग महारोहम्....विफलमेव च।

महोत्सेधं महाकायं प्रसुप्तञ्च जलान्तिके।
[1]सान्द्रमाञ्जिष्ठवर्णाभं नामजातिविवर्जितम्॥
नरनाथस्तथा विष्णोर्द्रुमं दृष्ट्वा मुदान्वितः।
परशुना घातयामास शितेन च दृढ़ेन च॥
द्वैधीभूतमतिस्तत्र बभूवेन्द्रसखस्तथा।
निरिच्यमाणे काष्ठे तु बभूवाद्भुतदर्शनम्॥
विश्वकर्म्मा च विष्णुश्च विश्वरूपधरावुभौ।
आजग्मतुर्महात्मानौ तदा तुल्याग्रजन्मनौ॥
ज्वलमानौ [2]स्वतेजोभिर्दिव्यस्रग्गन्धलेपनौ।
अथ तौ तं समागम्य नृपमिन्द्रसखन्तदा॥
तावब्रूतां महाराज किमत्र त्वं करिष्यसि।
किमर्थं ते महाबाहो घातितस्तु वनस्पतिः॥
असहायो महादुर्गे निर्ज्जने गहने वने।
महासिन्धुतटे चैव कथं वै घातितो द्रुमः।
तयोः श्रुत्वा वचो विप्राः स तु राजा मुदान्वितः॥
बभाषे वचनं ताभ्यां मृदूनि मधुराणि च।
दृष्ट्वा तौ ब्राह्मणौ तत्र चन्द्रसूर्य्याविवागतौ॥
नमस्कृत्य जगन्नाथाववाङ्मुखत्वमास्थितः[3]।

राजोवाच—

देवदेवमनाद्यन्तमनन्तं जगतःपतिम्॥

---

१ क साद्रं। २ घ पुस्तके सुतेजोभिः

३ क पुस्तके जगन्नाथमब्रवीत्तमवस्थितः।

आराधनाय प्रतिमां करोमीति मतिर्म्मम ।
अहं स देवदेवेन परमेण महात्मना ॥
स्वप्नान्ते च समुद्दिष्टो भवद्भ्यां आवितं मया ।

ब्रह्मोवाच—

राज्ञस्तु वचनं श्रुत्वा देवेन्द्रप्रतिमस्य च ॥
प्रहस्य तस्मै विश्वेशस्तुष्टो वचनमब्रवीत् ।

भगवानुवाच—

साधु साधु महीपाल यदेतन्मन[1] उत्तमम् ॥
संसारसागरे घोरे कदलीदलसन्निभे ।
निःसारे दुःखबहुले कामक्रोधसमाकुले ॥
इन्द्रियावर्त्तकलिले दुस्तरे लोमहर्षणे ।
नानाव्याधिशतावर्त्ते जलबुद्बुदसन्निभे ॥
यतस्ते मतिरुत्पन्ना विष्णोराराधनाय वै ।
धन्यस्त्वं नृपशार्द्दूल गुणैः सर्व्वैरलङ्कृतः ॥
सप्रजा पृथिवी धन्या सशैलवनकानना ।
सपुरग्रामनगरा चतुर्वर्णैरलङ्कृता ॥
यत्र त्वं नृपशार्द्दूल प्रजापालयिता प्रभुः ।
एह्येहि सुमहाभाग द्रुमेऽस्मिन् सुखशीतले ॥
आवाभ्यां सह तिष्ठ त्वं कथाभिर्धर्म्मसंश्रितः ।
अयं मम सहायस्तु आगतः शिल्पिनां वरः ॥

---

१ घ— मतमुत्तमम् ।

विश्वकर्म्मसमः साक्षात् निपुणः सर्व्वकर्म्मसु।
मयोद्दिष्टास्तु प्रतिमाः करोत्येष तटं त्यज॥

ब्रह्मोवाच—

श्रुत्वैवं वचनं तस्य तदा राजा द्विजन्मनः।
सागरस्य तटं त्यक्त्वा गत्वा तस्य समीपतः॥
तस्थौ स नृपतिश्रेष्ठो वृक्षच्छायां सुशीतलाम्।
ततस्तस्मै स विश्वात्मा तदाकारां तदाकृतिम्॥
शिल्पिमुख्याय विप्रेन्द्राः कुरुष्व प्रतिमा इति।
कृष्णरूपं परं शान्तं पद्मपत्रायतेक्षणम्॥
श्रीवत्सकौस्तुभधरं शङ्खचक्रगदाधरम्।
गौरं क्षीरोदवर्णाभं[1] द्वितीयं स्वस्तिकाङ्कितम्[2]।
लाङ्गलास्त्रधरं देवमनन्ताख्यं महाबलम्॥
देवदानवगन्धर्व्वयक्षविद्याधरोरगैः।
न विज्ञातं हि तस्यान्तं तेनानन्त इति स्मृतः॥
भगिनीं वासुदेवस्य रुक्मवर्णां सुशोभनाम्।
तृतीयां वै सुभद्राञ्च सर्व्वलक्षणलक्षिताम्॥
श्रुत्वैतद्वचनं तस्य विश्वकर्म्मा सुकर्म्मकृत्।
तत्क्षणात् कारयामास प्रतिमाः शुभलक्षणाः॥
कुण्डलाभ्यां विचित्राभ्यां कर्णाभ्यां सुविराजिताः॥
चक्रलाङ्गलविन्यस्तहस्ताभ्यां साधुसम्मताः।

---

१ क पुस्तके गोक्षीरवर्णाभम्।
२ खग—अन्वितम्।

प्रथमं शुभ्रवर्णाभं शारदेन्दुसमप्रभम् ॥
सुरक्ताक्षं महाकायं जटाविकटमस्तकम्[1] ।
नीलाम्बरधरं दिव्यं महामुषलधारिणम् ॥
द्वितीयं पुण्डरीकाक्षं नीलजीमूतसन्निभम् ।
अतसीपुष्पसङ्काशं पद्मपत्रायतेक्षणम् ॥
पीतवाससमत्युग्रं शुभ्रं श्रीवत्सलक्षणम् ।
चक्रपूर्णकरं दिव्यं सर्व्वपापहरं हरिम् ॥
तृतीयां स्वर्णवर्णाभां पद्मपत्रायतेक्षणाम् ।
विचित्रवस्त्रसंछन्नां हारकेयूरभूषिताम् ॥
विचित्राभरणोपेतां रत्नहारावलम्बिताम् ।
पीनोन्नतकुचां रम्यां विश्वकर्म्मा विनिर्म्ममे ॥
स तु राजाऽथ ता दृष्ट्वा क्षणेनैकेन निर्म्मिताः ।
दिव्यवस्त्रयुगच्छन्ना नानारत्नैरलङ्कृताः ॥
सर्व्वलक्षणसम्पन्नाः प्रतिमाः सुमनोहराः ।
विस्मयं परमं गत्वा इदं वचनमब्रवीत् ॥

इन्द्रद्युम्न उवाच—

किं देवौ समनुप्राप्तौ द्विजरूपधरावुभौ ।
उभौ चाद्भुतकर्म्माणौ देववृत्तान्तमानुषौ ॥
देवौ वा मानुषौ वापि यक्षविद्याधरौ युवाम् ।
किं नु ब्रह्म-हृषीकेशौ वसू वा[2] किमुताश्विनौ ॥

---

१ कघ पुस्तकद्वये बलं बलमदोद्धतम् ।

२ घ किं वसू ।

न वेद्मि सत्यवक्तारौ[१] मायारूपेण संस्थितौ।
युवां गतोऽस्मि शरणमात्मानं मे प्रकाशय॥

द्विज उवाच—

नाहं देवो न यक्षो वा न दैत्यो न च देवराट्।
न ब्रह्मा न च रुद्रोऽहं विद्धि मां पुरुषोत्तमम्॥
आर्त्तिहा सर्व्वलोकानां अनन्तबलपौरुषः।
अर्च्चनीयो हि भूतानामन्तो यस्य न विद्यते॥
पठ्यते सर्व्वशास्त्रेषु वेदान्तेषु निगद्यते।
यदुक्तं[२] ध्यानगम्येति वासुदेवेति योगिभिः॥
अहमेव स्वयं ब्रह्मा अहं विष्णुः शिवो ह्यहम्।
इन्द्रोऽहं देवराजश्च गतसंयमनो यमः॥
पृथिव्यादीनि भूतानि त्रेताग्निर्हुतभुक् नृप।
वरुणोऽपांपतिश्चाहं धरणी च महीधराः॥
यत् किञ्चिद्वाङ्मयं लोके जगत् स्थावरजङ्गमम्।
चराचरं जगद्विश्वं मदन्यन्नास्ति किञ्चन।
प्रीतोऽहं ते नृपश्रेष्ठ वरं वरय सुव्रत॥
यदिष्टं तत् प्रयच्छामि हृदि यत्ते व्यवस्थितम्।
मद्दर्शनमपुण्यानां स्वप्नान्तेऽपि न जायते।
त्वं पुनर्दृढभक्तित्वात् प्रत्यक्षं दृष्टवानसि॥

---

१ क सत्यवक्तारौ, ग देववक्तारौ।

२ घ पुस्तके यमाद्यः ... ... योगिनः।

ब्रह्मोवाच—

श्रुत्वैवं वासुदेवस्य वचनं तस्य भो द्विजाः ।
रोमाञ्चिततनुर्भूत्वा इदं स्तोत्रं जगौ नृपः ॥

राजोवाच—

श्रियः कान्त नमस्तेऽस्तु श्रीपते पीतवाससे ।
श्रीद श्रीश श्रीनिवास नमस्ते श्रीनिकेतन ॥
आद्यं पुरुषमीशानं सर्व्वेशं सर्व्वतोमुखम् ।
निष्कलं परमं देवं प्रणतोऽस्मि सनातन ॥
शब्दातीतं गुणातीतं भावाभावविवर्ज्जितम् ।
निर्लेपं निर्गुणं सूक्ष्मं सर्व्वज्ञं सर्व्वभावनम् ॥
प्रावृट्मेघप्रतीकाशं गो-ब्राह्मणहिते रतम् ।
सर्व्वेषामेव गोप्तारं व्यापिनं सर्व्वभावनम् ॥
शङ्खचक्रधरं देवं गदामुषलधारिणम् ।
नमस्ये वरदं देवं नीलोत्पलदलच्छविम् ॥
नागपर्य्यङ्कशयनं क्षीरोदार्णववासिनम्[1] ।
नमस्येऽहं हृषीकेशं सर्व्वपापहरं हरिम् ॥
पुनस्त्वां देवदेवेश नमस्ये वरदं विभुम् ।
सर्व्वलोकेश्वरं विष्णुं मोक्षकारकमव्ययम् ॥

ब्रह्मोवाच—

एवं स्तुत्वा तु तं देवं प्रणिपत्य कृताञ्जलिः ।
उवाच प्रणतो भूत्वा निपत्य वसुधातले ॥

---

१ घ—शायिनम् ।

राजोवाच—

प्रीतोऽसि यदि मे नाथ वृणोमि वरमुत्तमम् ।
देवासुराः सगन्धर्व्वा यक्ष रक्षो-महोरगाः[1] ॥
सिद्धविद्याधराः साध्याः किन्नरा गुह्यकास्तथा ।
ऋषयो ये महाभागा नानाशास्त्रविशारदाः ॥
परिव्राड्-योगयुक्ताश्च वेदतत्वार्थचिन्तकाः ।
मोक्षमार्गविदो येऽन्ये ध्यायन्ति परमं पदम् ॥
निर्गुणं निर्मलं शान्तं यं पश्यन्ति मनीषिणः ।
तत्पदं गन्तुमिच्छामि त्वत्प्रसादात् सुदुर्लभम् ॥

भगवानुवाच—

सर्व्वं[2] भवतु भद्रं ते यथेष्टं सर्व्वमाप्नुहि ।
भविष्यति यथाकामं मत्प्रसादान्न संशयः ॥
दश वर्षसहस्राणि तथा नव शतानि च ।
अविच्छिन्नं महाराज्यं कुरु त्वं नृपसत्तम ॥
प्रपत्स्यसि[3] परं दिव्यं दुर्लभं यत् सुरासुरैः ।
पूर्णं मनोरथं शान्तं गुह्यमव्यक्तमव्ययम् ॥
परात्परतरं सूक्ष्मं निर्लेपं निश्चलं ध्रुवम् ।
चिन्ताशोकविनिर्मुक्तं क्रियाकारणवर्ज्जितम् ॥
तदहं दर्शयिष्यामि ज्ञेयाख्यं परमं पदम् ।

---

१ कघ पुस्तकद्वये सयक्षोरगराक्षसाः ।

२ घ एवं । ३ घ पुस्तके प्रयास्यसि ।

यं प्राप्य परमानन्दं प्राप्स्यसे परमां गतिम् ॥
कीर्त्तिश्च तव राजेन्द्र भवत्वत्र महीतले ।
यावद्धरा नभो यावत् यावच्चन्द्रार्कतारकाः ॥
यावत् समुद्राः सप्तैव यावन्मेर्व्वादिपर्व्वताः ।
तिष्ठन्ति दिवि देवाश्च तावत् सर्व्वत्र चाव्ययाः ॥
इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसम्भवम् ।
यत्र स्नात्वा सकृल्लोकः शक्रलोकमवाप्स्यति ॥
दापयिष्यति यः पिण्डांस्तात[1] तस्मिन् सरःशुभे ।
कुलैकविंशमुद्धृत्य शक्रलोकं गमिष्यति ॥
पूज्यमानोऽप्सरोभिश्च गन्धर्व्वैर्गीतनिस्वनैः ।
विमानेनावसेत्तत्र यावदिन्द्राश्चतुर्द्दश ॥
सरसो दक्षिणे भागे नैर्ऋत्यां तु समाश्रिते ।
न्यग्रोधस्तिष्ठते तत्र तत्समीपे तु मण्डपः ॥
केतकीवनसंछन्नो नानापादपसङ्कुलः ।
आषाढ़स्य सिते पक्षे पञ्चम्यां पितृदैवते ॥
ऋक्षे नेष्यन्ति नस्तत्र नीत्वा सप्तदिनानि वै ।
मण्डपे स्थापयिष्यन्ति सुवेश्याभिः[2] सुशोभनैः ॥
क्रीड़ाविशेषबहुलैर्नृत्यगीतमनोहरैः ।
चामरैः स्वर्णदण्डैश्च व्यजनै रत्नभूषणैः ॥
वीजयन्त्यस्तदास्मभ्यं स्थास्यन्ति परमाङ्गनाः ।
ब्रह्मचारी यतिश्चैव स्नातकाश्च द्विजोत्तमाः ॥

---

१ क - ग - तटे ।   २ ग सुवेश्मभिः ।

वानप्रस्था गृहस्थाश्च सिद्धाश्चान्ये च ब्राह्मणाः ।
नानावर्णपदैः स्तोत्रैर्ऋग्यजुःसामनिःस्वनैः ॥
करिष्यन्ति स्तुतिं राजन् राम-केशवयोः पुनः ।
ततः स्तुत्वा च दृष्ट्वा च संप्रणम्य च भक्तितः ॥
नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरे वसेत् ।
पूज्यमानोऽप्सरोभिश्च गन्धर्व्वगीतनिस्वनैः ॥
हरेरनुचरस्तत्र क्रीड़ते केशवेन वै ।
विमानेनार्कवर्णेन रत्नहारेण भ्राजता[1] ॥
सर्व्वकाममहाभोगैस्तिष्ठते भवनोत्तमे ।
तपःक्षयादिहागत्य मनुष्यो ब्राह्मणो भवेत् ।
कोटीधनपतिः श्रीमान् चतुर्वेदी भवेद्ध्रुवम् ॥

ब्रह्मोवाच—

एवं तस्मै वरं दत्वा कृत्वा च समयं हरिः ।
जगामादर्शनं विप्राः सहितो विश्वकर्म्मणा ॥
स तु राजा तदा हृष्टो रोमाञ्चिततनूरुहः ।
कृतकृत्यमिवात्मानं मेने सन्दर्शनं हरेः ॥
ततः कृष्णञ्च रामञ्च सुभद्राञ्च वरप्रदाम् ।
रथैर्विमानसङ्काशैर्मणिकाञ्चनचित्रकैः ॥
संवाह्य तांस्ततो राजा जयमङ्गलनिस्वनैः ।
आनयामास मतिमान् सामात्यः सपुरोहितः ॥

---

१ क राजता ।

नानावादित्रनिर्घोषैर्नानावेदस्वनैः शुभैः ।
संस्थाप्य च शुभे देशे पवित्रे सुमनोहरे ॥
ततः शुभतिथौ स्वर्क्षे काले च शुभलक्षणे ।
प्रतिष्ठां कारयामास सुमुहूर्त्ते द्विजैः सह ॥
यथोक्तेन विधानेन विधिदृष्टेन कर्म्मणा ।
आचार्य्यानुमतेनैव सर्व्वं कृत्वा महीपतिः ॥
आचार्य्याय तदा दत्वा दक्षिणां विधिवत् प्रभुः ।
ऋत्विग्भ्यश्च विधानेन तथान्येभ्यो धनं ददौ ॥
कृत्वा प्रतिष्ठां विधिवत् प्रासादे भवनोत्तमे ।
स्थापयामास तान् सर्व्वान् विधिदृष्टेन कर्म्मणा ॥
ततः सम्पूज्य विधिना नानापुष्पैः सुगन्धिभिः ।
सुवर्णमणिमुक्ताद्यैर्नानावस्त्रैः सुशोभनैः ॥
रत्नैश्च विविधैर्दिव्यैः [१]शासनैर्ग्रामपत्तनैः ।
ददौ चाश्वान् स्वविषयान्[२] पुराणि नगराणि च ॥
एवं बहुविधान् दत्वा राज्यं कृत्वा यथोचितम् ।
दृष्ट्वा च विविधैर्यज्ञैर्दत्वा दानान्यनेकशः ॥
कृतकृत्यस्ततो राजा त्यक्तसर्व्वपरिग्रहः ।
जगाम परमं स्थानं तद्विष्णोः परमं पदम् ॥
एवं मया मुनिश्रेष्ठाः कथितो वो नृपोत्तमः ।
क्षेत्रस्य चैव माहात्म्यं किमन्यत् श्रोतुमिच्छथ ॥

---

१ घ — आसनैः ।  २ घ — धान्यानि वित्तानि ।

श्रुत्वैवं वचनं तस्य ब्रह्मणोऽव्यक्तजन्मनः।
आश्चर्य्यं मेनिरे विप्रा पप्रच्छुश्च पुनस्तदा॥

मुनय ऊचुः—

कस्मिन् काले सुरश्रेष्ठ गन्तव्यं पुरुषोत्तमे।
विधिना केन कर्त्तव्यं पञ्चतीर्थमपि प्रभो॥
एकैकस्य च तीर्थस्य स्नाने दाने च यत्फलम्।
देवताप्रेक्षणे चैव ब्रूहि सर्व्वं पृथक् पृथक्॥

ब्रह्मोवाच—

निराहारः कुरुक्षेत्रे पादेनैकेन यस्तपेत्।
जितेन्द्रियो जितक्रोधः सप्तसंवत्सरायुतम्॥
दृष्ट्वा [१]सकृज्ज्यैष्ठशुक्लद्वादश्यां पुरुषोत्तमम्।
कृतोपवासः प्राप्नोति ततोऽधिकतरं फलम्॥
तस्माज्ज्यैष्ठे मुनिश्रेष्ठाः प्रयत्नेन सुसंयतैः।
स्वर्गलोकेप्सुभिर्मर्त्यैर्द्रष्टव्यः पुरुषोत्तमः॥
पञ्चतीर्थन्तु[२] विधिवत् कृत्वा ज्यैष्ठे नरोत्तमः।
द्वादश्यां शुक्लपक्षस्य पश्येत्तं पुरुषोत्तमम्॥
ये पश्यन्त्यव्ययं देवं द्वादश्यां पुरुषोत्तमम्।
ते विष्णुलोकमासाद्य न च्यवन्ति कदाचन॥
तस्माज्ज्यैष्ठे प्रयत्नेन गन्तव्यं भो द्विजोत्तमाः।
कृत्वा सम्यक् पञ्चतीर्थं द्रष्टव्यः पुरुषोत्तमः॥

---

१ घ—सदा। २ घ—पञ्चतीर्थानि।

सुदूरस्थोऽपि यो भक्त्या कीर्त्तयेत् पुरुषोत्तमम् ।
अहन्यहनि शुद्धात्मा सोऽपि विष्णुपुरं व्रजेत् ॥
यात्रां करोति कृष्णस्य श्रद्धधानः समाहितः ।
सर्व्वपापविनिर्मुक्तो विष्णुलोकं व्रजेन्नरः ॥
चक्रं दृष्ट्वा हरेर्दूरात् प्रासादोपरिसंस्थितम् ।
सहसा मुच्यते पापान्नरो भक्त्या प्रणम्य तम् ॥

---

## अथ पञ्चतीर्थविधिः।

### ब्रह्मपुराणे।

ब्रह्मोवाच—

अतःपरं प्रवक्ष्यामि पञ्चतीर्थविधिं द्विजाः।
यत्फलं स्नानदानेन देवताप्रेक्षणेन च॥
मार्कण्डेयह्रदं गत्वा स्नात्वा[1] चोदङ्मुखः शुचिः।
निमज्जेत्त्रींस्तु वारान् वै इमं मन्त्रमुदीरयन्[2]॥
संसारसागरे मग्नं पापग्रस्तमचेतनम्।
त्राहि मां भगनेत्रघ्न[3]त्रिपुरारे नमोऽस्तु ते॥
नमः शिवाय शान्ताय सर्व्वपापहराय च।
स्नानं करोमि देवेश मम नश्यतु पातकम्॥
नाभिमात्रे जले स्थित्वा विधिवद्देवता ऋषीन्।
तिलोदकेन मतिमान् पितॄंश्चान्यांश्च तर्पयेत्॥
स्नात्वैवञ्च तथाचम्य[4] ततो गच्छेच्छिवालयम्।
प्रविश्य देवतागारं कृत्वा च त्रिः प्रदक्षिणम्॥
मूलमन्त्रेण सम्पूज्य मार्कण्डेयस्य चेश्वरम्।
अघोरेण च भो विप्राः प्रणिपत्य प्रसादयेत्॥

---

१ घ पुस्तके नरः।

२ कख पुस्तकद्वये पद्यमिदं पतितम्।

३ घ—भगवन्नत्र।

४ खग पुस्तकद्वये तथा तस्य।

ॐनमः शिवायेति मूलमन्त्रः।

ॐ अघोरेभ्यो घोरेभ्यो घोरतरेभ्यः सर्व्वेभ्यः सर्व्वसर्व्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः।

इत्ययमघोरमन्त्रः।

त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण।
त्राहि मां त्वं विरूपाक्ष महादेव नमोऽस्तु ते॥
मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा च[1] शङ्करम्।
दशानामश्वमेधानां फलमाप्नोति मानवः॥
पापैः सर्व्वैर्विनिर्मुक्तः शिवलोकं स गच्छति।
तत्र भुक्त्वा वरान् भोगान् यावदाहूतसंप्लवम्॥
इहलोकं समासाद्य भवेद्विप्रो बहुश्रुतः।
शाङ्करं योगमासाद्य ततो मोक्षमवाप्नुयात्॥
कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिः प्रदक्षिणम्।
पूजयेत् परया भक्त्या मन्त्रेणानेन तं वटम्॥
ॐनमोऽव्यक्तरूपाय महाप्रलयकारिणे।
महद्रसोपविष्टाय न्यग्रोधाय नमोऽस्तु ते॥
अमरस्त्वं सदा कल्पे हरेश्चायतनं वट।
न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते॥
भक्त्या प्रदक्षिणं कृत्वा नत्वा कल्पवटं नरः।
सहसा मुच्यते पापात् जीर्णां त्वचमिवोरगः।

---

१ खग — पश्येच्च।

छायां तस्य समाक्रम्य कल्पवृक्षस्य भो द्विजाः।
ब्रह्महत्यां नरो जह्यात् पापेष्वन्येषु का कथा॥
दृष्ट्वा कृष्णाङ्गसम्भूतं ब्रह्मतेजोमयं परम्।
न्यग्रोधाकृतिकं विष्णुं प्रणिपत्य च भो द्विजाः॥
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम्।
तथा स्ववंशमुद्धृत्य विष्णुलोकं स गच्छति॥
वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितम्।
सर्व्वपापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत्॥
दृष्ट्वा वटं वैनतेयं यः पश्येत् पुरुषोत्तमम्।
सङ्कर्षणं सुभद्राञ्च स याति परमां गतिम्॥
प्रविश्यायतनं विष्णोः कृत्वा तं त्रिः प्रदक्षिणम्।
सङ्कर्षणं सुभद्राञ्च भक्त्यापूज्य प्रसादयेत्॥
नमस्ते हलधृग्राम[१] नमस्ते मुषलायुध।
नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल॥
नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर।
प्रलम्बारे नमस्तेऽस्तु त्राहि मां कृष्णपूर्व्वज॥
एवं प्रसाद्य चानन्तमजेयं त्रिदशार्च्चितम्।
कैलासशिखराकारं चन्द्रात्कान्ततराननम्॥
नीलवस्त्रधरं देवं फणाविकटमस्तकम्।
महाबलं हलधरं कुण्डलैकविभूषितम्॥

---

१ घ – हलहस्ताय।

रौहिणेयं नरो भक्त्या[1] लभेदभिमतं फलम् ।
सर्व्वपापैर्विनिर्मुक्तो विष्णुलोकञ्च गच्छति ॥
आहूतसंप्लवं यावद् भुक्ता तत्र सुखं बुधः ।
पुण्यक्षयादिहागत्य प्रवरे योगिनां कुले ॥
ब्राह्मणप्रवरो भूत्वा सर्व्वशास्त्रार्थपारगः ।
ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम् ॥
एवमभ्यर्च्च्य हलिनं ततः कृष्णं विचक्षणः ।
द्वादशाक्षरमन्त्रेण पूजयेत्सुसमाहितः ॥
द्विषट्कवर्णमन्त्रेण भक्त्या कृष्णं जगद्गुरुम् ।
सम्पूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत् ॥
जय कृष्ण जगन्नाथ जय सर्व्वाघनाशन ।
जय चाणूरकेशिघ्न जय कंसनिसूदन ॥
जय पद्मपलाशाक्ष जय चक्रगदाधर ।
जय नीलाम्बुदश्याम जय सर्व्वसुखप्रद ।
जय देव जगत्पूज्य जय संसारनाशन ॥
जय लोकपते नाथ जय वाञ्छाफलप्रद ।
संसारसागरे घोरे [2]निःसारे दुःखफेनिले ॥
क्रोधग्रहाकुले रौद्रे विषयोदकसंप्लवे ।
नानारोगोर्म्मिकलिले मोहावर्त्ते सुदुस्तरे ॥
निमग्नोऽहं सुरश्रेष्ठ त्राहि मां पुरुषोत्तम ।

---

१ ख — नत्वा ।　　२ घ — दुःखसम्पातफेनिले ।

एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम् ॥
सर्व्वपापहरं देवं सर्व्वकामफलप्रदम् ।
सुनासं[१] द्विभुजं कृष्णं पद्मपत्रायतेक्षणम् ॥
महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ।
शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषितम् ॥
सर्व्वलक्षणसंयुक्तं वनमालाविभूषितम् ।
दृष्ट्वा नरोऽञ्जलिं कृत्वा दण्डवत् प्रणिपत्य च ॥
अश्वमेधसहस्राणां फलं प्राप्नोति भो द्विजाः ।
यत्फलं सर्व्वतीर्थेषु स्नानदाने प्रकीर्त्तितम् ॥
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ।
यत्फलं सर्व्वदेवेषु सर्व्वयज्ञेषु यत्फलम् ॥
तत्फलं समवाप्नोति नरः कृष्णं प्रणम्य च ।
यत्फलं सर्व्वदानेन व्रतेन नियमेन च ॥
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ।
तपोभिर्विविधैरुग्रैर्यत्फलं समुदाहृतम् ॥
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ।
यत्फलं ब्रह्मचर्य्येण सम्यक् चीर्णेन कीर्त्तितम् ॥
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ।
सन्यासेन यथोक्तेन यत्फलं समुदाहृतम् ॥
नरस्तत्फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च ।

---

१ गघ – पीनांसं ।

किञ्चात्र बहुनोक्तेन माहात्म्यं तस्य भो द्विजाः ॥
दृष्ट्वा कृष्णं नरो भक्त्या मोक्षं प्राप्नोति दुर्लभम् ।
पापैर्विमुक्तः शुद्धात्मा कल्पकोटिसमुद्भवैः ॥
[1]क्रियया परया युक्तः सर्व्वैः समुदितो गुणैः ।
सर्व्वकामसमृद्धेन विमानेन सुवर्च्चसा ॥
त्रिःसप्तकुलमुद्धृत्य नरो विष्णुपुरं व्रजेत् ।
ततः कल्पशतं यावत् भुक्त्वा भोगान् मनोरथान् ॥
गन्धर्व्वाप्सरसैः सार्द्धं यथा विष्णुश्चतुर्भुजः ।
च्युतस्तस्मादिहायातो विप्राणां प्रवरे कुले ॥
सर्व्वज्ञः सर्व्ववेदी च जायते गतमत्सरः ।
स्वधर्म्मनिरतः शान्तो दाता[2] भूतहिते रतः ॥
आसाद्य वैष्णवं ज्ञानं ततो मुक्तिमवाप्नुयात् ।

अत्र यद्यपि दृष्ट्वा प्रणम्येति श्रवणात् समुच्चित एव फलान्वयोऽन्यथा वाक्यभेदः स्यात् । तथापि वाक्यशेषे दर्शनमात्र एव फलोपसंहारात् प्रत्येकमेव फलान्वयः ।

ततः पूज्य स्वमन्त्रेण[3] सुभद्रां भक्तवत्सलाम् ।
प्रसादयेच्च भो विप्राः प्रणिपत्य कृताञ्जलिः ॥
नमस्ते सर्व्वगे देवि नमस्ते शुभसौख्यदे ।
त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते ॥
एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम् ।

---

१ घ—श्रिया परमया ।   २ घ—दान्तः ।
३ घ—सम्पूज्य मन्त्रेण ।

बलदेवस्य भगिनीं सुभद्रां वरदां शुभाम् ॥
कामगेन विमानेन नरो विष्णुपुरं व्रजेत् ।
आहूतसंप्लवं यावत् क्रीड़ित्वा तत्र देववत् ॥
इह मानुषतां प्राप्तो ब्राह्मणो वेदविद्भवेत् ।
प्राप्य योगं हरेस्तत्र मोक्षञ्च लभते ध्रुवम् ॥

ब्रह्मोवाच—

एवं दृष्ट्वा नरः कृष्णं सुभद्रां प्रणिपत्य च ।
धर्म्मञ्चार्थञ्च कामञ्च मोक्षञ्च लभते ध्रुवम् ॥
निष्क्रम्य देवतागारात् कृतकृत्यो भवेन्नरः ।
प्रणम्यायतने पश्चात् व्रजेत्तत्र समाहितः ॥
[1]इन्द्रनीलसमो विष्णुर्यत्रास्ते बालुकावृतः ।
अन्तर्धानेऽपि तं नत्वा ततो विष्णुपुरं व्रजेत् ॥
सर्व्वदेवमयो योऽसौ हतवानसुरोत्तमम् ।
स आस्ते तत्र भो विप्राः सिंहार्द्धकृतविग्रहः ॥
भक्त्या दृष्ट्वा तु तं देवं प्रणम्य नरकेशरिम्[2] ।
मुच्यते पातकैर्मर्त्यः समस्तैर्नात्र संशयः ॥
नरसिंहस्य ये भक्ता भवन्ति भुवि मानवाः ।
न तेषां दुष्कृतं किञ्चित् फलं तत् स्यादभीप्सितम् ॥
तस्मात् सर्व्वप्रयत्नेन नरसिंहं समाश्रयेत् ।
धर्म्मार्थकाममोक्षाणां फलं यस्मात् प्रयच्छति ॥

---

१ घ पुस्तके अधिकः श्लोकः । २ घ नरकेशवम् ।

तस्मात्तं मुनिशार्दूल भक्त्या सम्पूजयेत् सदा ।
मृगराजं महावीर्य्यं सर्व्वकामफलप्रदम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ।
सम्पूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम् ॥
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः ।
सम्पूज्य तं सुरश्रेष्ठं प्राप्नुवन्त्यभिवाञ्छितम् ॥
देवत्वममरेशत्वं धनेशत्वञ्च भो द्विजाः ।
यक्ष-विद्याधरत्वञ्च तथान्यत्वं प्रयच्छति ॥

प्रसङ्गान्नरसिंहमन्त्रोपासनाफलमाह—

ब्रह्मोवाच—

शृणुध्वं नरसिंहस्य प्रभावं गदतो मम ।
अजितस्याप्रमेयस्य भुक्तिमुक्तिप्रदस्य च ॥
कः शक्नोति गुणान् वक्तुं समस्तांस्तस्य भो द्विजाः ।
सिंहार्द्धकृतदेहस्य प्रवक्ष्यामि समासतः ॥
याः काश्चित् सिद्धयश्चात्र श्रूयन्ते देवमानुषैः[१] ।
प्रसादात्तस्य ताः सर्व्वाः सिद्ध्यन्ते नात्र संशयः ॥
स्वर्गे मर्त्त्ये च पाताले दिक्षु तोयेऽम्बरे नगे ।
प्रसादात्तस्य देवस्य भवत्यव्याहता गतिः ॥
असाध्यं तस्य देवस्य नास्त्यत्र सचराचरे ।
नरसिंहस्य भो विप्राः सदा भक्तानुकम्पिनः ॥

---

१ क — दैवमानुषाः ।

विधानं तस्य वक्ष्यामि भक्तानामुपकारकम् ।
येन प्रसीदते चासौ सिंहार्द्धकृतविग्रहः ॥
शृणुध्वं नरशार्दूलाः कल्पराजं सनातनम् ।
नरसिंहस्य तत्त्वस्य[1] यन्न ज्ञातं सुरासुरैः ॥
शाकयावकमूलैस्तु फलपिण्याकशक्तुभिः ।
पयोभक्ष्येण विप्रेन्द्रो वर्त्तते साधकेश्वरः ॥
काशकौपीनवासाश्च ध्यानयुक्तो जितेन्द्रियः ।
अरण्ये विजने देशे पर्व्वते नदीसङ्गमे ॥
ऊषरे सिद्धक्षेत्रे च नरसिंहाश्रये तथा ।
प्रतिष्ठाप्य स्वयं चापि पूजां कृत्वा विधानतः ॥
द्वादश्यां शुक्लपक्षस्य उपोष्य मुनिपुङ्गवाः ।
जपेल्लक्षाणि वै विंशत् मनसा संयतेन्द्रियः ॥
उपपातकयुक्तश्च महापातकसंयुतः ।
मुक्तो भवेत्ततो विप्राः साधको नात्र संशयः ॥
कृत्वा प्रदक्षिणं तत्र नरसिंहं प्रपूजयेत् ।
गन्धपुष्पादिभिर्धूपैः प्रणम्य शिरसा प्रभुम् ॥
कर्पूरचन्दनाक्तानि जातीपुष्पाणि मस्तके ।
प्रदद्यान्नरसिंहस्य ततः सिद्धिः प्रजायते ॥
भगवान् सर्व्वकार्य्येषु न क्वचित् प्रतिहन्यते ।
सोढुं न शक्तास्तं सर्व्वे ब्रह्मरुद्रादयः सुराः ॥

---

१ ग — सत्वस्य ।

किं पुनर्दानवा लोके सिद्ध-गन्धर्व्व-मानुषाः ।
विद्याधरा यक्षगणाः सकिन्नरमहोरगाः ॥
ते सर्व्वे प्रलयं यान्ति दग्धा दिव्योग्रतेजसा ।
[1]सहस्रज्वालाग्निशिखया रक्षां सर्व्वमुपद्रवात् ॥
द्विर्जप्तं कवचं दिव्यं रक्षते देवदानवान् ।
भूताः पिशाचरक्षांसि ये चान्ये परिपन्थिनः ॥
त्रिःजप्तं कवचं दिव्यं अभयञ्च सुरासुरैः ।
द्वादशाभ्यन्तरेणैव योजनानां द्विजोत्तमाः ॥
रक्षते भगवान् देवो नरसिंहो महाबलः ।
ततो गत्वा [2]विशेद्द्वारमुपोष्य रजनीत्रयम् ॥
पालाशकाष्ठे प्रज्वाल्य भगवज्जातवेदसम् ।
पालाशसमिधस्तत्र जुहुयात्त्रिमधुप्लुतम्[3] ॥
द्वे ऽयुते द्विजशार्द्दूल कटकानलसाधकः[4] ।
ततो विवरद्वारन्तु प्रकटं जायते क्षणात् ॥
ततो विशेत्तु निःशङ्कः कवची विवरं बुधः ।
गच्छतः संकटस्थस्य तमो मोहस्य नश्यति ॥
राजमार्गस्तु विस्तीर्णो दृश्यते भगवद्द्विजाः ।
नरसिंहं स्मरंस्तत्र पातालं विशते द्विजाः ॥

---

१ घ — सहस्रज्जप्तं तु कवचं रक्षेत् सर्व्वमुपद्रवम् ।
२ घ — विलद्वारम् । ३ कग — त्रिमधुराप्लुतम् ।
४ खग पुस्तकद्वये वषट्कारेण साधकः ।

गत्वा तत्र [1]जपेत्तत्त्वं नरसिंहं तमव्ययम्।
ततःस्त्रीणां सहस्राणि वीणाचामरकर्म्मणाम्॥
निर्गच्छन्ति पुरो विप्राः स्वागतं ता वदन्ति च।
प्रवेशयन्ति तं हस्ते गृहीत्वा साधकेश्वरम्।
ततो रसायनं दिव्यं पाययन्ति द्विजोत्तमाः॥
पीतमात्रे दिव्यदेहो जायते सुमहाबलः।
क्रीड़ते दिव्यकन्याभिर्यावदाहूतसंप्लवम्॥
भिन्नदेहो वासुदेवे लीयते नात्र संशयः।
यथा न रोचयेद्वासं तथा निर्गच्छते पुनः॥
पट्टं शूलञ्च खड्गञ्च रोचनाञ्च मणिस्तथा।
रसं रसायनञ्चैव पादुकाञ्जनमेव च।
कृष्णाजिनं मुनिश्रेष्ठाः [2]गुण्डिकाञ्च मनःशिलाम्।
कमण्डलुञ्चाक्षसूत्रं षष्ठीं[3] सञ्जीवनीन्तथा॥
सिद्धविद्याञ्च शास्त्राणि गृहीत्वा साधकोत्तमः।
ज्वलद्वह्निस्फुलिङ्गोर्म्मिवेष्टितं त्रिशिखं हृदि॥
सकृन्न्यस्तं दहेत् सर्व्वं वृजिनं जन्मकोटिजम्।
विषे न्यस्तं विषं हन्यात् कुष्ठं हन्यात्तनौ स्थितम्॥
स्वदेहे भ्रूणहत्यादि कृत्वा दिव्येन शुध्यति।
महाग्रहगृहीतेषु ज्वलमानं विचिन्तयेत्॥

---

(१) क ख पुस्तकद्वये शक्तिम्।

(२) घ पुस्तके गुटिकाञ्च मनोहराम्।

(३) ग पुस्तके यष्टिम्। घ पुस्तके विद्याम्।

हृदन्ति वै ततः शीघ्रं नश्येयुर्दारुणा ग्रहाः ।
बालानां कण्ठके वद्धं रचा भवति नित्यशः ॥
गण्ड-पिण्डक-लूतानां नाशनं कुरुते ध्रुवम् ।
[1]व्याधिघाते समिद्भिश्च घृतचीरेण होमयेत् ॥
त्रिसन्ध्यं मासमेकन्तु सर्व्वरोगान् विनाशयेत् ।
असाध्यं नास्य पश्यामि तत्त्वस्य सचराचरे ॥
यां यां कामयते सिद्धिं तां तां प्राप्नोति स ध्रुवम् ।
अष्टोत्तरशतन्त्वेकं पूजयित्वा मृगाधिपम् ॥
मृत्तिकाः सप्त वल्मीके श्मशाने च चतुष्पथे ।
रक्तचन्दनसंमिश्रा गवां चीरेण लेपयेत् ॥
सिंहस्य प्रतिमां [2]कृत्वा प्रमाणेन षड़ङ्गुलाम् ।
विशेषेण भूर्ज्जपत्रे रोचनया समालिखेत् ॥
नरसिंहस्य कण्ठे तु वद्धा चैव हि मन्त्रवित् ।
जपेत् संख्याविहीनन्तु पूजयित्वा जलाशये ॥
सप्ताहं यावन्मन्त्रन्तु जपते संयतेन्द्रियः ।
जलाकीर्णा मुहूर्त्तेन जायते सर्व्वमेदिनी ॥
अथवा शुष्कवृचाग्रे नरसिंहन्तु पूजयेत् ।
जप्ता चाष्टशतं तत्त्वं वर्षन्तं विनिवारयेत् ॥
तमेवं पिञ्जि(ञ्ज)के वद्धा भ्रामयेत् साधकोत्तमः ।
महावातो मुहूर्त्तेन आगच्छेन्नात्र संशयः ॥

---

(१) घ पुस्तके व्याधिजाते ।

(२) क ख पुस्तके दृष्ट्वा ।

पुनश्च धारयेत् सिक्तां सप्त(ज)सप्तेन वारिणा ।
अथ तां प्रतिमां द्वारि निखनेद् यस्य साधकः ॥
[1]गोत्रोत्सादो भवेत्तस्य उद्धृते चैव शान्तिदः ।
तस्मात्तं मुनिशार्दूला भक्त्या सम्पूजयेत् सदा ॥
मृगराजं महावीर्य्यं सर्व्वकामफलप्रदम् ।
दृष्ट्वा स्तुत्वा नमस्कृत्वा सम्पूज्य नरकेशरीम् ।
प्राप्नुवन्ति नरा राज्यं स्वर्गं मोक्षञ्च दुर्लभम् ॥
नरसिंहं नरो दृष्ट्वा लभेदभिमतं फलम् ।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकञ्च गच्छति ॥
सकृद्दृष्ट्वा तु तं देवं भक्त्या सिंहवपुर्धरम् ।
मुच्यते कल्मषैः सर्व्वै[2]र्जन्मकोटिसमुद्भवैः ॥
संग्रामे सङ्कटे दुर्गे चौरव्याघ्रादिपीड़िते ।
कान्तारे प्राणसन्देहे विष-वह्नि-जलेषु च ॥
राजादिभ्यश्च [3]संग्रामे ग्रहरोगादिपीड़िते ।
स्मृत्वा तं पुरुषः सर्व्वैरापदैश्च प्रमुच्यते ॥
सूर्य्योदये यथा नाशं तमोऽभ्येति महत्तरम् ।
तथा सन्दर्शने तस्य विनाशं यान्त्युपद्रवाः ॥
गुण्डिकाञ्जनपातालपादने [4]परमालयम् ।
नरसिंहे प्रसन्ने तु प्राप्नोत्यन्यांश्च वाञ्छितान् ॥

---

(१) ग पुस्तके गोत्रोत्साहः ।
(२) घ पुस्तके वाशुभैर्दुःखैः ।
(३) ख पुस्तके समुद्रेभ्यः ।
(४) मूलपुस्तके—पादुके च रसायनम् ।

यान् यान् कामानभिध्यायन् भजते नरकेशरीम् ।
तान् तान् कामानवाप्नोति नरो नास्त्यत्र संशयः ॥

प्रकृतमाह—

दृष्ट्वा तं देवदेवेशं भक्त्या पूज्य प्रणम्य च ।
दशानामश्वमेधानां फलं दशगुणं लभेत् ॥
पापैः सर्व्वैर्विनिर्म्मुक्तो गुणैः सर्व्वैरलङ्कृतः ।
सर्व्वकामसमृद्धात्मा जरामरणवर्ज्जितः ॥
सौवर्णेन विमानेन किङ्किणीजालमालिना ।
सर्व्वकामसमृद्धेन कामगेन सुवर्च्चसा ॥
तरुणादित्यवर्णेन मुक्ताहारावलम्बिना ।
दिव्यस्त्रीशतयुक्तेन दिव्यगन्धर्व्वनादिना ॥
कुलैकविंशमुद्धृत्य देववन्मुदितः सुखी ।
स्तूयमानोऽप्सरोभिश्च विष्णुलोकं व्रजेन्नरः ॥
भुक्त्वा तत्र वरान् भोगान् विष्णुलोके द्विजोत्तमः ।
गन्धर्व्वैरप्सरैर्युक्तः कृत्वा रूपं चतुर्भुजम् ॥
[1]समाह्लादकरं सौख्यं यावदाहूतसंप्लवम् ।
पुण्यक्षयादिहायातः प्रवरे योगिनां कुले ॥
चतुर्व्वेदी भवेद्विप्रो वेदवेदाङ्गपारगः ।
वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात् ॥

तथाच तत्रैव ब्रह्मोवाच—

अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च ।

---

(१) क ख पुस्तकद्वये मनो।

सर्व्वपापविनिर्म्मुक्तो नरो याति परं पदम्॥
सर्व्वलक्षणसंयुक्तं पुण्डरीकायतेक्षणम्।
[1]श्रीवत्सोरस्कसंयुक्तं सुप्रसन्नं चतुर्भुजम्॥
वनमालावृतोरस्कं मुकुटाङ्गदधारिणम्।
पीतवस्त्रं सुपीनांसं कुण्डलाभ्यामलङ्कृतम्॥
श्वेतगङ्गां नरः स्नात्वा यः पश्येत् श्वेतमाधवम्।
मत्स्याख्यं माधवञ्चैव श्वेतद्वीपं स गच्छति॥

मुनय ऊचुः।

श्वेतमाधवमाहात्म्यं वक्तुमर्हस्यशेषतः।
विस्तरेण जगन्नाथ प्रतिमां तस्य वै हरेः॥

तथा तत्रैव ब्रह्मोवाच।

अभूत् कृतयुगे विप्राः श्वेतो नाम महाबली।
स गत्वा परमं क्षेत्रं सागरं दक्षिणाश्रयम्॥
श्वेतोऽथ कारयामास प्रासादं शुभलक्षणम्।
[2]धन्वन्तरशतञ्चैकं देवदेवस्य दक्षिणे॥
ततः श्वेतेन विप्रेन्द्राः श्वेतशैलमयेन तु।
कृतः स भगवान् श्वेतमाधवस्त्विन्दुसन्निभः॥

श्वेतो नाम राजा—तं प्रति भगवद्वाक्यम्।

कुशाग्रेणापि राजेन्द्र श्वेतगाङ्गेयमम्बु च।
स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये समाहिताः॥

---

(१) क ग पुस्तकद्वये श्रीवत्सोरसि।

(२) क ख पुस्तके सन्वन्तरशतम्।

यस्त्विमां प्रतिमां गच्छेन्माधवाख्यां शशिप्रभाम् ।
शङ्ख-गोक्षीरसङ्काशामशेषाघविनाशिनीम् ॥
तां प्रणम्य सकृद्भक्त्या पुण्डरीकनिभेक्षणाम् ।
विहाय सर्व्वलोकान् वै मम लोके महीयते ॥
मन्वन्तराणि तत्रैव देवकन्याभिरावृतः ।
गीयमानश्च मधुरं सिद्धगन्धर्व्वसेवितः ॥
भुनक्ति विपुलान् भोगान् यथेष्टं मामकैः सह ।
च्युतस्तस्मादिहागत्य मनुष्यो ब्राह्मणो भवेत् ॥
वेदवेदाङ्गवित् श्रीमान् भोगवान् चिरजीवितः ।
गजाश्वरथशालाढ्यो धनधान्यावृतः शुचिः ।
रूपवान् [1]बहुभाग्यश्च पुत्रपौत्रसमन्वितः ॥
पुरुषोत्तमं पुनः प्राप्य वटमूलेऽथ सागरे ॥
त्यक्त्वा देहं हरिं स्मृत्वा ततः शान्तं पदं व्रजेत् ।
श्वेतमाधवमालोक्य समीपे मत्स्यमाधवम् ॥
एकार्णवे जले पूर्व्वं रोहितं रूपमास्थितम् ।
वेदानां हरणार्थाय रसातलतले स्थितम् ॥
चिन्तयित्वा श्वेतमत्स्यं कस्मिन् स्थाने व्यवस्थितम् ।
आद्यावतरणं रूपं माधवं [2]मत्स्यरूपिणम् ॥
प्रणम्य प्रयतो भूत्वा सर्व्वान् दुःखान् विमुञ्चति ।
प्रयाति परमं स्थानं यत्र देवो हरिः स्वयम् ॥

---

(१) घ पुस्तके—भार्य्यश्च ।

(२) ग पुस्तके—साद्दयम् ।

काले पुनरिहायातो राजा स्यात् पृथिवीतले।
मत्स्यमाधवमासाद्य दुराधर्षो भवेन्नरः॥
दाता भोक्ता भवेद्यज्वा वैष्णवः सत्यसङ्गरः।
योगं प्राप्य हरेः पश्चात् ततो मोक्षमवाप्नुयात्॥
मत्स्यमाधवमाहात्म्यं मया सम्परिकीर्त्तितम्।
यं दृष्ट्वा मुनिशार्दूलाः सर्व्वान् कामानवाप्नुयात्॥

तत्रैव—ब्रह्मपुराणे मुनय ऊचुः।

भगवन् श्रोतुमिच्छामो मार्ज्जनं वरुणालये।
क्रियते स्नानदानादि तस्याशेषफलं वद॥

ब्रह्मोवाच।

शृणुध्वं मुनिशार्दूला मार्ज्जनञ्च यथाविधि।
भक्त्या तु तन्मना भूत्वा पुराणं पुण्यमुक्तिदम्॥
मार्कण्डेयह्रदे स्नानं सर्व्वकालं प्रशस्यते।
चतुर्द्दश्यां विशेषेण सर्व्वपापप्रणाशनम्॥
तद्वत् स्नानं समुद्रस्य सर्व्वकालं प्रशस्यते।
पौर्णमास्यां विशेषेण हयमेधफलं लभेत्॥
मार्कण्डेयं वटं कृष्णं रौहिणेयं महोदधिम्।
इन्द्रद्युम्नसरश्चैव पञ्चतीर्थीविधिः स्मृतः॥

एका यात्रा अयमत्र प्रयोगः।

[ ॐ अद्य ज्येष्ठशुक्लद्वादश्यां विष्णुलोकप्राप्तिपूर्व्वक-तदप्रच्यवनकामः पुरुषोत्तमदर्शनमहं करिष्ये। यद्वा—

ज्यैष्ठशुक्लैकादश्यां कृतोपवासो द्वादश्यामुदिते रवौ—][१]

ॐ अद्य ज्यैष्ठशुक्लद्वादश्यां कुरुक्षेत्राधिकरणकनिराहार-जितेन्द्रियजितक्रोधकर्त्तृकसप्तसंवत्सरायुतावच्छिन्नैकपादतपश्चरण--जन्यफलाधिकफलप्राप्तिकामः सोपवासः पुरुषोत्तमदर्शनमहं करिष्ये।

यद्वा पञ्चतिर्थि-विधिना पश्येत्। तद्यथा—

पूर्व्ववत् सोपवासो मार्कण्डेयसरो गत्वा कृतस्नानादिः कुश-तिल-जलान्यादाय—ॐ अद्य दशाश्वमेधजन्य[२]फलसमफलप्राप्ति-सर्व्वपापविनिर्मुक्ति-शिवलोकगमन-तदधिकरणकयावदाहूतसंप्लव-वरबहुभोगोपभोगपूर्व्वकैतल्लोकाधिकरणकबहुश्रुतब्राह्मणत्वभवन-तदुत्तरशाङ्करयोगप्राप्तिपूर्व्वकमोक्षावाप्तिकामो मार्कण्डेयह्रद-स्नानपूर्व्वकमार्कण्डेयेश्वरदर्शनमहं करिष्ये। इति सङ्कल्पः।

तत्र स्वशाखोक्तविधिना तदस्नाने साधारणेन पौराणिक-विधिना स्नायात्। ततो नैरन्तर्य्येणैव—

ॐ संसारसागरे मग्नं पापग्रस्तमचेतनम्।
त्राहि मां [३]भगवन्नत्र त्रिपुरारे नमोऽस्तु ते॥
नमः शिवाय शान्ताय सर्व्वपापहराय च।
स्नानं करोमि देवेश मम नश्यतु पातकम्॥

इति मन्त्रेण तत्रोदङ्मुखस्त्रिर्मज्जेत्।

---

(१) [ ] चिह्नितांशः ख पुस्तके नास्ति।
(२) ग पुस्तके—यज्ञ।
(३) ग पुस्तके—भगवेनत्र।

ततो नाभिमात्रे जले यवाद्भिर्देवादीन् सतिलाद्भिः पित्रादीं-स्तर्पयित्वा उत्तीर्य्य धौते वाससी परिधाय, मृद्वारिभ्याम् जरू-जङ्घे च प्रक्षाल्याचम्य शिवालयं प्रविश्य, शिवं प्रदक्षिणीकृत्य—"ॐ नमः शिवाय" इति मूलमन्त्रेण त्रिःसम्पूज्य पञ्चोपचारान् कृत्वा प्रणिपत्य—

ॐ त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण।
त्राहि मां त्वं विरूपाक्ष महादेव नमोऽस्तु ते॥

इति पठित्वा प्रसाद्य—"भगवन् मार्कण्डेयेश्वर क्षमस्व" इति विसर्ज्जयेत्। ततोऽक्षयवटं गत्वा—

ॐ अद्य पापक्षयकामोऽक्षयवटप्रदक्षिणत्रयपूर्व्वकनमस्कार-महं करिष्ये॥

इति सङ्कल्प्य तं त्रिः प्रदक्षिणीकृत्य प्रणमेत्। ततः पूर्व्व-वत्सङ्कल्प्याक्षयवटं भक्त्या पूजयेत्॥

तत्र पूजामन्त्रः—

ॐ नमोऽव्यक्तरूपाय महाप्रलयकारिणे।
महद्रसोपविष्टाय न्यग्रोधाय नमोऽस्तु ते॥
अमरस्त्वं सदा कल्पे हरेश्चायतनं वट।
न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते॥

ततः ॐ अद्य ब्रह्महत्यादिपापक्षयकामोऽक्षयवटच्छायाक्रमण-महं करिष्ये।

इति सङ्कल्प्य तस्य छायायां क्षणं तिष्ठेत्।

ततः—ॐ अद्य राजसूयाश्वमेधयज्ञजन्यफलाधिकफलप्राप्ति-

स्ववंशोद्धारपूर्व्वकविष्णुलोकमहितत्वकामो अक्षयवटदर्शनमहं करिष्ये।

इति सङ्कल्प्य अक्षयवटं पश्येत्। प्रणिपातेऽप्येतदेव फलम्। ततः—

कृष्णपुरतःस्थितस्य वैनतेयस्य समीपं गत्वा—

ॐ अद्य सर्व्वपापविनिर्म्मुक्तात्वात्मीयविष्णुपुरगमनकामो वैनतेयनमस्कारमहं करिष्ये। इति सङ्कल्प्य—तं नमस्कुर्य्यात्। ततो विष्णोरायतनद्वारि प्राङ्मुख उदङ्मुखो वा उपविश्य—

ॐ अद्य परमगतिप्राप्तिकामः पुरुषोत्तमदर्शनमहं करिष्ये, इति सङ्कल्प्य पुरुषोत्तममुखं पश्येत्। तत एवमेव सङ्कर्षणस्य दर्शनं सङ्कल्प्य कुर्य्यात्। एवमेव सुभद्रादर्शनं सङ्कल्प्य कुर्य्यात्।

ततो विष्णोरायतनं प्रविश्य—विष्णुं त्रिः प्रदक्षिणीकुर्य्यात्। ततः—ॐ अद्य अभिमतफलप्राप्ति-सर्व्वपापविनिर्म्मुक्त्यात्मीयविष्णुलोकगमन–तदधिकरणकाङ्क्षितसंप्लवव्यापिसुखभोग–तदुत्तरैहिकयोगिब्राह्मणप्रवरकुलजात–सर्व्वशास्त्रार्थपारगब्राह्मणप्रवरत्वभवन-तदुत्तरज्ञानप्राप्तिपूर्व्वकमोक्षप्राप्तिकामः सङ्कर्षणपूजनमहं करिष्ये।

इति सङ्कल्प्य सङ्कर्षणं पूजयेत्।

तत्र मन्त्रः—

ॐ नमस्ते हलधृग्राम नमस्ते मुषलायुध।
नमस्ते रेवतीकान्त नमस्ते भक्तवत्सल॥
नमस्ते बलिनां श्रेष्ठ नमस्ते धरणीधर।
प्रलम्बारे नमस्तेऽस्तु त्राहि मां कृष्णपूर्व्वज॥

ततः पञ्चोपचारान् कृत्वा इममेव मन्त्रं पठित्वा प्रणिपत्य प्रसादयेत् । ततः—

ॐ अद्य मोक्षप्राप्तिकामो द्वादशाक्षरमन्त्रेण पुरुषोत्तममहं पूजयिष्ये ।

इति सङ्कल्प्य "ॐ नमो भगवते वासुदेवाय" इति द्वादशाक्षर-मन्त्रेण गन्ध-पुष्प-धूप-दीप-नैवेद्यैः पुरुषोत्तमं पूजयेत् । ततः—

ॐ जय कृष्ण जगन्नाथ जय सर्व्वाघनाशन ।
जय चानूरकेशिघ्न जय कंसनिसूदन ॥
जय पद्मपलाशाक्ष जय चक्रगदाधर ।
जय नीलाम्बुदश्याम जय सर्व्वसुखप्रद ॥
जय देव जगत्पूज्य जय संसारनाशन ।
जय लोकपते नाथ जय वाञ्छाफलप्रद ॥
संसारसागरे घोरे[1] निःसारे दुःखफेनिले ।
क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे ॥
नानारोगोर्म्मिकलिले[2] मोहावर्त्तसुदुस्तरे ।
निमग्नोऽहं सुरश्रेष्ठ त्राहि मां पुरुषोत्तम ॥

इति मन्त्रं पठित्वा प्रणिपत्य प्रसादयेत् ।

अथ प्रसादनानन्तरं—

पीनांसं द्विभुजं कृष्णं पद्मपत्रायतेक्षणम् ।
महोरस्कं महाबाहुं पीतवस्त्रं शुभाननम् ॥

---

(१) घ पुस्तके दुःखसन्तापफेनिले ।

(२) ग पुस्तके—कलिले ।

शङ्ख-चक्र-गदापाणिं मुकुटाङ्गदभूषणम् ।
सर्व्वलक्षणसंयुक्तं वनमालाविभूषितम् ॥

कृष्णं पश्येत् ।

तत्र सङ्कल्पः—

ॐ अद्याश्वमेधसहस्रजन्यफलसमफलप्राप्तिकामः कृष्णदर्शनमहं करिष्ये ।

सर्व्वतीर्थाधिकरणकस्नानदान-
जन्यफलसमफलप्राप्तिकामो वा ।
सर्व्ववेदाध्ययन सर्व्वयज्ञाचरण-
जन्यफलसमफलप्राप्तिकामो वा ॥
सर्व्वदानव्रतनियमजन्य-
फलसमफलप्राप्तिकामो वा ।
विविधोग्रतपश्चरणजन्यफल-
समफलप्राप्तिकामो वा ॥
सम्यक्चीर्णब्रह्मचर्य्यजन्यफल-
समफलप्राप्तिकामो वा ।
सम्यक् गृहाश्रमपरिपालनजन्य-
फलसमफलप्राप्तिकामो वा ॥

यद्वा—

ॐ अद्य एकविंशतिकुलोद्धरणपूर्व्वकजन्मकोटिसमुद्भववहुपापविनिर्म्मुक्ति—परमश्रीयुतसर्व्वगुणोपेतात्मकर्त्तृक—सर्व्वकामसमृद्ध-

सुवर्च्चो विमानकरणकविष्णुपुरगमन-तदधिकरणककल्पशतपर्य्यन्त-गन्धर्व्वाप्सरःसहित-चतुर्भुजात्मीयविष्णुवन्मनोरम-बहुभोगोपभोग-तदुत्तरैहिकविप्रप्रवरकुलाधिकरणकसर्व्वज्ञ--सर्व्ववेदि-गतमत्सर-स्वधर्म्मनिरत-शान्त-दान्त-भूतहितरतात्मीयजन्म-तदुत्तरवैष्णवयोग-प्राप्तिपूर्व्वकमोक्षावाप्तिकामः कृष्णदर्शनमहं करिष्ये।

प्रणामेऽपि पूर्व्वोक्तेष्वन्यतमत् फलमिति।

अथ सुभद्रापूजा।

ॐ अद्य कामगविमानकरणकविष्णुपुरगमन-तदधिकरणका-हूतसंप्लवपर्य्यन्तदेववत्क्रीड़न--तदुत्तरैहिकवेदविद्ब्राह्मणत्वभवन--तदुत्तरहरियोगप्राप्तिपूर्व्वकमोक्षप्राप्तिकामः सुभद्रापूजनमहं करिष्ये।

इति सङ्कल्प्य पञ्चोपचारेण पूजयेत्।

पूजामन्त्रस्तु—

ॐ नमस्ते सर्व्वगे देवि नमस्ते शुभसौख्यदे।
त्राहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते॥

प्रणिपाते प्रसादने चाऽयं मन्त्रः।

एवं सङ्कर्षणं, कृष्णं, सुभद्राञ्च दृष्ट्वा सम्पूज्य प्रणम्य स्तुत्वा देवालयान्निष्क्रम्य पुनः पुरुषोत्तमं प्रणम्य कृतकृत्यो भवति। ततः—

पुरुषोत्तमात् प्रथमं ब्रह्मस्थापितामिन्द्रनीलमयीं विष्णु-प्रतिमां पुरुषोत्तमदक्षिणे अक्षयवटवायव्ये वालुकाच्छन्नामन्त-र्हितां गत्वा—

तत्र ॐ अद्य विष्णुपुरगमनकाम इन्द्रनीलमयविष्णुप्रणाममहं करिष्ये । इति सङ्कल्प्य प्रणमेत् ।

ॐ अद्य महापातकविमुक्ति-शताश्वमेधजन्यफलसमफल-प्राप्ति एकविंशतिकुलोद्धरणपूर्व्वकसर्व्वगुणालङ्कृतसर्व्वकामसमृद्ध-जरामरणविवर्ज्जित-देववन्मुदित-सुखित्वाप्सरःस्तूयमानात्मकर्त्तृक-सौवर्णकिङ्किणीजालमालि-सर्व्वकामसमृद्ध-कामग-सुवर्च्चस्तरुणा-दित्यवर्ण--मुक्ताहारालम्बि--दिव्यस्त्रीशतयुक्त--दिव्यगन्धर्व्वनादि-विमान--करणकविष्णुपुरगमन---तदधिकरणकमनःसमाह्लादकर-सौख्य---चतुर्भुजरूपकरणपूर्व्वकाहूतसंप्लवव्यापि--गन्धर्व्वाप्सरोयुत-स्वीयबहुवरभोगोपभोगपूर्व्वकैहिकप्रवरयोगिकुलाधिकरणकचतु--र्व्वेदिवेदवेदाङ्गपारगविप्रत्वभवन--वैष्णवयोगहेतुकमोक्षप्राप्तिकामो नरसिंहदर्शनमहं करिष्ये ।

इति सङ्कल्प्य तं पश्येत् । पूजायामेवम् । प्रणामेऽप्येवम् ।

ततोऽनन्ताख्यं वासुदेवं गत्वा—ॐ अद्य सर्व्वपापविनिर्म्मुक्त्या-त्मीयपरमपदप्राप्तिकामो अनन्ताख्यवासुदेवसन्दर्शनमहं करिष्ये । प्रणामेऽप्येवमिति ।

ततः श्वेतगङ्गां गत्वा—ॐ अद्य श्वेतद्वीपगमनकामः श्वेतगङ्गा-स्नानपूर्व्वकश्वेतमाधवदर्शनमहं करिष्ये ॥

इति सङ्कल्प्य श्वेतगङ्गायां वैधस्नान-तर्पणे कृत्वा श्वेतमाधवं पश्येत् । ततः—

ॐ अद्य ब्रह्मलोकमहितत्व-तदधिकरणकबहुब्रह्मपुरुषसहित बहुदेवकन्यावृत-तदुपगीयमानसिद्ध-गन्धर्व्व-सेवितस्वीययथेष्टविपुल

बहुभोगपूर्व्वकैहिकवेदवेदाङ्गवित् श्रीमद्भोगवच्चिरजीविगजाश्वरथ-माल्याढ्यधनधान्यावृतशुचिरूप-बहुभाग्यपुत्रपौत्रसमन्वितब्राह्मणत्वभवन-तदुत्तरपुरुषोत्तमप्राप्ति-वटमूलसागराधिकरणकदेहत्याग-हरिस्मरणपूर्व्वकशान्तपदगमनकामो गमनपूर्व्वकश्वेतमाधव-प्रणाममहं करिष्ये।

इति सङ्कल्प्य तत्रैव पदमेकं तदभिमुखं गत्वा प्रणमेत्। ततः पुनः श्वेतगङ्गां गत्वा—

ॐ अद्य श्वेतद्वीपगमनकामः श्वेतगङ्गास्नानपूर्व्वकमत्स्यमाधव-दर्शनमहं करिष्ये।

इति सङ्कल्प्य श्वेतगङ्गायां वैधस्नानतर्पणे कृत्वा मत्स्यमाधवं पश्येत्।

ॐ अद्य नारायणाधिष्ठितपरमस्थानगमन-तदुत्तरपृथिवी-तलाधिकरणक-दातृ-भोक्तृ-यज्व-वैष्णव-सत्यसन्धराजत्वभवन-तदुत्तर-हरियोगप्राप्तिपूर्व्वक-मोक्षावाप्तिकामो मत्स्यमाधवदर्शन-प्रणामावहं करिष्ये।

इति सङ्कल्प्य मत्स्यमाधवदर्शन-प्रणामौ कुर्य्यात्।

इति ज्यैष्ठशुक्लद्वादशीकृत्यम्।

ब्रह्मपुराणे—

मार्कण्डेयह्रदे स्नानं सर्व्वकालं प्रशस्यते।
चतुर्द्दश्यां विशेषेण सर्व्वपापप्रणाशनम्॥
तद्वत् स्नानं समुद्रस्य सर्व्वकालं प्रशस्यते।
पौर्णमास्यां विशेषेण हयमेधफलं लभेत्॥

तथा—

पूर्णिमा ज्यैष्ठमासस्य ज्येष्ठा ऋक्षं यदा भवेत् ।
तदा गच्छेद्विशेषेण तीर्थराजं परं शुभम् ॥

विशेषेण इति वचनादन्यत्रापि सागरस्नानमविरुद्धम् ।

कायवाङ्मानसैः शुद्धस्तद्भावो नान्यमानसः ।
सर्व्वद्वन्द्वविनिर्म्मुक्तो वीतरागो विमत्सरः ॥
कल्पवृक्षवटं रम्यं यत्र साक्षाज्जनार्द्दनः ।
प्रदक्षिणं प्रकुर्व्वीत (?) त्रयोवारान् समाहितः ॥
यं दृष्ट्वा मुच्यते पापात् सप्तजन्मसमुद्भवात् ।
पुण्यञ्चाप्नोति विपुलं गतिमिष्टाञ्च भो द्विजाः ॥
तस्य नामानि वक्ष्यामि प्रमाणञ्च युगे युगे ।
यथासङ्ख्यञ्च भो विप्राः कृतादिषु यथाक्रमम् ॥
वटं वटेश्वरञ्चैव पुराणं [1]पुरुषं द्विजाः ।
वटस्यैतानि नामानि कीर्त्तितानि कृतादिषु ॥
योजनं पादहीनञ्च योजनार्द्धं तदर्द्धकम् ।
प्रमाणं कल्पवृक्षस्य कृतादौ परिकीर्त्तितम् ॥
पूर्व्वोक्तेन तु मन्त्रेण नमस्कृत्वा तु तं वटम् ।
दक्षिणाभिमुखो गच्छेद्धन्वन्तरशतत्रयम् ॥
यत्रासौ दृश्यते [2]चिह्नं स्वर्गद्वारं मनोरमम् ।
सागराम्भः[3]समाकृष्टं काष्ठं सर्व्वगुणान्वितम् ॥

(१) घ पुस्तके वटेश्वरं कृष्णं पुराणपुरुषम् ।

(२) ग पुस्तके विष्णुः ।   (३) घ पुस्तके—समाकीर्णम् ।

प्रणिपत्य ततस्तस्थौ परिपूज्य ततः पुनः।
मुच्यते सर्व्वरोगाद्यैस्तथा पापैर्ग्रहादिभिः॥
उग्रसेनं पुरा दृष्ट्वा स्वर्गद्वारेण [1]सागरम्।
गत्वाचम्य शुचिस्तत्र ध्यात्वा नारायणं परम्॥
न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्त-शरीरयोः।
(ॐ) नमो नारायणायेति संवदन्ति मनीषिणः॥
किं कार्य्यं बहुभिर्मन्त्रैर्मनोविभ्रमकारकैः।
(ॐ) नमो नारायणायेति मन्त्रः सर्व्वार्थसाधकः॥
आपो नरस्य सूनुत्वात् नारा इति ह कीर्त्तिताः।
[2]विष्णोस्तास्त्वयनं पूर्व्वं तेन नारायणः स्मृतः॥
नारायणपरा देवा नारायणपरा द्विजाः।
नारायणपरा ज्ञानाः नारायणपराः क्रियाः॥
नारायणपरो धर्म्मो नारायणपरं तपः।
नारायणपरं दानं नारायणपरं व्रतम्॥
नारायणपरा लोका नारायणपराक्षराः।
नारायणपरं नित्यं नारायणपरं पदम्॥
नारायणपरा पृथ्वी नारायणपरं जलम्।
नारायणपरो वह्निः नारायणपरं नभः।
अहङ्कारश्च बुद्धिश्च उभे नारायणात्मके॥
भूतं भव्यं भविष्यच्च यत्किञ्चिज्जीवसंज्ञितम्।

---

(१) ग पुस्तके सङ्गतम्।

(२) घ पुस्तके तास्वयनम्।

स्थूलं सूक्ष्मं परञ्चैव सर्व्वं नारायणात्मकम् ।
शब्दाद्या विषयाः सर्व्वे श्रोत्रादीनीन्द्रियाणि च ॥
प्रकृतिः पुरुषश्चैव सर्व्वे नारायणात्मकाः ।
जले स्थले च पाताले दिक्षु नागेऽम्बरे नगे ॥
अवष्टभ्य इदं सर्व्वमास्ते[1] नारायणः प्रभुः ।
किञ्चात्र बहुनोक्तेन जगदेतच्चराचरम् ॥
ब्रह्मादिस्तम्बपर्य्यन्तं सर्व्वं नारायणात्मकम् ।
नारायणात् परं किञ्चित् नेह पश्यामि भो द्विजाः ॥
तेन व्याप्तमिदं सर्व्वं [2]दृश्यमानं चराचरम् ।
आपो ह्यायतनं विष्णोः स च एवाम्भसां पतिः ॥
तस्मादप्सु स्मरेन्नित्यं नारायणमघापहम् ।
स्नानकाले विशेषेण चोपस्थाय परं शुचिः ॥
स्मरेन्नारायणं ध्यायेत् हस्ते काये च विन्यसेत् ।
ॐकारञ्च नकारञ्च यत्किञ्चिज्जीवसंज्ञकम् ॥
अङ्गुष्ठे हस्ते पादे च शिखायां शिरसि न्यसेत् ।
शेषैर्हस्ततलै[3]र्यावत् तर्ज्जन्यादिषु विन्यसेत् ॥
ॐकारं वामपादे तु नकारं दक्षिणे न्यसेत् ।
मोकारं वामकट्यान्तु नाकारं दक्षिणे तथा ॥

---

(१) ख पुस्तके अन्ते ।
(२) ग पुस्तके दृश्याऽदृश्यम् ।
(३) ख पुस्तके शेषं हस्ततलम् ।

राकारं नाभिदेशे तु यकारं वामबाहुके।
णाकारं दक्षिणे न्यस्य यकारं मूर्द्ध्नि विन्यसेत्॥
अधश्चोर्द्ध्वञ्च हृदये पार्श्वतः पृष्ठतोऽग्रतः।
ध्यात्वा नारायणं पश्चादारभेत् कवचं बुधः॥
पूर्व्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः।
पश्चिमे श्रीधरो देवः केशवस्तु तथोत्तरे॥
पातु विष्णुस्तथाग्नेये नैर्ऋते माधवोऽव्ययः।
वायव्ये तु हृषीकेशस्तथेशाने च माधवः॥
भूतले पातु वाराहस्तथोर्द्ध्वञ्च त्रिविक्रमः।
कृत्वैवं कवचं पश्चात् आत्मानं चिन्तयेत् बुधः॥
अहं नारायणो देवः शङ्ख-चक्र-गदाधरः।
एवं ध्यात्वा तदात्मानमिमं मन्त्रमुदीरयेत्॥
त्वमग्निर्द्विपदां[1] नाथ रेतोधाः कामदीपनः।
प्रधानः सर्व्वभूतानां जीवानां प्रभुरव्ययः॥
अमृतस्यारणिस्त्वं हि देवयोनिरपांपते।
वृजिनं हर मे [2]सर्व्वं तीर्थराज नमोऽस्तु ते॥
एवमुच्चार्य्य विधिवत् ततः स्नानं समाचरेत्।
अन्यथा भो द्विजश्रेष्ठाः स्नानं तत्र न शस्यते॥
कृत्वा [3]चाब्दैवतैर्मन्त्रैरभिषेकञ्च मार्ज्जनम्।
अन्तर्जले जपेत् पश्चात् त्रिरावृत्त्याऽघमर्षणम्॥

---

(१) ख पुस्तके द्विषताम्। (२) मूलपुस्तके—तु वैदिकैः।
(२) घ पुस्तके देव।

हयमेधो यथा विप्राः सर्व्वपापहरः क्रतुः ।
तथाघमर्षणञ्चात्र सूक्तं सर्व्वाघनाशनम् ॥
उत्तीर्य्य वाससी धौते निर्णिक्ते परिधाय वै ।
प्राणानायम्य चाचम्य सन्ध्याञ्चोपास्य भास्करम् ॥
उपतिष्ठेत्ततश्चोर्द्ध्वं क्षिप्त्वा पुष्पजलाञ्जलिम् ।
उपस्थायोर्द्ध्वबाहुश्च तल्लिङ्गैर्भास्करं ततः ॥
गायत्रीं पावनीं देवीं जपेदष्टोत्तरं शतम् ।
अन्यांश्च सौरमन्त्रांश्च जप्त्वा तिष्ठन् समाहितः ॥
कृत्वा प्रदक्षिणं सूर्य्यं नमस्कृत्योपविश्य च ।
स्वाध्यायं प्राङ्मुखः कृत्वा तर्पयेद्दैवतानृषीन् ॥
मनुष्यांश्च पितॄंश्चान्यान्नामगोत्रेण मन्त्रवित् ।
तोयेन तिलमिश्रेण तर्पयेत् सुसमाहितः ॥
तर्पणं देवतानान्तु पूर्व्वं कृत्वा समाहितः ।
अधिकारी भवेत् पश्चात् पितॄणां तर्पणे द्विजाः ॥
श्राद्धे हवनकाले च पाणिनैकेन [१]निर्व्वपेत् ।
तर्पणे [२]त्रितयं कुर्य्यादेष एव विधिः सदा ॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
तृप्यतामिति वक्तव्यं नामगोत्रेण वाग्यतैः ॥
कायस्थैर्यस्तिलैर्मोहात् करोति पितृतर्पणम् ।
तर्पितास्तेन पितरस्त्वङ्मांसरुधिरास्थिभिः ॥

---

(१) ग पुस्तके तर्पयेत् ।

(२) मूलपुस्तके—द्वितीयम् ।

अङ्गस्थैर्न तिलैः कुर्य्याद्देवता-पितृतर्पणम् ।
रुधिरं तद्भवेत्तोयं प्रदाता किल्बिषी भवेत् ॥
भूम्यां यद्दीयते तोयं दाता चैव जले स्थितः ।
वृथा तन्मुनिशार्दूला नोपतिष्ठति कस्यचित् ॥
स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठेत् पितॄणान्तु सलिलं तन्निरर्थकम् ॥
उदके नोदकं कुर्य्यात् पितृभ्यश्च कदाचन ।
उत्तीर्य्य तु शुचौ देशे कुर्य्यादुदकतर्पणम् ॥
नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यद्भूम्यां न प्रदीयते ॥
पितॄणामक्षयं स्थानं[1] मही दत्ता मया द्विजाः ।
तस्मात्तत्रैव दातव्यं पितॄणां प्रीतिमिच्छता ॥
भूमिपृष्ठे समुत्पन्ना भूम्यां चैव तु संस्थिताः ।
भूम्यां चैव लयं याता भूमौ दद्यात्ततो जलम् ॥
आस्तीर्य्य च कुशान् साग्रान् तानावाह्य च मन्त्रतः ।
प्राचीनाग्रेषु वै देवान् याम्याग्रेषु तथा पितॄन् ॥
देवान् पितॄन् तथा चान्यान् सन्तर्प्याचम्य वाग्यतः ।
हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनम् ॥
पुरं प्रलिख्य[2] भो विप्रास्तीरे तस्य महोदधेः ।
मध्ये तत्र लिखेत् पद्ममष्टपत्रं सकर्णिकम् ॥

---

(१) घ पुस्तके—सम्यक् ।
(२) ग पुस्तके—प्रलिप्य ।

एवं मण्डलमालिख्य पूजयेत्तत्र भो द्विजाः ।
अष्टाक्षरविधानेन नारायणमजं विभुम् ॥
अतः परं प्रवक्ष्यामि कायशोधनमुत्तमम् ।
आकारं हृदये चिन्त्यं[1] रक्तं रेफसमन्वितम् ॥
ज्वलन्तं त्रिशिखञ्चैव दहनं पापनाशनम् ।
चन्द्रमण्डलमध्यस्थम् आ(रा)कारं मूर्द्ध्नि विन्यसेत् ॥
शुक्लवर्णं प्रवर्षन्तममृतं प्लावयन्महीम् ।
एवं निर्धूतपापस्तु दिव्यदेहस्ततो भवेत् ॥
अष्टाक्षरं ततो मन्त्रं न्यसेदेवात्मनो बुधः ।
वामपादं समारभ्य क्रमशश्चैव विन्यसेत् ॥
पञ्चाङ्गं वैष्णवञ्चैव चतुर्व्यूहं तथैव च ।
करशुद्धिं प्रकुर्व्वीत मूलमन्त्रेण साधकः ॥
एकैकञ्चैव वर्णन्तु अङ्गुलीषु पृथक् पृथक् ।
ॐकारं भूर्लोकं शुक्लं[2] वामपादे तु विन्यसेत् ॥
नकारस्तु भुवो रक्तो[3] दक्षिणे तु व्यवस्थितः ।
मोकारो वामकव्यान्तु श्यामः सर्व्वैर्व्यवस्थितः ॥
नाकारः सर्व्वबीजन्तु दक्षिणस्यां व्यवस्थितः[4] ।
राकारः कुङ्कुमाभो जनलोको नाभिमाश्रितः ॥

---

(१) घ पुस्तके—चक्ररेखा- ।

(२) व पुस्तके—पृथिवीं शुक्लां ।

(३) ख पुस्तके—शाम्भवः श्यामः ।

(४) मूलपुस्तके—नाकारो रक्तवर्णो महर्लोको दक्षकव्याश्रितः ।

यकारः पीतवर्णश्च वामस्कन्धे समाश्रितः ।

णाकारः कज्जलाभः स्यात् दक्षिणांशे व्यवस्थितः ।

यकारोऽयं शिरस्थश्च यत्र लोकाः प्रतिष्ठिताः ॥

ॐ विष्णवे नमः—शिरः । ॐ ज्वलनाय नमः—शिखा । ॐ विष्णवे नमः—कवचम् । ॐ विष्णवे नमः स्फुरस्फुरदिशो बन्धनम् । ॐ हुं फड़स्त्रम् । ॐ शिरसि शुक्लो वासुदेव इति ।

ॐ आं ललाटे रक्तः सङ्कर्षणो गरुत्वान् वह्निस्तेज आदित्य इति ।

ॐ आं ग्रीवायां पीतः प्रद्युम्नो वायुर्मेघ इति । ॐ आं (श्रीं) हृदये [1]कृष्णोऽनिरुद्धः सर्व्वशक्तिसमन्वित इति ।

एवं चतुर्व्यूहमात्मानं कृत्वा ततः कर्म्म समाचरेत् ।

ममाग्रे च स्थितो विष्णुः पृष्ठतश्चापि केशवः ।

गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदनः ॥

उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले ।

अवान्तरदिशो यास्तु तासु सर्व्वासु माधवः ॥

गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।

नरसिंहकृता गुप्तिर्वासुदेवमयो ह्यहम् ॥

एवं विष्णुमयो भूत्वा ततः कर्म्म समारभेत् ।

यथात्मनि तथा देवे[2] सर्व्वतत्त्वानि योजयेत् ॥

---

(१) ग पुस्तके—कृष्टः ।

(२) क ख पुस्तकद्वये—यथा देहे ।

ततश्चैव प्रकुर्व्वीत प्रोक्षणं प्रणवेन तु ।
फट्कारान्तं समुद्दिष्टं सर्व्वविघ्नहरं शुभम् ॥
तत्रार्क-चन्द्र-वह्नीनां मण्डलानि विचिन्तयेत् ।
पद्ममध्ये[1] न्यसेद्विष्णुं पवनस्याम्बरस्य च ॥
ततो विचिन्त्य हृदये ॐकारं ज्योतीरूपिणम् ।
कर्णिकायां समासीनं ज्योतीरूपं सनातनम् ।
अष्टाक्षरं ततो मन्त्रं विन्यसेच्च यथाक्रमम् ॥
तेन व्यस्तसमस्तेन पूजनं परमं स्मृतम् ।
द्वादशाक्षरमन्त्रेण यजेद्देवं सनातनम् ॥
ततोऽवधार्य्य हृदये कर्णिकाया बहिर्न्यसेत्[2] ।
चतुर्भुजं महासत्वं सूर्य्यकोटिसमप्रभम् ॥
चिन्तयित्वा महायोगं ज्योतीरूपं सनातनम् ।
ततश्चावाहयेन्मन्त्री क्रमेणाचिन्त्यमानसे[3] ॥

आवाहनमन्त्रः—

मीनरूपो वराहश्च नरसिंहोऽथ वामनः ।
आयातु देवो वरदो मम नारायणोऽग्रतः ॥

ॐ नमो नारायणाय नमः ।

स्थापनमन्त्रः—

---

(१) ख पुस्तके—मध्ये मध्ये ।
(२) मूलपुस्तके—हरिं न्यसेत् ।
(३) क पुस्तके—क्रमशोऽचिन्त्यमास्थितः ।

कर्णिकायाम्।

ॐ सुमेरोः पादपीठेऽत्र पद्मकल्पितमासनम्।
सर्व्वसत्त्वहितार्थाय तिष्ठ त्वं मधुसूदन॥
ॐ नमो नारायणाय नमः।

अर्घ्यमन्त्रः—

ॐ त्रैलोक्यपतीनां पतये देवदेवाय हृषीकेशाय विष्णवे नमः।

ॐ नमो नारायणाय नमः॥

पाद्यमन्त्रः—

ॐ पाद्यन्तु पादयोर्देव पद्मनाभ सनातन।
विष्णो कमलपत्राक्ष गृहाण मधुसूदन॥
ॐ नमो नारायणाय नमः॥

मधुपर्कमन्त्रः—

मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं तव।
मया निवेदितं भक्त्या गृहाण पुरुषोत्तम॥
ॐ नमो नारायणाय नमः॥

तत्रैव ब्रह्मपुराणे—

आचमनीयमन्त्रः—

मन्दाकिन्याः सितं [1]वारि सर्व्वपापहरं शिवम्।
गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम्॥
ॐ नमो नारायणाय नमः।

(१) ख पुस्तके—मन्दाकिन्यास्तु ते वारि।

स्नानमन्त्रः—

त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च ।
लोकसन्धृतिमात्रेण[1] वारिणा स्नापयाम्यहम् ॥
ॐ नमो नारायणाय नमः ।

वस्त्रमन्त्रः—

ॐ—देव त्वं वाससा[2] युक्तो यज्ञवर्णसमन्वितः ।
स्वर्णवर्णप्रभं[3] देव वासः स्वीकुरु केशव ॥
ॐ नमो नारायणाय नमः ।

विलेपनमन्त्रः—

ॐ—शरीरन्ते न जानामि चेष्टाञ्चैव च केशव ।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ॥
ॐ नमो नारायणाय नमः ।

उपवीतमन्त्रः—

ॐ—ऋग्यजुःसाममन्त्रेण त्रिवृतं[4] पद्मयोनिना ।
सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत[5] ॥
ॐ नमो नारायणाय नमः ॥

---

(१) घ पुस्तके—लोकेशवृत्तिमात्रेण ।
(२) घ पुस्तके देवतत्वसमायुक्तः ।
(३) ख पुस्तके—प्रभे-वाससी तव ।
(४) क ख पुस्तकयोः निवृत्तम् ।
(५) ग पुस्तके तवार्पये ।

अलङ्कारमन्त्रः—

ॐ—दिव्यरत्नसमायुक्ता बह्निभानुसमप्रभाः[1] ।
गात्राणि शोभयन्त्वेते अलङ्काराश्च माधव ॥
ॐ नमो नारायणाय नमः ॥

ॐ ॐ-नमः । ॐ न-नमः । ॐ मो-नमः । ॐ ना-नमः । ॐ रा-नमः । ॐ य-नमः । ॐ णा-नमः । ॐ य-नमः । ॐ नमो नारायणाय नमः ।

एवं व्यस्तसमस्तेन मूलमन्त्रेण पूजयेत् ।

धूपमन्त्रः—

वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिश्च ते[2] ।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम् ॥
ॐ नमो नारायणाय नमः ।

दीपमन्त्रः—

ॐ सूर्य्याचन्द्रमसोर्ज्योतिर्विद्युदग्न्योस्तथैव च ।
त्वमेव ज्योतिषां देव दीपोऽयं प्रतिगृह्यताम् ॥
ॐ नमो नारायणाय नमः ।

नैवेद्यमन्त्रः—

ॐ—अन्नञ्चतुर्व्विधञ्चैव रसैः षड्भिः समन्वितम् ।
मया निवेदितं भक्त्या नैवेद्यं तव केशव ॥
ॐ नमो नारायणाय नमः ।

---

(१) क ख पुस्तकद्वये—समन्विताः ।

(२) ग पुस्तके सुमनोहरः ।

तथाच तत्रैव ब्रह्मपुराणे—

पूर्व्वे दले वासुदेवं याम्ये सङ्कर्षणं न्यसेत् ।
प्रद्युम्नं पश्चिमे कुर्य्यादनिरुद्धं तथोत्तरे ॥
वाराहञ्च तथाग्नेये नरसिंहञ्च नैरृते ।
वायव्ये माधवञ्चैव तथेशाने त्रिविक्रमम् ॥
तथाष्टाक्षरमन्त्रस्य[1] पुरतो गरुड़ं न्यसेत् ।
तथा महागदाञ्चैव न्यसेद्देवस्य दक्षिणे ॥
ततः शार्ङ्गधनुर्विद्वान् न्यसेद्देवस्य वामतः ।
दक्षिणेनेषुधी दिव्ये शङ्खं वामे च विन्यसेत् ॥
श्रियं दक्षिणतः स्थाप्य पुष्टिमुत्तरतो न्यसेत् ।
वनमालाञ्च पुरतस्ततः श्रीवत्स-कौस्तुभौ ॥
विन्यसेत् हृदयादीनि पूर्व्वादिषु चतुर्द्दिशम् ।
ततोऽस्त्रं देवदेवस्य कोणे चैव तु विन्यसेत् ॥
इन्द्रमग्निं यमञ्चैव नैरृतं वरुणन्तथा ।
वायुं धनदमीशानमनन्तं ब्रह्मणा सह ॥
पूजयेत्तान् [2]स्वकैर्मन्त्रैरधश्चोर्द्ध्वं तथैव च ।
एवं सम्पूज्य देवेशं मण्डलस्थं जनार्द्दनम् ॥
लभेदभिमतान् कामान् नरो नास्त्यत्र संशयः ।
अनेनैव विधानेन मण्डलस्थं जनार्द्दनम् ॥

---

(१) घ पुस्तके—देवस्य ।
(२) मूलपुस्तके—तान्त्रिकैः ।

पूजितं यस्तु पश्येत स विशेत् विष्णुमव्ययम् ।
सक्कदप्यर्च्चितो येन विधिनानेन केशवः ॥
जन्ममृत्युजरास्तीर्त्त्वा:[1] स विष्णोः पदमाप्नुयात् ।
यः स्मरेत् सततं भक्त्या नारायणमतन्द्रितः ॥
अन्वहं तस्य वासाय श्वेतद्वीपः प्रकल्पितः ।
ॐकारादिसमायुक्तं नमस्कारान्तदीपितम् ॥
स्वनाम सर्व्वसत्त्वानां मन्त्र इत्यभिधीयते ।
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ॥
एकैकस्य प्रकुर्व्वीत यथोद्दिष्टं क्रमेण तु ।
मुद्रास्ततो निबध्नीयात् यथोक्तक्रमचोदिताः ॥
जपञ्चैव प्रकुर्व्वीत मूलमन्त्रेण मन्त्रवित् ।
अष्टाविंशतिमष्टौ वा शतमष्टोत्तरं तथा ॥
कालेषु च तथाप्येवं[2] यथाशक्ति समाहितः ॥
पद्मं शङ्खश्च श्रीवत्सो गदा गरुड़ एव च ।
खड्गश्चक्रञ्च शार्ङ्गञ्च अष्टौ मुद्राः प्रकीर्त्तिताः ॥

विसर्ज्जनमन्त्रः—

गच्छ गच्छ परं स्थानं पुराणपुरुषोत्तम ।
यत्र ब्रह्मादयो देवा विन्दन्ति परमं पदम् ।
अर्च्चनं ये न जानन्ति हरेर्मन्त्रैर्यथोदितम् ।
ते तत्र मूलमन्त्रेण पूजयन्त्वच्युतं सदा ।

---

(१) क ख पुस्तकद्वये—जरास्तीर्णाः । ग पुस्तके—जरातीतम् ।
(२) ख पुस्तके—यथाप्रोक्तम् ।

ब्रह्मोवाच—

एवं सम्पूज्य विधिवत् भक्त्या तं पुरुषोत्तमम् ।
प्रणम्य शिरसा पश्चात् सागरञ्च प्रसादयेत् ॥
प्राणस्त्वं सर्व्वभूतानां योनिश्च सरितां पते ! ।
तीर्थराज नमस्तेऽस्तु त्राहि मामच्युतप्रिय ॥
स्नात्वैवं सागरे सम्यक् तस्मिन् क्षेत्रवरे द्विजाः ।
तीरे[1] चाभ्यर्च्य विधिवत् नारायणमनामयम् ॥
रामं कृष्णं सुभद्राञ्च प्रणिपत्य च सागरम् ।
शतानामश्वमेधानां फलं प्राप्नोति मानवः ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वदुःखविवर्ज्जितः ।
वृन्दारक इव श्रीमान् रूपयौवनगर्व्वितः ॥
विमानेनार्कवर्णेन दिव्यगन्धर्व्वनादिना ।
कुलैकविंशमुद्धृत्य विष्णुलोकञ्च गच्छति ॥
भुक्त्वा तत्र वरान् भोगान् क्रीड़ित्वा चाप्सरैः सह ।
मन्वन्तरशतं साग्रं जरा[2]मृत्युविवर्ज्जितः ॥
पुण्यक्षयादिहायातः कुले [3]सर्व्वगुणान्विते ।
रूपवान् सुभगः श्रीमान् सत्यवादी जितेन्द्रियः ॥
वेदशास्त्रार्थविद्विप्रो भवेद्यज्वा तु वैष्णवः ।
योगञ्च वैष्णवं प्राप्य ततो मोक्षमवाप्नुयात् ॥

---

(१) घ पुस्तके—तीर्थे ।

(२) ख पुस्तके—नरो मृत्यु- ।

ग्रहोपरागे संक्रान्त्यामयने विषुवे तथा ।
युगादिषु षड़शीत्यां व्यतीपाते दिनक्षये ॥
आषाढ़्याञ्चैव कार्त्तिक्यां माघ्याञ्चान्यशुभे तिथौ ।
ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति सुमेधसः ॥
फलं सहस्रगुणितमन्यतीर्थाल्लभन्ति ते ।
पितॄणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः ॥
अक्षयां पितरस्तेषां तृप्तिं संप्राप्नुवन्ति वै ।
एवं स्नानफलं सम्यक् सागरस्य मयोदितम् ॥
दानस्य च फलं विप्राः पिण्डदानस्य चैव हि ।
धर्म्मार्थ-काम[1]फलदमायुःकीर्त्तियशस्करम् ॥
भुक्तिमुक्तिप्रदं नृणां धन्यं दुःस्वप्ननाशनम् ।
सर्व्वपापहरं पुण्यं सर्व्वकामफलप्रदम् ॥
भूतले यानि तीर्थानि सरितश्च सरांसि च ।
विशन्ति सर्व्वतीर्थानि तेनासौ श्रेष्ठतां गतः ॥
नास्तिकाय न वक्तव्यं नरायेदं द्विजोत्तमाः ।
तावद् भ्रमन्ति तीर्थानि माहात्म्यैः स्वैः पृथक् पृथक् ॥
यावन्न तीर्थराजस्य माहात्म्यं वर्ण्यते द्विजाः ।
राजा समस्ततीर्थानां सागरः सरितां पतिः ॥
तस्मात् समस्ततीर्थेभ्यः श्रेष्ठोऽसौ सर्व्वकामदः ।
तमो नाशं यथाऽभ्येति भास्करेऽभ्युदिते द्विजाः ॥

(१) ग पुस्तके—मोक्ष- ।

स्नानेन तीर्थराजस्य तथा सर्व्वाघसंचयः।
कोव्यो नव नवत्यस्तु यत्र तीर्थानि सन्ति वै॥
कः शक्नोति गुणान् वक्तुं तीर्थराजस्य भो द्विजाः॥
तस्मात् स्नानञ्च दानञ्च होमं जप्यं सुरार्च्चनम्।
यत्किञ्चित् क्रियते चात्र चाक्षयं भवति द्विजाः॥

तत्रैव ब्रह्मोवाच—

ततो गच्छेद्विजश्रेष्ठास्तीर्थं यज्ञाङ्गसम्भवम्॥
इन्द्रद्युम्नसरो नाम यत्रास्ते पावनं शुभम्[१]॥
गत्वा तत्र शुचिः श्रीमानाचम्य मनसा हरिम्।
ध्यात्वोपस्थाय च [२]जलमिमं मन्त्रमुदीरयेत्॥
अश्वमेधाङ्गसम्भूततीर्थ सर्व्वाघनाशन।
स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते॥
एवमुच्चार्य्य विधिवत् स्नात्वा देवान् ऋषीन् पितॄन्।
तिलोदकेन भो विप्राः सन्तर्प्याचम्य वाग्यतः॥
दत्त्वा पितॄणां पिण्डांश्च सम्पूज्य पुरुषोत्तमम्।
दशाश्वमेधिकं सम्यक् फलं प्राप्नोति मानवः॥
सप्तावरान् सप्त पूर्व्वान् वंशानुद्धृत्य देववत्।
कामगेन विमानेन विष्णुलोकञ्च गच्छति॥
भुक्त्वा तत्र परान् भोगान् यावदाचन्द्रतारकम्।
च्युतस्तस्मादिहायातो मोक्षञ्च लभते ध्रुवम्॥

---

(१) घ पुस्तके—रविमिमं जलम्।
(२) क पुस्तके—शम्भूमन्त्रम्।

# अथ प्रयोगः।

तत्र—

ज्येष्ठानक्षत्रयुक्तायां तद्धीनायां वा ज्यैष्ठपूर्णिमायां तिथ्यन्तरे वा ॐ अद्य शताश्वमेधजन्यफलसमफलप्राप्त्येकविंशतिकुलोद्धरण-सर्व्वपाप-विनिर्म्मुक्ति-सर्व्वदुःख-विवर्ज्जित-वृन्दारकवत्-श्रीमद्रूप-यौवन-गर्व्वितस्वकर्त्तृकार्कवर्ण-दिव्यगन्धर्व्व-नादि-विमान-करणक-विष्णुलोकगमन-तदधिकरणक-जरामृत्युविवर्ज्जित-स्वीयसाग्रमन्व-न्तरशतावच्छिन्नबहुवरभोगोपभोगवत्त्वाप्सरःक्रीड़न-तदुत्तरैहिकसर्व्व-गुणान्वित-कुलोत्पन्न-रूपवत्सुभग-श्रीमत्सत्यवादि-जितेन्द्रिय-वेद-शास्त्रार्थविद्‌यज्व-वैष्णवविप्रत्वभवनवैष्णवयोगप्राप्तिपूर्व्वक-मोक्षा-वाप्तिकामो ब्रह्मपुराणोक्तविधिना सागरस्नानपूर्व्वकनारायणपूजन-महं करिष्ये।

इति सङ्कल्पशाक्षयवटं त्रिःप्रदक्षिणीकृत्य ततो दक्षिणे धनुः—शतत्रये सागरतीरे शुचौ शुचिरुपविश्य "ॐ नमः" इति त्रिवर्णं हस्ताङ्गुष्ठयोः, ततः पादयोः, ततः शिखायां, ततः शिरसि न्यस्य-ततो नाकारं तर्ज्जन्योः, राकारं मध्यमयोः, यकारमनामिकयोः, णाकारं कनिष्ठयोः, यकारं तलयोर्न्यसेत्।

ततः ॐकारं वामपादे, नकारं दक्षिणपादे, मोकारं वाम-कट्यां, नाकारं दक्षिणकट्यां, राकारं नाभौ, यकारं वामबाहौ, णाकारं दक्षिणबाहौ, यकारं मूर्द्ध्नि न्यसेत्।

ततोऽध ऊर्द्धं, हृदि, पार्श्वयोः, पृष्ठतः, पुरतश्च नारायणं ध्यात्वा—

ॐ—पूर्व्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः ।
पश्चिमे श्रीधरो देवः केशवस्तु तथोत्तरे ॥
पातु विष्णुस्तथाग्नेये नैरृते माधवोऽव्ययः ।
वायव्ये तु हृषीकेशस्तथैशाने च वामनः ।
भूतले पातु वाराहस्तथोर्द्धञ्च त्रिविक्रमः ॥

इति कवचकरणरूपमन्त्रं पठित्वा—

अहं नारायणो देवः शङ्खचक्रगदाधरः ।

इति ध्यात्वा सागरमुद्दिश्य—

ॐ—त्वमग्निर्द्विपदां नाथ रेतोधाः कामदीपनः ।
प्रधानः सर्व्वभूतानां जीवानां प्रभुरव्ययः ॥
अमृतस्यारणिस्त्वं हि देवयोनिरपांपते ।
वृजिनं हर मे सर्व्वं तीर्थराज नमोऽस्तु ते ॥

ततः सागरं प्रविश्य यथोक्तस्नानविधिं निवर्त्त्य ॐ आपो हि ष्ठा मयोभुव इति, ॐ यो वः शिवतमो रस इति, तस्मा अरङ्गमाम इत्याद्यब्दैवतेन मन्त्रत्रयेणाभिषेकं मार्ज्जनञ्च कृत्वा जले मग्नस्त्रिरघमर्षणसूक्तं जपेत् ।

तत उत्तीर्य्य धौते वाससी परिधाय सन्ध्यावन्दनमष्टोत्तरशतगायत्रीजपान्तं कृत्वा—विभ्राड़ित्यादिकमन्यं वा सौरमन्त्रत्रयं जपित्वा सूर्य्यं प्रदक्षिणीकृत्य दर्भत्रयवत्यासने प्राङ्मुख उपविश्य ब्रह्मयज्ञं कृत्वा भूमौ प्रागग्रकुशोपरि देवादितर्पणं सयवजलेन ततो

दक्षिणाग्रकुशत्रयोपरि पित्रादितर्पणं सतिलजलाञ्जलिभिः कृत्वा कातीयस्नानकरणपक्षे तर्पणोत्तरकर्म्माणि कृत्वा, सूर्य्यायाञ्जलिं दत्त्वा सूर्य्यं सम्पूज्याचम्य मौनी हस्तमितां चतुरस्रां चतुर्द्वारां वेदिं विलिख्य तन्मध्येऽष्टदलं सकर्णिकं पद्ममालिख्य हृदये रक्तमाकारं त्रिशिखं ज्वलदग्निरूपं चिन्तयेत्। ततश्चन्द्रमण्डलमध्यस्थमाकारं शुक्लवर्णममृतेन च प्लावयन्तं मूर्द्ध्नि चिन्तयेत्। एतेन च निर्धूत-पापो दिव्यदेहो भवति।

ततो नमो नारायणायेति मन्त्रेण कफोणितो अङ्गुल्यग्र-पर्य्यन्तयोः करयोः शुद्धिं विधाय नम इति त्रिवर्णीं हस्ता-ङ्गुष्ठयोः, ततो हस्तयोः, ततः पादयोः, ततः शिखायां, ततः शिरसि न्यस्य—नाकारमङ्गुष्ठयोः, राकारं तर्ज्जन्योः, यकारं मध्यमयोः, णाकारमनामिकयोः, यकारं कनिष्ठयोर्न्यसेत्।

ततः ॐकारं शुक्लवर्णं भूर्लोकात्मकं वामपादे, नकारं रक्त-वर्णं भुवर्लोकात्मकं दक्षिणपादे, मोकारं श्यामवर्णं स्वर्लोकात्मकं वामकट्यां, नाकारं रक्तवर्णं महर्लोकात्मकं दक्षिणकट्यां, राकारं कुङ्कुमवर्णं जनलोकात्मकं नाभौ, यकारं पीतवर्णं तपोलोकात्मकं वामबाहुमूले, णाकारं कज्जलाभं सत्यलोकात्मकं दक्षिणबाहुमूले, यकारं रक्तवर्णं ब्रह्मस्वरूपं मूर्द्ध्नि न्यसेत्।

ततः ॐ विष्णवे नम इति शिरः। ॐ ज्वलनाय नम इति शिखा। ॐ विष्णवे नम इति कवचम्। ॐ विष्णो स्फुर इति दिग्-बन्धनम्। ॐ हुं फड़स्त्रमिति, ॐ शिरसि शुक्लं वासुदेवमिति न्यसेत्। ललाटे रक्तं सङ्कर्षणं गरुत्मन्तं वह्निं तेज आदित्यं आमिति न्यसेत्।

ग्रीवायां पीतं प्रद्युम्नं वा(रि)युमेवं आमिति न्यसेत्। हृदये कृष्णमनिरुद्धं सर्व्वशक्तिसमन्वितम् आमिति न्यसेत्। ततः—

ममाग्रे च स्थितो विष्णुः पृष्ठतश्चापि केशवः।
गोविन्दो दक्षिणे पार्श्वे वामे तु मधुसूदनः॥
उपरिष्टात्तु वैकुण्ठो वाराहः पृथिवीतले।
अवान्तरा दिशो यास्तु तासु सर्व्वासु माधवः॥
गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा।
नरसिंहकृता गुप्तिर्वासुदेवमयो ह्यहम्॥

इति विचिन्त्य ॐकारं शुक्लवर्णमित्यारभ्य वासुदेवमयो ह्यहमित्यन्तं स्वाभिमुखस्थिते देवेऽपि चिन्तयेत्।

ततः हुं फड़ित्यनेन विघ्नविनाशनाय स्वस्य देवस्य च प्रोक्षणं कुर्य्यात्। ततः कर्णिकोपरि सूर्य्यबिम्बं तदुपरि चन्द्रबिम्बं तदुपरि-वह्निबिम्बं विचिन्त्य व्योममध्ये वायुं वायुमध्येऽष्टदलपद्मं तन्मध्ये विष्णुं न्यसेत्।

ततो हृदि ज्योतीरूपं ॐकारं विचिन्त्य स्थिरीकृत्य कर्णिकायां

चतुर्भुजं महासत्वं सूर्य्यकोटिसमप्रभम्।
चिन्तयित्वा महायोगं ज्योतीरूपं सनातनम्॥

इति विचिन्त्य परमेश्वरम्—

ॐ—मीनरूपो वराहश्च नरसिंहोऽथ वामनः।
आयातु देवो वरदो मम नारायणोऽग्रतः॥

इति मन्त्रेणावाहयेत्।

ततः कर्णिकायाम्—

ॐ सुमेरोः पादपीठेऽत्र पद्मकल्पितमासनम्।

सर्व्वसत्त्वहितार्थाय तिष्ठ त्वं मधुसूदन!॥

इति स्थापयेत्।

"ॐ त्रैलोक्यपतीनां पतये देवदेवाय हृषीकेशाय विष्णवे नमः एषोऽर्घं ॐ नमो नारायणाय नमः" इति मन्त्रेणार्घं दद्यात्।

ॐ—पाद्यं पादाय देवेश[1] पद्मनाभ सनातन।

विष्णो कमलपत्राक्ष गृहाण मधुसूदन॥

इदं पाद्यं ॐ नमो नारायणाय नमः" इति मन्त्रेण पाद्यं दद्यात्।

ॐ—मधुपर्कं महादेव ब्रह्माद्यैः कल्पितं तव।

मया निवेदितं भक्त्या गृहाण परमेश्वर॥

एष मधुपर्कः—ॐ नमो नारायणाय नम इति मन्त्रेण मधुपर्कं दद्यात्।

"ॐ—मन्दाकिन्यास्तु ते[2] वारि सर्व्वपापहरं शिवम्।

गृहाणाचमनीयं त्वं मया भक्त्या निवेदितम्॥

इदमाचमनीयं ॐ नमो नारायणाय नमः" इति मन्त्रेणाचमनीयं दद्यात्।

"ॐ—त्वमापः पृथिवी चैव ज्योतिस्त्वं वायुरेव च।

लोकसन्धृतिमात्रेण वारिणा स्नापयाम्यहम्॥

---

(१) क ख पुस्तकद्वये—पाद्यन्तु पादयोर्देव।

(२) घ पुस्तके सितम्।

इदं स्नानीयम् ॐ नमो नारायणाय नमः" इति मन्त्रेण स्नानीयं दद्यात् ।

"ॐ—देव त्वं वाससा युक्तो यज्ञवर्णसमन्वितः[1] ।
स्वर्णवर्णप्रभे देव वाससी तव केशव ॥

इदं वस्त्रम् ॐ नमो नारायणाय नमः" इति मन्त्रेण वस्त्रं दद्यात् ।

ॐ—शरीरन्ते न जानामि चेष्टाञ्चैव च केशव ।
मया निवेदितान् गन्धान् प्रतिगृह्य विलिप्यताम् ॥

इदमनुलेपनम् ॐ नमो नारायणाय नमः" इति मन्त्रेण गन्धं दद्यात् ।

"ॐ—ऋग्यजुःसाममन्त्रेण निवृत्तं[2] पद्मयोनिना ।
सावित्रीग्रन्थिसंयुक्तमुपवीतं तवाच्युत ॥

इदमुपवीतम् ॐ नमो नारायणाय नमः" इति मन्त्रेण उपवीतं दद्यात् ।

"ॐ दिव्यरत्नसमायुक्ता वह्निभानुसमप्रभाः ।
गात्राणि ते शोभयन्तु अलङ्काराश्च केशव ॥

इदमाभरणम् ॐ नमो नारायणाय नमः," इति मन्त्रेणाभरणं दद्यात् ।

---

(१) घ पुस्तके—देवतत्वसमायुक्त यज्ञकर्म्मसमन्वित- ।
(२) ग पुस्तके—त्रिवृतम् ।

### ततः पूजा।

तत्र—

ॐ ॐ नमः। ॐ न नमः। ॐ मो नमः। ॐ ना नमः। ॐ रा नमः। ॐ य नमः। ॐ णा नमः। ॐ य नमः। इति व्यस्तेन प्रत्येकं सम्पूज्य ततः समस्तेन "ॐ नमो नारायणाय नमः" इति मन्त्रेण पूजयेत्।

तत ॐ नमो भगवते वासुदेवाय नम इति द्वादशाक्षरमन्त्रेण पूजयेत्।

ॐ—वनस्पतिरसो दिव्यो गन्धाढ्यः सुरभिश्च ते[१]।
मया निवेदितो भक्त्या धूपोऽयं प्रतिगृह्यताम्॥

एष धूप ॐ नमो नारायणाय नमः, इति मन्त्रेण धूपं दद्यात्।

ॐ—सूर्य्याचन्द्रमसोर्ज्योतिर्विद्युदग्न्योस्तथैव च।
त्वमेव ज्योतिषां देव दीपोऽयं प्रतिगृह्यताम्॥

एष दीप ॐ नमो नारायणाय नमः, इति मन्त्रेण दीपं दद्यात्।

ॐ—अन्नं चतुर्व्विधञ्चैव रसैः षड्भिः समन्वितम्।
मया निवेदितं भक्त्या नैवेद्यं तव केशव॥

ॐ नमो नारायणाय नमः, इति मन्त्रेण नैवेद्यं दद्यात्।

---

(१) ग पुस्तके—सुमनोहरः।

(४) घ पुस्तके—तवार्पये।

एवं सम्पूज्य पूर्व्वदले वासुदेवं, दक्षिणे सङ्कर्षणं, पश्चिमदले प्रद्युम्नम्, उत्तरदले अनिरुद्धम्, आग्नेयदले वाराहं, नैर्ऋतदले नरसिंहं, वायव्यदले माधवम्, ईशानदले त्रिविक्रमं न्यसेत् ।

ततः साधकाभिमुखस्याष्टाक्षरस्य देवस्य पुरतो गरुड़ं, दक्षिणे महागदां, वामे शार्ङ्गं धनुः, दक्षिणे इषुधी, वामे शङ्खं, दक्षिणपार्श्वे श्रियं, वामपार्श्वे पुष्टिं न्यसेत् ।

ततो वनमालां श्रीवत्सकौस्तुभान् हृदयस्थले न्यसेत् चक्रादि-न्यासोऽष्टदिक्षु ।

ततः प्राच्यामिन्द्रम्, आग्नेय्यामग्निं, दक्षिणे यमं, नैर्ऋत्यां निर्ऋतिं, पश्चिमायां वरुणं, वायव्यां वायुम्, उत्तरस्यां धनदम्, ऐशान्यामीशानम्, अधोऽनन्तम्, ऊर्द्धे ब्रह्माणं न्यसेत् ।

ततो न्यासस्थानेषु वासुदेवादीन् ब्रह्मान्तान् पूजयेत् ।

तथा हि—

ॐ वासुदेवाय नमः, ॐ सङ्कर्षणाय नमः, ॐ प्रद्युम्नाय नमः, ॐ अनिरुद्धाय नमः, ॐ वराहाय नमः, ॐ नरसिंहाय नमः, ॐ माधवाय नमः, ॐ त्रिविक्रमाय नमः, ॐ गरुड़ाय नमः, ॐ महागदायै नमः, ॐ शार्ङ्गाय धनुषे नमः, ॐ इषुधिभ्यां नमः, ॐ शङ्खाय नमः । ॐ श्रियै नमः, ॐ पुष्ट्यै नमः, ॐ वन-मालायै नमः, ॐ श्रीवत्साय नमः, ॐ कौस्तुभाय नमः । ॐ इन्द्राय नम, ॐ अग्नये नमः, ॐ यमाय नमः, ॐ निर्ऋतये नमः, ॐ वरुणाय नमः, ॐ वायवे नमः, ॐ धनदाय नमः, ॐ ईशानाय नमः, ॐ अनन्ताय नमः, ॐ ब्रह्मणे नमः । एवं

ध्यानेन यथा सम्पूज्य प्रकृतपरिकरसम्पन्ननारायणदर्शनस्याव्यय-विष्णुप्रवेशफलमतस्तत्तदा कर्त्तव्यम्।

ततः पद्म-शङ्ख-श्रीवत्स-गदा-गरुड़-कौस्तुभ-चक्र-शार्ङ्गमुद्राः प्रदर्श्याष्टाक्षरमन्त्रमष्टोत्तरशतमष्टाविंशतिमधिकं वा जपित्वा—

ॐ— गच्छ गच्छ परं स्थानं पुराण पुरुषोत्तम।
यत्र ब्रह्मादयो देवा विन्दन्ति परमं पदम्॥

इति

पूजितं विष्णुं शिरसा प्रणम्य—

प्राणस्त्वं सर्व्वभूतानां योनिश्च सरितां पते।
तीर्थराज नमस्तेऽस्तु त्राहि मामच्युतप्रिय॥

इति पठित्वा सागरं प्रसादयेत्।

ततो रामं कृष्णं सुभद्रां प्रणिपतेदिति पुरुषोत्तमक्षेत्रे सागर-स्नानपूर्व्वक नारायणार्च्चनविधिः।

ततः इन्द्रद्युम्नसरो गत्वा—"ॐ अद्य दशाश्वमेधजन्यफल-समफलप्राप्ति-सप्तपूर्व्व-सप्तापर--वंशोद्धरणपूर्व्वक--कामगविमान-करणक-देववद्विष्णुलोकगमन-तदधिकरणकाचन्द्रतारक-बहुवर-भोगोपभोग-तदुत्तरैतल्लोकगमनपूर्व्वक-मोक्षप्राप्तिकामो ब्रह्म-पुराणोक्तविधिना इन्द्रद्युम्नसरःपितृपिण्डदान-पुरुषोत्तमपूजना-न्यहं करिष्ये।

इति सङ्कल्प्य इन्द्रद्युम्नसरसि आचम्य हरिं ध्यात्वा ॐ नमो नारायणायेति मन्त्रजपेन हरिमुपस्थाय जलं प्रविश्य विधिवत् स्नात्वा शेषे—

ॐ— अश्वमेधाङ्गसम्भूत तीर्थं सर्व्वाघनाशन।
स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते॥

इति पठित्वा स्नात्वा देवर्षितर्पणं सयवोदकेन, पितृतर्पणं सतिलोदकेन कृत्वाऽऽचम्य मौनी स्वगृह्योक्तरीत्या षट्पुरुषपिण्डान् दत्त्वा पुरुषोत्तमं पूजयेत्।

सागरतीरे च स्नान-दान-होम-जप देवार्च्चनादि यदेव क्रियते तदक्षयं भवति।

उपरागे संक्रान्त्यां, युगादौ, तिथिक्षये, व्यतीपाते, आषाढ्यां, कार्त्तिक्यां, माघ्यां, पर्व्वणि एतदन्यस्मिन् वा काले यदन्यतीर्थे स्नानादि तत्तदा सागरे सहस्रगुणं भवति।

यदा कदाचिदपि सागरतीरे पिण्डदानमक्षयपितृतृप्ति-फलकमिति।

एवं कृत्वा पञ्चतीर्थीमेकादश्यामुपोषितः।
ज्यैष्ठस्य शुक्लद्वादश्यां यः पश्येत् पुरुषोत्तमम्॥
स पूर्व्वोक्तं फलं प्राप्य क्रीड़ित्वा चाच्युतालये।
प्रयाति परमं स्थानं यस्मान्नावर्त्तते पुनः॥

पञ्चतीर्थी तु—मार्कण्डेयसरोऽक्षयवटः सागर इन्द्रद्युम्नसरः रौहिणेयश्चेति। तेनादौ मार्कण्डेयह्रदे विधिवत् स्नानं, ततोऽक्षयवटप्रदक्षिणं, ततो विधिवत् सागरस्नानं, तत इन्द्रद्युम्नह्रदे विधिवत् स्नानं, ततो रौहिणेयदर्शनमित्येकादश्यामारब्धोपवासस्य पञ्चकर्म्माणि ततो द्वादश्यां देवार्च्चनान्तं नित्यकर्म्म कृत्वा पुरुषोत्तमदर्शनमिति।

पूर्व्वोक्तमिति—पञ्चतीर्थी[1] विना कृतपुरुषोत्तमदर्शने पूर्व्वं यत् फलमुक्तं तदित्यर्थः।

क्रीड़ित्वेत्यादि ततोऽधिकमप्यत्र फलं भवतीत्यर्थः।

तदयमत्र प्रयोगः—

ॐ ज्यैष्ठशुक्लद्वादश्यधिकरणक–पुरुषोत्तमदर्शनजन्यफलप्राप्त्य-च्युतालयक्रीड़नपूर्व्वक-पुनरावृत्तिरहितपरमालयगमनकाम एका-दश्यामारब्धोपवासः पञ्चतीर्थीकर्म्म कृत्वा ज्यैष्ठशुक्लद्वादश्यां पुरुषोत्तमदर्शनमहङ्करिष्ये" इति सङ्कल्प्य एकादश्यां पञ्चतीर्थीं कृत्वोपवसेत्।

द्वादश्यां पुरुषोत्तमं पश्येत् ततः पारणेति।

ब्रह्मपुराणे।

ब्रह्मोवाच—तथा—

शृणुध्वं मुनिशार्दूलाः प्रवक्ष्यामि समासतः।
ज्यैष्ठमासं [2]तथा तेभ्यः प्रशंसामि पुनः पुनः॥
पृथिव्यां यानि तीर्थानि सरितश्च सरांसि च।
पुष्करिण्यस्तड़ागानि वाप्यः कूपास्तथा ह्रदाः॥
नाना नद्यः समुद्राश्च सप्ताहं पुरुषोत्तमे।
ज्यैष्ठ-शुक्लदशम्यादि प्रत्यक्षं यान्ति सर्व्वदा॥
स्नानदानादिकं तस्माद्देवताप्रेक्षणं द्विजाः।
यत्किञ्चित् क्रियते तत्र तस्मिन् कालेऽक्षयं भवेत्॥

(१) ग पुस्तके—तीर्थम्।

(२) ग पुस्तके यथा।

शुक्लपक्षस्य दशमी ज्यैष्ठे मासि द्विजोत्तमाः ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥
यस्तस्यां हलिनं कृष्णं पश्येद्भद्रां सुसंयतः ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोकं व्रजेन्नरः ॥
उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमम् ।
दृष्ट्वा रामं सुभद्राञ्च विष्णुलोकं व्रजेन्नरः ॥
नरो दोलाग(यि)तं दृष्ट्वा गोविन्दं पुरुषोत्तमम् ।
फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत् ॥
विषुवद्दिवसे प्राप्ते पञ्चतीर्थीं विधानतः ।
कृत्वा सङ्कर्षणं कृष्णं दृष्ट्वा भद्राञ्च भो द्विजाः ॥
नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम् ।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकञ्च गच्छति ॥
यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम्[२] ।
वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम् ॥
ज्यैष्ठ्यां ज्येष्ठर्क्षयुक्तायां यः पश्येत् पुरुषोत्तमम् ।
कुलैकविंशमुद्धृत्य विष्णुलोकं स गच्छति ॥

तथा तत्रैव—

यदा भवेन्महाज्यैष्ठी राशिनक्षत्रयोगतः ।
प्रयत्नेन तदा मर्त्त्यैर्गन्तव्यं पुरुषोत्तमम् ॥
कृष्णं दृष्ट्वा महाज्यैष्ठ्यां रामं भद्राञ्च भो द्विजाः ।
नरो द्वादशयात्रायाः फलं प्राप्नोति चाधिकम् ॥

---

(२) घ पुस्तके—कृषितम् ।

प्रयागे च कुरुक्षेत्रे पुष्करे नैमिषे गये।
गङ्गाद्वारे [1]च कुब्जाम्रे गङ्गासागरसङ्गमे॥
कोकामुखे शूकरे च मथुरायां मरुस्थले।
शालग्रामे वायुतीर्थे मन्दारे सिन्धुसागरे॥
पिण्डारके चित्रकूटे प्रभासे कनखले तथा।
[2]गङ्गाद्वारे द्वारकायां तथा वदरिकाश्रमे॥
[3]लोहदण्डे चाश्वतीर्थे सर्व्वपापविमोचने।
[4]कर्द्दमाले कोटितीर्थे तथा चामरकुण्डके[5]॥
[6]लोहाकुले चेक्षुमार्गे सोमतीर्थे पृथूदके।
उत्पलावर्त्तके चैव पृथूत्तुङ्गे सकुब्जके॥
एकाम्रके च केदारे काश्याञ्च विरजे द्विजाः।
कालञ्जरे च गोकर्णे श्रीशैले गन्धमादने॥
महेन्द्रे मलये विन्ध्ये पारिपात्रे हिमालये।
सह्ये च शुक्तिमन्ते च गोमन्ते चार्व्वुदे तथा॥
गङ्गायां सर्व्वतीर्थेषु यामुनेषु च भो द्विजाः।
सारस्वतेषु गोमत्यां ब्रह्मपुत्रेषु सप्तसु॥

---

(१) ग पुस्तके कुशावर्त्ते।
(२) घ पुस्तके शङ्खोद्धारे।
(३) घ पुस्तके—कुण्डे।
(४) घ पुस्तके कामालये।
(५) ग पुस्तके अमरकण्टके।
(६) ग पुस्तके—लोहार्गले जम्बुतीर्थे।

गोदावरी भीमरथी तुङ्गभद्रा च नर्म्मदा ।
तापी पयोष्णी कावेरी शिप्रा चर्म्मण्वती द्विजाः ॥
वितस्ता चन्द्रभागा च शतद्रुर्बाहुदा तथा ।
ऋषिकुल्या कुमारी च विपाशा च दृषद्वती ॥
सरयूर्वरगङ्गा च गण्डकी च महानदी ।
कौशिकी करतोया च त्रिस्रोता मधुवर्त्तिनी[१] ॥
महानदी वैतरणी याश्चान्या नानुकीर्त्तिताः ।
अथ किं बहुनोक्तेन भाषितेन द्विजोत्तमाः ॥
पृथिव्यां सर्व्वतीर्थेषु हरेश्चायतनेषु च ।
सागरेषु च शैलेषु नदीषु चापरासु च[२] ॥
यत् फलं स्नानदानेन राहुग्रस्ते दिवाकरे ।
तत् फलं कृष्णमालोक्य महाज्यैष्ठ्यां लभेन्नरः ॥
तस्मात् सर्व्वप्रयत्नेन गन्तव्यं पुरुषोत्तमम् ।
महाज्यैष्ठ्यां मुनिश्रेष्ठाः सर्व्वकामफलेप्सुभिः ॥
दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं सह सुभद्रया ।
विष्णुलोकं नरो याति समुद्धृत्य कुलं शतम् ॥
भुक्त्वा तत्र वरान् भोगान् यावदाहूतसंप्लवम् ।
पुण्यक्षयादिहागत्य चतुर्वेदी द्विजो भवेत् ॥

---

(१) घ पुस्तके—वाहिनी ।

(२) ख घ पुस्तके सरःसु च, ग पुस्तके पयःसु च ।

स्वधर्म्मनिरतः शान्तः कृष्णभक्तो जितेन्द्रियः।
वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात्॥
इति महाज्यैष्ठी॥

अथैतत्प्रयोगः—

"ॐ अद्य ज्यैष्ठपूर्णिमायां ज्येष्ठानक्षत्रयुक्तायां वृषराशिस्थे भास्करे द्वादशयात्राजन्यफलाधिकफलप्राप्तिकामः कृष्ण-राम-सुभद्रा-दर्शनमहं करिष्ये" इति सङ्कल्प्य तान् पश्येत्।

अथवा—

कुलशतोद्धरणपूर्व्वक-विष्णुलोकगमन-तदधिकरणाहूतसंप्लव-पर्य्यन्त-वरबहुभोगोपभोगतदुत्तरैहिकचतुर्व्वेदि-स्वधर्म्मनिरतशान्त-कृष्णभक्त-जितेन्द्रियविप्रत्वभवनोत्तर-वैष्णवयोगप्राप्तिपूर्व्वक-मोक्षा-वाप्तिकामो वा कृष्णरामसुभद्रादर्शनमहं करिष्ये।

ॐ अद्य ज्यैष्ठपूर्णिमायां ज्येष्ठानक्षत्रयुक्तायां वृषराशिस्थे सवितरि पृथिव्यधिकरणकसकलतीर्थ-नारायणायतन-सागरशैल-नदी-सरोऽधिकरणक-रविग्रहकालीनस्नानदानजन्यफलसमफल-प्राप्तिकामो वा कृष्णदर्शनमहं करिष्ये।

तथा—

ब्रह्मपुराणे।

मुनय ऊचुः—

कस्मिन् काले भवेत् स्नानं कृष्णस्य कमलोद्भव।
तथा तत्कारयन्तीह स्नानं तस्य विधिं वद[1]॥

---

(१) मूले—विधिना केन तद्ब्रूहि ततो विधिविदांवर।

ब्रह्मोवाच—

शृणुध्वं मुनयः स्नानं कृष्णस्य वदतो मम ।
रामस्य च सुभद्रायाः पुण्यं सर्व्वाघनाशनम् ॥
[1]मासि ज्यैष्ठे च सम्प्राप्ते नक्षत्रे चन्द्रदैवते ।
पौर्णमास्यां तदा स्नानं सर्व्वकालं हरेर्द्विजाः ॥
सर्व्वतीर्थमयः कूपस्तत्राऽऽस्ते निर्म्मलः शुचिः ।
तदा भोगवती तत्र [2]प्रत्यक्षं भवति द्विजाः ॥
तस्माज्ज्यैष्ठ्यां समुद्धृत्य हैमाद्यैः कलसैर्जलम् ।
कृष्णरामाभिषेकार्थं सुभद्रायाश्च भो द्विजाः ॥
कृत्वा सुशोभनं मञ्चं पताकाभिरलङ्कृतम् ।
सुदृढं सुखसञ्चारं वस्त्रैः पुष्पैरलङ्कृतम् ॥
विस्तीर्णं धूपितं धूपैः स्नानार्थं रामकृष्णयोः ।
सितवस्त्रपरिच्छन्नं मुक्ताहारावलम्बितम् ॥
तत्र नानाविधैर्वाद्यैः कृष्णं नीलाम्बरं द्विजाः ।
मध्ये [3]सुभद्राञ्चास्थाप्य जयमङ्गलनिःस्वनैः ॥
ब्राह्मणैः क्षत्रियैर्व्वैश्यैः शूद्रैश्चान्यैश्च जातिभिः ।
अनेकशतसाहस्रैर्वृतं स्त्रीपुरुषैर्द्विजाः ॥
गृहस्थाः स्नातकाश्चैव यतयो ब्रह्मचारिणः ।
स्नापयन्ति तदा कृष्णं मञ्चस्थं सहलायुधम् ॥

(१) घ पुस्तके मासे ।
(२) ग पुस्तके प्रत्यक्षा ।
(३) ख पुस्तके—स्थाप्य मञ्चे सुभद्राञ्च ।

तथा समस्ततीर्थानि पूर्व्वोक्तानि द्विजोत्तमाः।
स्वोदकैः पुष्पमिश्रैश्च स्नापयन्ति पृथक् पृथक्॥
पश्चात् [1]पटहसङ्घातैर्भेरी-मुरजनिस्वनैः।
काहलैस्तालशब्दैश्च मृदङ्गैर्विविधैस्तथा॥
अन्यैश्च विविधैर्वाद्यै[2]र्घण्टास्वनविभूषितैः।
स्त्रीणां मङ्गलशब्दैश्च स्तुतिशब्दैर्मनोहरैः॥
नानास्तोत्ररवैः पुण्यैः सामशब्दोपबृंहितैः।
यतिभिः स्नातकैश्चैव गृहस्थैर्ब्रह्मचारिभिः॥
स्नानकाले सुरश्रेष्ठं स्तुवन्ति परया मुदा।
[3]श्यामावदातवेश्याभिः कुचभारावनामिभिः॥
पीतरक्ताम्बराभिश्च माल्यदामावनामिभिः।
सरत्नैः कुण्डलैर्दिव्यैः सुवर्णस्तवकान्वितैः॥
चामरै रुक्म[4]दण्डैश्च वीज्येते रामकेशवौ।
यक्ष-विद्याधरैः सिद्धैः किन्नरैरप्सरोगणैः॥
परिवार्य्याम्बरगतैर्देव-गन्धर्व्व-चारणैः।
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः।
लोकपालास्तथान्ये च स्तुवन्ति पुरुषोत्तमम्॥

---

(१) घ पुस्तके शङ्खाद्यैः। ग पुस्तके झर्झरैः।

(२) ग पुस्तके घोषैः।

(३) घ पुस्तके श्यामैर्वेश्याजनैश्चैव।

(४) मूलपुस्तके रत्न-।

नमस्ते देवदेवेश पुराण पुरुषोत्तम ।
स्वर्गस्थित्यन्तकृद्देव लोकनाथ जगत्पते ॥
त्रैलोक्यधारिणं देवं [1]ब्रह्माणं मोक्षकारणम् ।
तं नमस्यामहे भक्त्या सर्व्वकामफलप्रदम् ॥
स्तुत्वैवं विबुधाः कृष्णं रामञ्चैव महाबलम् ।
सुभद्राञ्च मुनिश्रेष्ठास्तदाकाशे व्यवस्थिताः ॥
गायन्ति देवगन्धर्व्वा नृत्यन्त्यप्सरसस्तथा ।
देवतूर्य्याण्यवाद्यन्त वाता वान्ति सुशीतलाः ॥
पुष्पमिश्रं तदा मेघा वर्षन्त्याकाशगोचराः ।
जयशब्दश्च कुर्व्वन्ति मुनयः सिद्ध-चारणाः ॥
शक्राद्या विबुधाः सर्व्वे ऋषयः पितरोऽव्ययाः ।
प्रजानां पतयो नागा ये चान्ये स्वर्गवासिनः ॥
ततो मङ्गलसम्भारैर्विधिमन्त्रपुरस्कृतम् ।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥
इन्द्रो विष्णुर्महावीर्य्यो सूर्य्या चन्द्रमसौ तथा ।
धाता चैव विधाता च तथा चैवानिलाऽनलौ ॥
पूषा भगोऽर्य्यमा त्वष्टा अंशुनैव विवस्वता ।
पत्नीभ्यां[2] सहितो धीमान् मित्रेण वरुणेन च ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्याञ्च वृतः प्रभुः ।
विश्वेर्देवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥

---

(१) क ग पुस्तके त्रैलोक्यवरदं देवं ब्रह्मण्यम् ।
(२) घ पुस्तके रुद्राश्च— ।

गन्धर्व्वैरप्सरोभिश्च यक्ष-राक्षस-पन्नगैः।
देवर्षिभिरसंख्येयैस्तथा ब्रह्मर्षिभिर्वरैः॥
वैखानसैर्व्वालि(ल)खिल्यैर्वाय्वाहारैर्मरीचिपैः।
भृगुभिश्चाङ्गिरोभिश्च[1] सर्व्वविद्यासुनिष्ठितैः॥
सर्व्वविद्याधरैः पुण्यैर्य्योगसिद्धिभिरावृतः।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः॥
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च।
क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च॥
ऋतवश्च[2] ग्रहाश्चैव ज्योतींषि च द्विजोत्तमाः।
मूर्त्तिमत्यश्च सरितो वेदाश्चैव सनातनाः॥
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च।
पृथिवी द्यौर्दिशश्चैव पादपाश्च द्विजोत्तमाः॥
अदितिर्देवमाता च श्रीः स्वाहा च[3] सरस्वती।
उमा गौरी[4]सिनीवाली तथा चानुमतिः कुहूः॥
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम्।
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकवीर्य्यवान्[5]॥
ऐरावतः सानुचरः कलाकाष्ठास्तथैव च।
मासार्द्धं मास ऋतवस्तथा रात्र्यहनी समाः॥

---

(१) ग पुस्तके—यतिभिश्च।
(२) घ पुस्तके—ईश्वराश्च।
(३) ख पुस्तके—ह्रीः श्रीः स्वाहा।
(४) क पुस्तके—माटो।
(५) घ पुस्तके—शृङ्गवान्।

उच्चैःश्रवा[1]हयश्रेष्ठो नागराजश्च वामनः ।
अरुणो गरुड़श्चैव वृक्षाश्चौषधिभिः सह ॥
धर्म्मश्च भगवान् देवः[2] समाजग्मुर्हि सङ्गताः ।
गृहीत्वा ते तदा विप्रा देवाः सर्व्वे दिवौकसः ॥
आभिषेचनिकं द्रव्यं मङ्गलानि च सर्व्वशः ।
दिव्यसम्भारसंयुक्तैः कलशैः काञ्चनैर्द्विजाः ॥
सारस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव च ।
तोयेनाकाशगङ्गायाः कृष्णं रामेण सङ्गतम् ॥
सपुष्पैः काञ्चनैः कुम्भैः स्नापयन्त्यम्बरे स्थिताः[3] ।
सञ्चरन्ति विमानानि देवानामम्बरे तथा ॥
उच्चावचानि दिव्यानि कामगानि स्थिराणि च ।
दिव्यरत्नविचित्राणि सेवितान्यप्सरोगणैः ॥
गीतैर्वाद्यैः पताकाभिः शोभितानि समन्ततः ।
एवं तदा मुनिश्रेष्ठाः कृष्णं रामेण सङ्गतम् ।
स्नापयित्वा सुभद्राञ्च संस्तुवन्ति मुदाऽन्विताः ॥

जय जय लोकपाल भक्तरक्षक ।
जय पद्मनाभ जय भूधरण[4] ॥

---

(१) क ख ग पुस्तके—हाहाहूहू ।

(२) मूल पुस्तके—देवैः ।

(३) ग पुस्तके—स्नापयन्त्यवनिस्थिताः ।

(४) ख पुस्तके—भूतचरण ।

जय जय चाऽऽदिदेव जय बहुकरण[1]।
जय वासुदेव जय चाऽऽदिकारण॥
जय जय दिव्यमीन जय त्रिदशवर।
जय जय जलधिशयन जय योगिवर॥
जय जय सूर्य्यानुज[2] जय देवराज।
जय जय कैटभारे जय वेदवर[3]॥
जय जय कूर्म्मरूप जय यज्ञवर[4]।
जय जय कमलनाभ जय शैलधर॥
जय जय योगशयन जय वेगधर।
जय जय विश्वमूर्त्ते जय चक्रधर॥
जय जय भूतनाथ जय धरणीधर
जय जय शेषशायिन् जय पीतवासः!।
जय जय सोमकान्त जय योगवास
जय जय दैत्यदहन जय धर्म्मवास॥
जय जय गुणनिधान जय श्रीनिवास।
जय जय गरुड़गमन जय सुखनिवास।
जय जय धर्म्मकेतो जय [5]यतिनिवास जय जय गह्नवास[6]॥

---

(१) ग पुस्तके—कारण।

(२) ग पुस्तके—सूर्य्यनेत्र।

(३) ख पुस्तके—वैद्यवर।

(४) घ पुस्तके—यज्ञरूप।

(५) घ पुस्तके—मह्रीनिवास।

(६) ग पुस्तके—भवाब्धिवास।

जय जय योगिगम्य जय जय भक्तनिवास
जय जय वेदवेद्य जय शान्तिकर
जय जय योगिचिन्त्य जय पुष्टिकर ।
जय जय ज्ञानमूर्त्त जय कमलाकर ॥
जय जय [1]भाववेद्य जय मुक्तिकर
जय जय विमलदेह जय सत्त्वनिलय ।
जय जय प्रीतिकर जय गुणसमूह[2]
जय जय यज्ञ्वक जय गुणविहीन ॥
जय जय मोक्षकर जय भूशरण्य
जय जय कान्तियुत जय लोकशरण ।
जय जय लक्ष्मीयुत जय पङ्कजाक्ष
जय जय भोगयुत जय नीलाम्बर ॥
जय जय योगयुत जयाऽतसीकुसुम-
श्यामदेह जय जय समुद्रनिविष्टगेह[3] ।
जय जय लोककान्त[4] जय परमशान्त
जय परमसार जय चक्रधर जय शान्तिकर ।
जय जय मोक्षकर जय कलुषहर ।

---

(१) मूले—भववैद्य ।

(२) क पुस्तके—समुद्र । घ पुस्तके—समूह ।

(३) घ पुस्तके—सप्तसमुद्रविष्टदेह ।

(४) घ पुस्तके—जय लोककान्त ।

जय कृष्ण जगन्नाथ जय सङ्कर्षणानुज ।
जय पद्मपलाशाक्ष जय वाञ्छाफलप्रद ॥
जय मालावृतोरस्क जय चक्रगदाधर ।
जय पद्मालयाकान्त जय विष्णो नमोऽस्तु ते ॥

ब्रह्मोवाच—

एवं स्तुत्वा तदा देवाः शक्राद्याः हृष्टमानसाः ।
सिद्धचारणसङ्घाश्च ये चान्ये स्वर्गवासिनः ॥
मुनयो वालिखिल्याश्च कृष्णं रामेण सङ्गतम् ।
सुभद्राञ्च मुनिश्रेष्ठाः प्रणिपत्याम्बरे स्थिताः ॥
दृष्ट्वा स्पृष्ट्वा[1] नमस्कृत्वा तदा ते त्रिदिवौकसः ।
कृष्णं रामं सुभद्राञ्च यान्ति स्वं स्वं निवेशनम् ॥
सञ्चरन्ति विमानानि देवानामम्बरे तदा ।
उच्चावचानि दिव्यानि कामगानि स्थिराणि च ॥
दिव्यरत्नविचित्राणि सेवितान्यप्सरोगणैः ।
गीतैर्वाद्यैः पताकाभिः शोभितानि समन्ततः ॥
तस्मिन् काले च ये मर्त्याः पश्यन्ति पुरुषोत्तमम् ।
बलभद्रं सुभद्राञ्च ते यान्ति पदमव्ययम् ॥
सुभद्रा-रामसहितं मञ्चस्थं पुरुषोत्तमम् ।
दृष्ट्वा नरोऽव्ययं स्थानं याति नास्त्यत्र संशयः ॥
कपिलाशतदानेन यत् फलं पुष्करे स्मृतम् ।
तत् फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥

---

(१) घ पुस्तके—स्तुत्वा ।

वृषोत्सर्गेण विधिवद्यत् फलं समुदाहृतम् ।
तत् फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥
दानेन घृतधेन्वाश्च यत् फलं समुदाहृतम् ।
तत्फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥
चान्द्रायणेन चीर्णेन विधिवत् यत् फलं स्मृतम् ।
तत् फलं कृष्णमालोक्य मञ्चस्थं लभते नरः ॥
अथ किं बहुनोक्तेन भाषितेन पुनः पुनः ।
तस्य देवस्य माहात्म्यं मञ्चस्थस्य द्विजोत्तमाः ॥
यत् फलं सर्व्वतीर्थेषु व्रतैर्दानैश्च कीर्त्तितम् ।
तत् फलं कृष्णमालोक्य मञ्चस्थं सहलायुधम् ॥
सुभद्राञ्च मुनिश्रेष्ठाः प्राप्नोति शुभकृन्नरः ।
तस्मान्नरो वा नारी च पश्येत्तं पुरुषोत्तमम् ॥
ततः समस्ततीर्थानां लभेत् स्नानादिजं फलम् ।
स्नानशेषेण कृष्णस्य तोयेनात्माऽभिषिच्यते ॥
बन्ध्या मृतप्रजा या तु दुर्भगा ग्रहपीड़िता ।
राक्षसाद्यैर्गृहीता वा तथा रोगैश्च संहताः ॥
सद्यस्ताः स्नानशेषेण उदकेनाभिषेचिताः ।
प्राप्नुवन्तीप्सितान् कामान् यान् यान् वाञ्छति चेप्सितान्॥
पुत्रार्थिनी लभेत्पुत्रान् सौभाग्यञ्च सुखार्थिनी ।
रोगार्त्ता मुच्यते रोगाद्धनञ्च धनकाङ्क्षिणी ॥
पुण्यानि यानि तोयानि तिष्ठन्ति धरणीतले ।
तानि स्नानावशेषस्य कलां नार्हन्ति षोड़शीम् ॥

तस्मात् स्नानावशेषं यत् कृष्णस्य सलिलं द्विजाः।
अभ्युक्षेत् सर्व्वगात्राणि सर्व्वकामप्रदं हि तत्॥
स्नात्वा[1] पश्यन्ति ये कृष्णं व्रजन्तं दक्षिणामुखम्।
ब्रह्महत्यादिभिः पापैर्मुच्यन्ते नात्र संशयः॥
शास्त्रेषु यत् फलं प्रोक्तं पृथिव्यास्त्रिप्रदक्षिणैः।
दृष्ट्वा नरो लभेत् कृष्णं व्रजन्तं दक्षिणामुखम्॥
तीर्थयात्राफलं यत्तु पृथिव्यां समुदाहृतम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
वदर्य्यां यत् फलं प्रोक्तं दृष्ट्वा नारायणं नरम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
गङ्गाद्वारे च कुशाम्रे स्नाने दाने च यत् फलम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
ग्रस्ते सूर्य्ये कुरुक्षेत्रे स्नाने दाने च यत् फलम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
प्रयागे तु महामाघ्यां यत् फलं समुदाहृतम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
शालग्रामे महाचैत्र्यां स्नानदानेन यत् फलम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥
महाभिधेय[2]कार्त्तिक्यां पुष्करे यत् फलं स्मृतम्।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम्॥

---

(१) ग पुस्तके—स्नातम्।

(२) ग घ पुस्तकद्वये—महाभिधान-।

यत्फलं स्नानदानेन गङ्गाद्वारे च सङ्गमे ।
दृष्ट्वा नरो लभेत् कृष्णं तत्फलं दक्षिणामुखम् ॥
गङ्गायां सर्व्वतीर्थेषु [१]तथान्येषु च भो द्विजाः ।
सारस्वतेषु तीर्थेषु तथान्येषु सरःसु च ॥
यत् फलं स्नान-दानेन विधिवत् समुदाहृतम् ।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम् ॥
पुष्करे चान्यतीर्थेषु गये चामरकण्टके ।
नैमिषादिषु तीर्थेषु देवेष्वायतनेषु च ॥
यत् फलं स्नान-दानेन राहुग्रस्ते दिवाकरे ।
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं दक्षिणामुखम् ॥
अथ किं पुनरुक्तेन भाषितेन पुनः पुनः ।
यत्किञ्चित् कथितञ्चात्र फलं पुण्यस्य कर्म्मणः ॥
वेदशास्त्रे पुराणे च भारते च द्विजोत्तमाः ।
धर्म्मशास्त्रेषु सर्व्वेषु तथाऽन्यत्र मनीषिभिः ॥
दृष्ट्वा नरो लभेत् कृष्णं तत् फलं सहलायुधम् ।
सकलं भद्रया सार्द्धं व्रजन्तं दक्षिणामुखम् ॥

अथैतत्प्रयोगः—

ॐ अद्य ज्यैष्ठपूर्णिमायामनुराधायुतायामव्ययपदगमनकामो-मञ्चस्थपुरुषोत्तमदर्शनमहं करिष्ये ।

इति सङ्कल्प्य मञ्चस्थं पुरुषोत्तमं पश्येत् ।

---

(१) ख पुस्तके—यामुनेषु ।

एवं तदा मञ्चस्थबलभद्रस्य मञ्चस्थसुभद्राया अपि दर्शने प्रत्येकमेतदेव फलम्।

पुष्कराधिकरणक-कपिलागवीशतदानजन्यफल-समफलप्राप्ति-कामो वा—

विधिवद्भूमिदानजन्यफल-समफलप्राप्तिकामो वा—

विधिवच्चीर्णचान्द्रायणजन्यफल-समफलप्राप्तिकामो वा—

विधिवन्मासोपवासजन्यफल-समफलप्राप्तिकामो वा—

सर्व्वयज्ञ-व्रत-दानजन्यफल-समफलप्राप्तिकामो वा—

मञ्चस्थ-बलभद्र-सुभद्रासहित-कृष्णदर्शनमहं करिष्ये।

इति सङ्कल्प्य पश्येत्।

अथैतद्दर्शनानन्तरं दक्षिणां दिशं व्रजतः कृष्णस्य दर्शने ब्रह्महत्यादिसकलपापविमुक्तिकामो वा—

पृथिवीप्रदक्षिणत्रयजन्यफल-समफलप्राप्तिकामो वा—

पृथिव्यधिकरणकसकलतीर्थयात्राजन्यफल-समफलप्राप्ति-कामो वा—

बदर्य्यधिकरणक-नर-नारायणदर्शनजन्यफल-समफलप्राप्ति-कामो वा—

गङ्गाद्वारे कुशाम्राधिकरणकस्नानदानजन्यफल-समफलप्राप्ति-कामो वा—

कुरुक्षेत्राधिकरणकसूर्य्यग्रहणकालीनस्नान-दानजन्यफल-सम-फलप्राप्तिकामो वा—

प्रयागाधिकरणक–महामाघीस्नानजन्यफल–समफलप्राप्ति-कामो वा—

शालग्रामक्षेत्राधिकरणक–चैत्रीकालीनस्नानदानजन्यफलसम-फलप्राप्तिकामो वा—

पुष्कराधिकरणक-महाकार्त्तिकीस्नानजन्यफल-समफलप्राप्ति-कामो वा—

गङ्गाद्वार-गङ्गायमुनासङ्गम-गङ्गासागरसङ्गमाधिकरणकस्नान-जन्यफल-समफलप्राप्तिकामो वा—

सकलतीर्थाधिकरणकविधिवत्स्नानदानजन्यफलसमफलप्राप्ति-कामो वा—

पुष्करादितीर्थ-नैमिषारण्य–प्रयागादिक्षेत्र-पुरुषोत्तमाद्या-यतनाधिकरणक–रविग्रहणकालीनस्नानजन्यफल–समफलप्राप्ति-कामो वा—

वेदशास्त्र-पुराण-भारत-धर्मशास्त्राद्युक्ताशेषपुण्यकर्मफल-सम-फलप्राप्तिकामो वा—

दक्षिणाभिमुखव्रजद्बलभद्र-सुभद्रासहित कृष्णदर्शनमहं करिष्ये।

इति सङ्कल्प्य दक्षिणाशां व्रजतस्तान् पश्येत् ।

तथा—तत्रैव

इन्द्रद्युम्नसरो नाम तीर्थं यज्ञाङ्गसम्भवम् ।
यत्र स्नात्वा सकृल्लोकः शक्रलोकमवाप्यते ॥
दापयिष्यति यः पिण्डांस्तस्यैव सरसस्तटे ।
कुलैकविंशानुद्धृत्य शक्रलोकं गमिष्यति ॥

पूज्यमानोऽप्सरोभिश्च गन्धर्व्वैर्गीतनिःस्वनैः ।
विमानेन वसेत्तत्र यावदिन्द्राश्चतुर्द्दश ॥
सरसो दक्षिणे भागे नैर्ऋत्यां तु समाश्रिते ।
न्यग्रोधस्तिष्ठते तत्र तत्समीपे तु मण्डपः ॥
आषाढ़स्य सिते पक्षे पञ्चम्यां पितृदैवते ।
ऋक्षे नेष्यन्ति मां तत्र नीत्वा सप्तदिनानि वै ॥
ततः स्नात्वा च दृष्ट्वा च संप्रणम्य च भक्तितः ।
नरो वर्षायुतं दिव्यं श्रीमद्धरिपुरे वसेत् ॥
पूज्यमानोऽप्सरोभिश्च गन्धर्व्वैर्गीतनिःस्वनैः ।
हरेरनुचरस्तत्र क्रीड़ते केशवेन वै ॥
विमानेनार्कवर्णेन रत्नहारेण भ्राजता ।
सर्व्वकाममहाभोगैस्तिष्ठते भवनोत्तमे ॥
तपःक्षयादिहागम्य मनुष्यो ब्राह्मणो भवेत् ।
कोटीधनपतिः श्रीमांश्चतुर्व्वेदी भवेद्ध्रुवम् ॥
तद्दर्शन-प्रणामैश्च राम-केशवयोस्तथा ।
गुण्डिकामण्डपं यान्तं ये पश्यन्ति रथे स्थितम् ॥
कृष्णं बलं सुभद्राञ्च ते यान्ति भवनं हरेः ।
ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितम् ॥
सङ्कर्षणं सुभद्राञ्च [1]विष्णुलोकं व्रजन्ति ते ।
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्राश्च वै नृप ॥

---

(१) क ख पुस्तकद्वये—विधिवत्सुसमाहिताः ।

पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैर्व्वरैः ।
उपहारैर्बहुविधैरुपवासैः प्रदक्षिणैः ॥
जयशब्दैस्तथा स्तोत्रैर्गीतैर्वाद्यैर्मनोहरैः ।
न तेषां दुर्लभं किञ्चित् फलं तस्य यदीप्सितम् ॥
भविष्यति नृपश्रेष्ठ मत्प्रसादादसंशयम् ।
एवमुक्त्वा तु तं देवस्तत्रैवान्तरधीयत ॥
तस्मात्सर्व्वप्रयत्नेन गुण्डिकायां द्विजोत्तमाः ।
सर्व्वकामप्रदं देवं पश्येत्तं पुरुषोत्तमम् ॥
अपुत्रो लभते पुत्रान्निर्धनो लभते धनम् ।
रोगाद्विमुच्यते रोगी कन्या प्राप्नोति सत्पतिम् ॥
आयुः कीर्त्तिं यशो मेधां बलं विद्यां धृतिं पशून् ।
नरः सन्ततिमाप्नोति रूपयौवनसम्पदम् ॥
यान् यान् समीहते भोगान्[1] दृष्ट्वा तं पुरुषोत्तमम् ।
नरो वाऽप्यथवा नारी तांस्तान् प्राप्नोत्यसंशयम् ॥
यात्रां कृत्वा गुण्डिका(वा)ख्यां विधिवत्सुसमाहितः ।
आषाढ़स्य सिते पक्षे नरो योषिदथापि वा ॥
दृष्ट्वा कृष्णञ्च रामञ्च सुभद्राञ्च द्विजोत्तमाः ।
दशपञ्चाश्वमेधानां फलं प्राप्नोति चाधिकम् ॥
सप्ताऽवरान् सप्तपरान् वंशानुद्धृत्य चात्मनः ।
कामगेन विमानेन सर्व्वरत्नैरलङ्कृतः ॥
गन्धर्व्वैरप्सरोभिश्च सेव्यमानो यथाऽमरः ॥

(१) ब पुस्तके—कामान् ।

रूपवान् सुभगः शूरो नरो विष्णुपुरं व्रजेत्।
तत्र भुक्त्वा वरान् भोगान् यावदाहूतसंप्लवम्॥
सर्व्वकामसमृद्धात्मा जरामरणवर्ज्जितः।
पुण्यक्षयादिहाऽऽगत्य चतुर्व्वेदी द्विजो भवेत्॥
वैष्णवं योगमास्थाय[1] ततो मोक्षमवाप्नुयात्।

ॐ अद्य हरिभवनगमनकामो गुण्डिकाभिमुखव्रजद्रथस्थ[2] बलभद्र—सुभद्रासहित कृष्णदर्शनमहं करिष्ये।

इति सङ्कल्प्य-गुण्डिकायान्तु रथस्थितं बलभद्र-सुभद्रासहितं कृष्णं पश्येत्।

अयमत्रप्रयोगः—

ॐ अद्य आषाढ़शुक्लपञ्चम्यां पितृदैवतऋक्षे पञ्चदशाश्वमेध-जन्यफलाधिकफलप्राप्ति–सप्तावरसप्तपरात्मीयवंश्योद्धारपूर्व्वक-कामगविमानकरणक-सर्व्वरत्नालङ्कृत-गन्धर्व्वाप्सरःसेव्यमान-रूपवत् सुभग-शूर-स्वकर्त्तृकामरवद्विष्णुपुरगमन–तदधिकरणकयावदाहूत-संप्लवसर्व्वकामसमृद्ध–जरामरणवर्ज्जितात्मीय–वरबहुभोगोपभोग-तदुत्तरैतल्लौकिक--चतुर्व्वेदिद्विजत्वभवन—वैष्णवयोगप्राप्तिपूर्व्वक–मोक्षावाप्तिकामो गुण्डिकायात्रापूर्व्वक–गुण्डिकामण्डप[2]स्थराम-सुभद्रासहितकृष्णदर्शनमहं करिष्ये।

इति सङ्कल्प्य तत्र गत्वा तान् पश्येत्।

---

(१) ग पुस्तके—आसाद्य। (२) ख पुस्तके—रथस्थ।

तत्रैव कृष्णादिपूजने ।

ॐ अद्य स्वेष्टामुकफलप्राप्तिकामो ब्रह्मपुराणोक्तविधिना सङ्कर्षण-सुभद्रासहितकृष्णपूजामहं करिष्ये ।

इति सङ्कल्प्य गन्धैः पुष्पैर्धूपैर्वरनैवेद्यैर्बहुविधोपहारैः प्रदक्षिणैर्जयशब्दैः स्तोत्रैर्मनोहरवाद्यैस्तद्दिनोपवासेन च पूजयेत् ।

तत्रैव ब्रह्मपुराणे—

ब्रह्मोवाच ।

गुण्डिका(वा)यां समुत्थाने[1] फाल्गुन्यां विषुवे तथा ।
यात्रां कृत्वा विधानेन दृष्ट्वा कृष्णं प्रणम्य च ॥
सङ्कर्षणं सुभद्राञ्च लभेत् सर्व्वत्र वै फलम् ।
नरो गच्छेत् विष्णुलोकं यावदिन्द्राश्चतुर्द्दश ॥

तेन गुण्डिकायां यदा कदाचित्–एवमुत्थानद्वादश्यां तथा फाल्गुन्यां तथा जलविषुवे तथा धान्यविषुवे तथा–कृष्णदर्शन-प्रणामयोः, तथा सङ्कर्षणदर्शन-प्रणामयोः, तथा सुभद्रादर्शन-प्रणामयोश्च प्रत्येकं चतुर्द्दशेन्द्रपर्य्यन्तं विष्णुलोकस्थितिः फलमित्यर्थः ।

तथा—तत्रैव—

यावद् यात्रां ज्यैष्ठमासे करोति विधिवन्नरः ।
तावत् कल्पं विष्णुलोके सुखं भुङ्क्ते न संशयः ॥

ज्यैष्ठमासीयायां कस्यामपि तिथौ यात्रायां कल्पावच्छिन्नविष्णुलोकाधिकरणकसुखभोगः फलमित्यर्थः ।

---

(१) घ पुस्तके—तयोत्थाने ।

तथा—तत्रैव ब्रह्मोवाच—

प्रतियात्राफलं विप्राः शृणुध्वं गदतो मम।
यत् प्राप्नोति नरः कृत्वा तस्मिन् क्षेत्रे सुसंयतः॥
तस्मिन् क्षेत्रवरे पुण्ये रम्ये श्रीपुरुषोत्तमे।
भुक्ति-मुक्तिप्रदे नृणां सर्व्वसत्वसुखावहे॥
ज्यैष्ठे यात्रां नरः कृत्वा[1] नारी वा संयतेन्द्रिया।
यथोक्तेन विधानेन दशम्याञ्च[2] समाहितः॥
प्रतिष्ठां कुरुते यस्तु शाठ्य-दम्भविवर्ज्जितः।
स भुक्त्वा विविधान् भोगान् मोक्षञ्च लभते ध्रुवम्॥

ऋषय ऊचुः—

श्रोतुमिच्छामहे देव प्रतिष्ठां वदतस्तव।
विधानं चार्च्चनं दानं फलं तत्र जगत्पतेः॥

ब्रह्मोवाच—

शृणुध्वं मुनिशार्दूलाः प्रतिष्ठां विधिचोदिताम्।
यां कृत्वा तु नरो भक्त्या नारी वा लभते ध्रुवम्[3]॥
यात्रा द्वादशसम्पूर्णा यदा स्यात्तु द्विजोत्तमाः।
तदा कुर्व्वीत विधिवत् प्रतिष्ठां पापनाशिनीम्॥
ज्यैष्ठे मासि सिते पक्षे त्वेकादश्यां समाहितः।
गत्वा जलाशयं पुण्यमाचम्य प्रयतः शुचिः॥

(१) क ख पुस्तकद्वये—कुर्य्यात्।
(२) घ पुस्तके दश द्वे च।
(३) घ पुस्तके—फलम्।

ततः स्नानं प्रकुर्व्वीत विधिवत्सुसमाहितः ॥
यस्य यो विधिरुद्दिष्ट ऋषिभिः स्नानकर्म्मणि ।
तेनैव तु विधानेन स्नानं तस्य विधीयते ॥
स्नात्वा सम्यग्विधानेन ततो देवानृषीन् पितॄन् ।
सन्तर्पयेत्तथाऽन्यांश्च नामगोत्रविधानवित् ॥
उत्तीर्य्य वाससी धौते निर्म्मले परिधाय वै ।
उपस्पृश्य विधानेन भास्कराभिमुखस्ततः ॥
गायत्रीं पावनीं देवीं मनसा वेदमातरम् ।
सर्व्वपापहरां पुण्यां जप्त्वा चाष्टोत्तरं शतम् ॥
पुणरांश्च सौरमन्त्रांश्च श्रद्धया सुसमाहितः ।
त्रिः प्रदक्षिणमावृत्य भास्करं प्रणमेत्ततः ॥
वेदोक्तं त्रिषु वर्णेषु स्नानं जप्यमुदाहृतम् ।
स्त्री-शूद्रयोः स्नानमेवं[1] वेदोक्तविधिवर्ज्जितम् ॥
ततो गच्छेद्गृहं मौनी पूजयेत् पुरुषोत्तमम् ।
प्रक्षाल्य हस्तौ पादौ च उपस्पृश्य यथाविधि ॥
घृतेन स्नापयेद्देवं क्षीरेण तदनन्तरम् ।
मधु-गन्धोदकेनैव तीर्थचन्दनवारिणा ॥
ततो वस्त्रयुगं श्रेष्ठं भक्त्या तं परिधापयेत् ।
पूजयेत्परया भक्त्या पद्मैश्च[2] पुरुषोत्तमम् ।
अन्यैश्च वैष्णवैः पुष्पै रर्च्चयेन्मल्लिकादिभिः ॥

---

(१) मूले—स्नानजाप्यम् ।
(२) क ग पुस्तकद्वये—पुष्पैश्च ।

सम्पूज्यैवं जगन्नाथं भुक्ति-मुक्तिप्रदं हरिम् ।
धूपञ्चागुरुसंयुक्तं दहेद्देवस्य[1] चाग्रतः ॥
गुग्गुलं च मुनिश्रेष्ठा दहेद्घृतसमन्वितम् ।
दीपं प्रज्वालयेद्भक्त्या यथाशक्त्या घृतेन वै ॥
अन्यांश्च दीपकान् दद्याद्द्वादशैव समाहितः ।
घृतेन च मुनिश्रेष्ठास्तिलतैलेन वा पुनः ॥
नैवेद्ये पायसाऽपूप-शष्कुली-वटकं तथा ।
मोदकं फाणितं चान्यफलानि च निवेदयेत् ॥
एवं पञ्चोपचारेण सम्पूज्य पुरुषोत्तमम् ।
ॐ—नमः पुरुषोत्तमायेति जपेदष्टोत्तरं शतम् ॥
ततः प्रसादयेद्देवं भक्त्या तं पुरुषोत्तमम् ।
नमस्ते सर्व्वलोकेश भक्तानामभयप्रद ! ॥
संसारसागरे मग्नं त्राहि मां पुरुषोत्तम ! ।
यास्ते मया कृता यात्रा द्वादशैव जगत्पते ! ॥
प्रसादात्तव गोविन्द सम्पूर्णास्ता भवन्तु मे ।
एवं प्रसाद्य तं देवं दण्डवत् प्रणिपत्य च ॥
ततोऽर्च्चयेद्गुरुं भक्त्या पुष्पवस्त्रानुलेपनैः ।
नानयोरन्तरं यस्माद्विद्यते मुनिसत्तमाः ॥
देवस्योपरि कुर्व्वीत श्रद्धया सुसमाहितः ।
नानापुष्पैर्मुनिश्रेष्ठा विचित्रं पुष्पमण्डलम्[2] ॥

---

(१) ग पुस्तके—देवदेवस्य ।
(२) घ पुस्तके—मण्डपम् ।

कृत्वाऽवधारणं पश्चात् जागरं कारयेन्निशि ।
कथाश्च वासुदेवस्य तद्गीतिश्चापि कारयेत् ॥
ध्यायन् पठन्[1] स्तुवन् देवं गमये[2]द्रजनीं बुधः ॥
ततः प्रभाते विमले द्वादश्यां द्वादशैव तु ।
निमन्त्रयेत् कृतस्नानान् ब्राह्मणान् वेदपारगान् ॥
इतिहास-पुराणज्ञान् श्रोत्रियान् संयतेन्द्रियान् ।
स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः ॥
स्नापयेत् पूर्व्ववद्भक्त्या तत्रस्थं पुरुषोत्तमम् ।
गन्धैः पुष्पैरुपहारैर्नैवेद्यैर्दीपकैस्तथा ॥
उपहारैर्बहुविधैः प्रणिपातैः प्रदक्षिणैः ।
जप्य[3]-स्तुति-नमस्कारैर्गीतवाद्यैर्मनोहरैः ॥
सम्पूज्यैवं जगन्नाथं ब्राह्मणान् पूजयेत्ततः ।
द्वादशैव तु गास्तेभ्यो दत्त्वा कनकमेव च ॥
छत्रोपानद्युगञ्चैव श्रद्धाभक्तिपुरःसरः[4] ।
भक्त्या तु सधनं तेभ्यो दद्याद्वस्त्रादिकं द्विजाः ॥
सद्भावेन तु गोविन्दस्तु(स्तो)ष्यते पूजितो यतः ।
आचार्य्याय ततो दद्याद् गां वस्त्रं कनकं तथा ॥
छत्रोपानद्युगञ्चापि कांस्यपात्रञ्च भक्तितः ।
ततस्तान् भोजयेद्विप्रान् भोज्यं पायसपूर्व्वकम् ॥

---

(१) ग पुस्तके—गायन् ।

(२) क-ख पुस्तकद्वये—प्रणयेत् ।

(३) घ पुस्तके—जाप्यैः ।

(४) ख पुस्तके—समन्वितः ।

पक्वान्नं भक्ष्य-भोज्यञ्च सगुड़ं शर्कराऽन्वितम्।
ततस्ताननृप्तांश्च ब्राह्मणान् स्वस्थमानसान्॥
द्वादशैवोदकुम्भांश्च दद्याद्भक्त्या समोदकान्।
दक्षिणाञ्च यथाशक्त्या दद्यात्तेभ्यो विमत्सरः॥
कुम्भञ्च दक्षिणाञ्चैव आचार्य्याय निवेदयेत्।
एवं सम्पूज्य तान् विप्रान् गुरुं ज्ञानप्रदायकम्॥
पूजयेत् परया भक्त्या विष्णुतुल्यं द्विजोत्तमाः।
सुवर्ण-वस्त्र-गो-धान्यैर्द्रव्यैश्चान्यैर्व्वरं बुधः॥
सम्पूज्य तं नमस्कृत्य इमं मन्त्रमुदीरयेत्।
सर्व्वव्यापी जगन्नाथः शङ्खचक्रगदाधरः॥
अनादिनिधनो देवः प्रीयतां परमेश्वरः।
इत्युच्चार्य्य ततो विप्रांस्त्रिः कृत्वा च प्रदक्षिणम्।
प्रणम्य शिरसा भक्त्या आचार्य्यन्तु विसर्ज्जयेत्॥
ततस्तान् ब्राह्मणान् भक्त्या चाऽऽसीमान्तमनुव्रजेत्।
अनुव्रज्य च तान् सर्व्वान् नमस्कृत्य निवेदयेत्॥
बान्धवैः स्वजनैर्युक्तस्ततो भुञ्जीत वाग्यतः।
[1]अन्यैश्चोपार्ज्जितै[2]र्दीनैर्भिक्षुकैश्चार्थकाङ्क्षिभिः॥
एवं कृत्वा नरः सम्यङ्नारी वा लभते फलम्।
अश्वमेधसहस्राणां राजसूयशतस्य च॥
अतीतं शतमादाय पुरुषाणां नरोत्तमः।

---

(१) मूले—अन्नैश्च तर्पयेद्दीनान् भिक्षुकांश्चान्नकाङ्क्षिणः।
(२) ग पुस्तके—अन्यैश्चोपासकैः।

भविष्यञ्च शतं विप्राः स्वकुल्यान्[1] दिव्यरूपधृक् ।
सर्व्वलक्षणसम्पन्नः सर्व्वालङ्कारभूषितः ॥
सर्व्वकामसमृद्धात्मा देववद्विगतज्वरः ।
रूपयौवनसम्पन्नो गुणैः सर्व्वैरलङ्कृतः ॥
स्तूयमानोऽप्सरोभिश्च गन्धर्व्वैः समलङ्कृतः ।
विमानेनार्कवर्णेन कामगेन स्थिरेण च ॥
पताका-ध्वजयुक्तेन सर्व्वरत्नैरलङ्कृतः ।
उद्योतयन् दिशः सर्व्वाश्चाकाशे विगतक्लमः ॥
युवा महाबलो धीमान् विष्णुलोकं स गच्छति ।
तत्र कल्पशतं यावत् भुक्त्वा भोगान् यथेप्सितान् ॥
गन्धर्व्वाप्सरसैः सिद्धैः सुर-विद्याधरोरगैः ।
स्तूयमानो मुनिवरैस्तिष्ठते विगतज्वरः ॥
यथा देवो जगन्नाथः शङ्ख-चक्र-गदाधरः ।
तथाऽसौ मुदितो विप्राः कृत्वा रूपं चतुर्भुजम् ॥
भुक्त्वा तत्र वरान् भोगान् क्रीड़ित्वा चाप्सरैः सह ।
तदन्ते ब्रह्मसदनमायाति सर्व्वकामदम् ॥
सिद्ध-विद्याधरैश्चापि शोभितं सुर-किन्नरैः ।
कालं नवतिकल्पन्तु तत्र भुक्त्वा सुखं नरः ॥
तस्मादायाति विप्रेन्द्राः सर्व्वकामफलप्रदम् ।
रुद्रलोकं सुरगणैः सेवितं [2]सौख्य-मोक्षदम् ॥

---

(१) घ पुस्तके—स्वर्गत्या ।

(२) ग पुस्तके—सुख— ।

अनेकशतसाहस्रैर्विमानैः समलङ्कृतम् ।
सिद्ध-विद्याधरैर्यक्षैर्भूषितं दैत्यदानवैः ॥
अशीतिकल्पकालन्तु तत्र भुक्त्वा सुखं नरः ।
तदन्ते याति गोलोकं सर्व्वभोगसमन्वितम् ॥
सुरसिद्धाप्सरोभिश्च शोभितं सुमनोहरम् ।
तत्र सप्ततिकल्पांस्तु भुक्त्वा भोगमनुत्तमम् ॥
दुर्लभं त्रिषु लोकेषु स्वस्थचित्तो जितेन्द्रियः ।
तस्मादागच्छते लोकं प्राजापत्यमनुत्तमम् ॥
गन्धर्व्वाप्सरसैः सिद्धैर्मुनिविद्याधरैर्वृतः ।
षष्टिकल्पं सुखं तत्र भुक्त्वा नानाविधं मुदा ॥
तदन्ते शक्रभवनं नानाश्चर्य्यसमन्वितम् ।
गन्धर्व्वैः किन्नरैः सिद्धैः सुर-विद्याधरोरगैः ॥
गुह्यकाऽप्सरसैः साध्यैर्वृतश्चान्यैर्दिवौकसैः ।
आगत्य तत्र पञ्चाशत्कल्पान् भुक्त्वा सुखं नरः ॥
सुरलोकं ततो गत्वा विमानैः समलङ्कृतः ।
दुर्लभं पावनं धीमान् देवैः सर्व्वैः समन्वितः ॥
तदन्ते योगिनां लोकं गत्वा मोक्षप्रदं शिवम् ।
तत्र चत्वारिंशत्कल्पं भुक्त्वा भोगान् सुदुर्लभान् ॥
गच्छति तु ततो लोकं नक्षत्राख्यं सुदुर्लभम् ।
ततो भोगान् वरान् भुङ्क्ते त्रिंशत्कल्पान् यथेप्सितान् ।
तस्मादागच्छते लोकं शशाङ्कस्य द्विजोत्तमाः ।
यत्राऽसौ तिष्ठते सोमः सर्व्वैर्देवैरलङ्कृतः ॥

तत्र विंशतिकल्पन्तु भुङ्क्ते भोगं सुदुर्लभम्।
आदित्यस्य ततो लोकमायाति सुरपूजितम्॥
नानाश्चर्य्यमयं पुण्यं गन्धर्व्वाप्सरःसेवितम्।
तत्र भुक्त्वा शुभान् भोगान् दशकल्पान् द्विजोत्तमाः॥
तस्मादायाति भुवनं गन्धर्व्वाणां सुदुर्लभम्।
तत्र भोगान् समस्तांश्च कल्पमेकं यथासुखम्॥
भुक्त्वा चाऽऽयाति मेदिन्यां राजा भवति धार्म्मिकः।
चक्रवर्त्ती महावीर्य्यो गुणैः सर्व्वैरलङ्कृतः॥
कृत्वा राज्यं स्वधर्म्मेण यज्ञैरिष्ट्वा सुदक्षिणैः।
तदन्ते योगिनां लोकं गत्वा मोक्षप्रदं शिवम्॥
तत्र भुक्त्वा परान् भोगान् यावदाहृतसंप्लवम्।
तस्मादागच्छते चाऽत्र जायते योगिनां कुले॥
प्रवरे वैष्णवे विप्रा दुर्लभे साधुसम्मते।
चतुर्व्वेदी विप्रवरो यज्ञैरिष्ट्वाऽसदक्षिणैः॥
वैष्णवं योगमास्थाय ततो मोक्षमवाप्नुयात्।

विष्णुलोकनिर्व्वचनावसरे के तत्र यान्तीति जिज्ञासायामाह प्रजापतिः—

वटराजसमीपे तु दक्षिणस्योदधेस्तटे।
दृष्टो यैर्भगवान् कृष्णः पुष्कराक्षो जगत्पतिः।
क्रीड़न्त्यप्सरसैः सार्द्धं यावद्द्यौश्चन्द्रतारकम्॥
प्रतप्तहेमसङ्काशा जरामरणवर्ज्जिताः।
सर्व्वदुःखविहीनाश्च तृष्णा-ग्लानिविवर्ज्जिताः॥

चतुर्भुजा महावीर्य्या वनमालाविभूषिताः।
श्रीवत्सोरसि[1] संयुक्ताः शङ्खचक्रगदाधराः॥
केचिन्नीलोत्पलश्यामाः केचित्काञ्चनसन्निभाः।
श्यामवर्णाः कुण्डलिनस्तमन्ये वज्रसन्निभाः॥
विचरन्ति पुरे दिव्ये रूप-यौवनगर्व्विताः।
कृष्णं रामं सुभद्राञ्च पश्यन्ति पुरुषोत्तमे॥
विष्णुलोकात्परं लोकं नाऽत्र पश्यामि भो द्विजाः।
ये लोकाः स्वर्गलोके तु श्रूयन्ते पुण्यकर्म्मणाम्॥
विष्णुलोकस्य ते लोकाः कलां नार्हन्ति षोड़शीम्।
न तत्र नास्तिका यान्ति पुरुषा विषयात्मकाः॥
कृतघ्ना नापि पिशुना न स्तेना नाजितेन्द्रियाः।
येऽर्च्चयन्ति सदा भक्त्या वासुदेवं जगद्गुरुम्॥
ते तत्र वैष्णवा यान्ति विष्णुलोकं न संशयः।
दक्षिणस्योदधेस्तीरे क्षेत्रे परमदुर्लभे॥
कल्पवृक्षसमीपे तु ये त्यजन्ति कलेवरम्।
तेऽपि तत्र नरा यान्ति ये मृताः पुरुषोत्तमे॥

अथैतत्प्रयोगः—

ज्यैष्ठे द्वादशयात्राः कृत्वा तत्प्रतिष्ठां सङ्कल्प्य कुर्य्यात्।

ॐ अद्य ज्यैष्ठशुक्लैकादश्यां बह्वश्वमेधसहस्र-राजसूयशतजन्य-फल-समफलप्राप्त्यतीतशताऽनागतपञ्चाशत्स्वकुल्यपुरुष-सहित-दिव्य-

---

(१) घ पुस्तके—श्रीवत्सलाञ्छनैर्युक्ताः।

रूपष्टक् सर्व्वलक्षणसम्पन्न-सर्व्वालङ्कारभूषित-सर्व्वकामसमृद्ध-देव-वह्निगतज्वर-सर्व्वगुणालङ्कृतब्रह्मसरोगन्धर्व्वैस्तूयमान-सर्व्वरत्नालङ्कृत-विगतक्लमयुवमहाबलवीर्य्यवदात्मीयसर्व्वदिगुद्योतन-समकालिका-र्कवर्णकामग स्थिरपताकाध्वजयुक्तविमानकरणक['विष्णुलोकगमन-तदधिकरणक—बहुगन्धर्व्वाप्सरःसिद्धसुरविद्याधरोरगमुनिवरस्तूय-मान-शङ्ख-चक्र-गदाधरचतुर्भुज-मुदित—विगतज्वरात्मकर्त्तृक-कल्प-शतावच्छिन्नयथेप्सितबहुभोगोपभोग--बह्वप्सरःक्रीड़न—तदुत्तरसर्व्व-कामग—बहुसिद्ध-विद्याधर-सुर—किन्नरोपशोभित-ब्रह्मसदनगमन-तदधिकरणकनवतिकल्पावच्छिन्न—सुखभोग-तदुत्तरसर्व्वकामफल-प्रवाह—सुरगणसेवितसौख्यमोक्षलाभैकशतसहस्रविमानभूषितबहु-सित-वपुः-सिद्ध विद्याधर-यक्ष-दैत्य-दानवसमलङ्कृतरुद्रलोकगमन-तदधिकरणकाऽशीतिकल्पावच्छिन्न-सुखभोग-तदुत्तरसर्व्वभोगसम-न्वित-बहुसुर—सिद्धाप्सरःसेवित सुमनोहरगोलोकगमन-तदधिकर-णक--सप्ततिकल्पावच्छिन्नानुत्तत्रिलोकीदुर्लभबहुभोगोपभोग—तदु-त्तराऽनुत्तमबहुगन्धर्व्वाप्सरः-सिद्ध-मुनि-विद्याधरवृत-प्रजापतिलोक-गमन—तदधिकरणकमुदितात्मकर्त्तृकषष्टिकल्पावच्छिन्ननानाश्चर्य्य-समन्वितबहुगन्धर्व्वकिन्नर--सिद्ध—सुर-विद्याधरोरग—गुह्यकाप्सरो-दिवौकोवृतशक्रभवनगमन—तदधिकरणपञ्चाशत्कल्पावच्छिन्नसुख-भोग—तदुत्तरबहुविमानसमलङ्कृतदुर्लभपावन-सर्व्वदेवालङ्कृतसुर-लोकाधिकरणकश्रीमत्स्वकर्त्तृक-चत्वारिंशत्कल्पावच्छिन्नदुर्लभबहु-भोगोपभोग--तदुत्तरसुदुर्लभनक्षत्रलोकगमन-तदधिकरणकत्रिंशत्-

(१) ख पुस्तके [ ] चिह्नितांशः पतितः ।

कल्पावच्छिन्नयथेप्सितवरबहुभोगोपभोग-तदुत्तरप्रजापाल्लोकगमन-तदधिकरणकविंशतिकल्पावच्छिन्न-बहुशुभभोगोपभोग-तदुत्तरसुर-पूजितनानाश्चर्य्यमयपुण्यगन्धर्व्वाप्सरःसेविताऽऽ]दित्यलोकगमन-तद-धिकरणकदशकल्पावच्छिन्न-बहुशुभभोगोपभोग-तदुत्तर-सुदुर्लभ-गन्धर्व्वलोकगमन-तदधिकरणैककल्पावच्छिन्न-समस्तभोगोपभोग-तदुत्तरमेदिन्यधिकरणक-परमधार्म्मिकमहावीर्य्य-सर्व्वगुणालङ्कृत-चक्रवर्त्तित्वप्राप्ति-सदक्षिणबहुयज्ञकरण-तदुत्तरमोक्षप्रद-योगिलोक-गमन-तदधिकरणकयावदाहूतसंप्लववरबहुभोगोपभोग—तदुत्तर-वैष्णवदुर्लभसाधुसम्मतयोगिकुलाधिकरणकचतुर्व्वेदि-विप्रवर—स्व-जन्मतदुत्तरसदक्षिण-बहुयज्ञकरण-तदुत्तरवैष्णवयोगप्राप्तिपूर्व्वक-मोक्षावाप्तिकामः कृतयात्राद्वादशप्रतिष्ठामहं करिष्ये।

इति सङ्कल्प्य जलाशयं गत्वा प्रविश्य तत्र—तीर्थानि आग-च्छन्तु इत्यावाह्य नारायणं ध्यात्वा स्वसूत्रोक्तविधिना स्नात्वा तर्पणं कृत्वा—उत्तीर्य्य धौते वाससी परिधायाऽऽचम्य भास्कराभिमुखो-ऽष्टोत्तरशतं गायत्रीं जपित्वा ततः सौरमन्त्रानपि यथाज्ञानं जपित्वा त्रिः प्रदक्षिणीकृत्यादित्यं प्रणम्य मौनेनायतनं गत्वा पुरुषोत्तमं पूजयेत्।

तद्यथा—

आदावष्टोत्तरशतपलमितेन गव्यघृतेन ततो मधुना, गन्धोद-केन, ततस्तीर्थोदकेन ततश्चन्दनोदकेन, तूष्णीं पुरुषोत्तमं स्नापयेत्।

ततः श्रेष्ठं वासोयुगं भक्त्या परिधापयेत्। ततो गन्धेन

मल्लिकादिपुष्पैश्च पूजयेत् ॥ ततोऽगुरुधूपं, गुग्गुलधूपं वा दद्यात्, घृतदीपं दद्यात् ।

ततोऽन्यानपि द्वादशदीपान् घृतेन तैलेन वा दद्यात् ।

नैवेद्यञ्च—पायसापूप-शष्कुली-वटक-मोदक-फाणित-फलानि दद्यात् ।

फाणितं गुड़विकारः, शालुकाकारो लोष्ट्रभूतः खण्डो वा । ततः—ॐ "नमः पुरुषोत्तमाय" इति मन्त्रमष्टोत्तरशतं जपेत् ।

ततः—

ॐ नमस्ते सर्व्वलोकेश भक्तानामभयप्रद ।
संसारसागरे मग्नं त्राहि मां पुरुषोत्तम ॥
यास्ते मया कृता यात्रा द्वादशैव जगत्पते ।
प्रसादात्तव गोविन्द सम्पूर्णास्ता भवन्तु मे ॥

इति पठित्वा प्रसादयेत् । ततो दण्डवत् प्रणिपतेत् । ततो गुरुं विष्णुवदर्च्चयेत् । ततः पुरुषोत्तमोपरि पुष्पमण्डपं कुर्य्यात् ।

ततो रात्रौ वासुदेवस्य कथाभिर्गीतिभिश्च जागरणं कुर्य्यात् । विष्णुं ध्यायन् स्तुवन् नमस्यंश्च रात्रिं नयेत् ।

ततः प्रभाते वेदपारगान् संयतेन्द्रियान् पौराणिकान् द्वादश ब्राह्मणान् निमन्त्रयेत् । ततः पूर्व्ववत् स्नानादि कृत्वा पुरुषोत्तमं स्नापयित्वा पूर्व्ववद्दण्डवत्प्रणामान्तां पूजां विधाय ब्राह्मणेभ्यो द्वादशवासोयुगानि हिरण्यखण्डानि छत्राणि उपानद्युगलञ्च श्रद्धया दद्यात् ।

ततो गुरवे गां वस्त्रं हिरण्यं छत्रम्, उपानहौ कांस्यपात्रञ्च

दद्यात् । ततो निमन्त्रितब्राह्मणान् भोज्यं, पायसं, पक्वान्नं भक्ष्यं गुड़ञ्च भोजयेत् ॥

ततो मोदकसहितान् द्वादश कुम्भान् तेभ्यो दद्यात् । यथाशक्ति दक्षिणाञ्च दद्यात् ।

ततो गुरवे स-मोदकमेकमुदककुम्भं हिरण्यं दक्षिणां च दद्यात् । ततः सुवर्ण-वस्त्र-गो-धान्यैरन्यैश्च श्रेष्ठद्रव्यैर्गुरुं सम्पूज्य नमस्कृत्य—

ॐ सर्व्वव्यापी जगन्नाथः शङ्ख-चक्र-गदाधरः ।
अनादिनिधनो देवः प्रीयतां परमेश्वरः ॥

इत्युच्चार्य्य त्रयोदशाऽपि ब्राह्मणान् त्रिः प्रदक्षिणीकृत्य गुरुप्राधान्येन विसर्ज्जयेत् । आसीमान्तमनुव्रज्य पुनः सर्व्वान् नमस्कृत्य गृहमागत्य सबान्धवो मौनेन भुञ्जीतेति ॥

तथा,—

एवञ्च यस्यां कस्यामपि तिथौ—

ॐ अद्य यावद्द्युचन्द्रतारक–वत्सरःसहक्रीड़न-जरामरण-सर्व्वदुःख–-तृष्णा-ग्लानिविवर्ज्जितचतुर्भुजमहावीर्य्यवनमालाविभूषित-श्रीवत्सोरस्कसंयुक्त–शङ्ख-चक्र-गदाधररूपयौवनगर्व्वितात्मीय-यावदाहूतसंप्लवविष्णुपुरविचरणकामः कृष्ण–राम–सुभद्रादर्शनमहं करिष्ये ।

इति सङ्कल्प्य पश्येत् ॥

येऽर्च्चयन्ति सदा भक्त्या वासुदेवं जगद्गुरुम् ।
ते तत्र वैष्णवा यान्ति विष्णुलोकं न संशयः ॥

दक्षिणस्योदधेस्तीरे क्षेत्रे परमदुर्लभे।
दृष्ट्वा कृष्णञ्च रामञ्च सुभद्राञ्चापि यान्ति तत्॥

नित्यविष्णुपूजायाम्—

तथा कदाचित् पुरुषोत्तमादिदर्शने विष्णुलोकगमनं फलमित्यर्थः।

तथा—तत्रैव

संवत्सरमुपासित्वा मासमात्रमथापि वा।
तेन चेष्टं हुतं तेन तेन तप्तं तपो महत्॥
स याति परमं स्थानं यत्र योगेश्वरो हरिः।
भुक्त्वा भोगान् विचित्रांश्च देवयोषित्समन्वितान्॥
कल्पान्ते पुनरागत्य मर्त्त्यलोके नरोत्तमः।
जायते योगिनां विप्रा ज्ञानज्ञेयोद्यतो गृहे॥
सम्प्राप्य वैष्णवं योगं हरेः स्वच्छन्दतां व्रजेत्।

तथा विष्णुलोकं प्रक्रम्य—

कल्पवृक्षसमीपे तु ये त्यजन्ति कलेवरम्।
ते तत्र मनुजा यान्ति ये मृताः पुरुषोत्तमे॥
वटसागरयोर्मध्ये यः स्मरन् पुरुषोत्तमम्।
मृतः सोऽपि नरो याति तत्र नास्त्यत्र संशयः॥
पुरमध्ये पुनर्भाति मन्दिरं रत्नभूषितम्।

इत्युपक्रम्य—

तत्र ते पुरुषा यान्ति ये मृताः पुरुषोत्तमे॥

येनच्च दुर्लभं लोके कीर्त्तितं पुरुषोत्तमम्।
त्यक्त्वा यत्र नरा देहं यान्ति सालोक्यतां हरेः॥
कृमिकीटपतङ्गाश्च तिर्य्यग्योनिगताश्च ये।
तत्र देहं परित्यज्य तेऽपि यान्ति परां गतिम्॥
पथि श्मशाने गृहमण्डपे वा रथ्याप्रदेशेष्वपि यत्र तत्र।
इच्छन्ननिच्छन्नपि तत्र देहं सन्त्यज्य मोक्षं लभते मनुष्यः॥
देहं त्यजन्ति पुरुषा ये तत्र पुरुषोत्तमे।
कल्पवृक्षं समासाद्य मुक्तास्ते नाऽत्र संशयः॥
वट-सागरयोर्मध्ये ये त्यजन्ति कलेवरम्।
ते दुर्लभं परं मोक्षं प्राप्नुवन्ति न संशयः॥

इति पुरुषोत्तमविधिः।

---

## अथ कृत्तिवासाः ।

तथाहि—ब्रह्मपुराणे—

तथा चैवोत्कलदेशे कृत्तिवासा महेश्वरः ।
सर्व्वपापहरं तस्य क्षेत्रं परमदुर्लभम् ॥
लिङ्गकोटीसमायुक्तं वाराणस्याः समं शुभम् ।
एकाम्रकेति विख्यातं तीर्थाष्टकसमन्वितम् ॥
तीर्थं विन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः ।
देवानृषीन् मनुष्यांश्च पितॄन् सन्तर्प्य यत्नतः ॥
तिलोदकेन विधिना नाम-गोत्रविधानवित् ।
स्नात्वैवं विधिवत्तत्र सोऽश्वमेधफलं लभेत् ॥
ग्रहोपरागे संक्रान्त्यामयने विषुवे तथा ।
युगादौ षड़शीत्याञ्च तथाऽन्यत्र शुभे तिथौ ॥
ये तत्र दानं विप्रेभ्यः प्रयच्छन्ति धनादिकम् ।
अन्यतीर्थाच्छतगुणं फलं ते प्राप्नुवन्ति वै ॥
पिण्डं ये संप्रयच्छन्ति पितृभ्यः सरसस्तटे ।
पितॄणामक्षयां तृप्तिं ते कुर्व्वन्ति न संशयः ॥
ततः शम्भोर्गृहं गच्छेत् वाग्यतः संयतेन्द्रियः ।
प्रविश्य पूजयेत् पूर्व्वं कृत्वा तत्र प्रदक्षिणम् ॥
घृतक्षीरादिभिः स्नानं कारयित्वा भवं शुचिः ।
चन्दनेन सुगन्धेन विलिप्य कुङ्कुमेन च ॥

तत्र सम्पूजयेद्देवं चन्द्रमौलिमुमापतिम्।
पुष्पैर्नानाविधैर्मेध्यैर्व्विल्वार्क-[1]कमलादिभिः॥
आगमोक्तेन मन्त्रेण वेदोक्तेन च शङ्करम्॥
अदीक्षितश्च नाम्नैव[2] मूलमन्त्रेण चाऽर्च्चयेत्।
एवं सम्पूज्य तं देवं गन्धपुष्पाऽम्बरादिभिः॥
धूपैर्दीपैश्च नैवेद्यैरुपहारैस्तथा स्तवैः।
दण्डवत् प्रणिपातैश्च गीतैर्वाद्यैर्मनोहरैः॥
नृत्यैर्जप-नमस्कारैर्जयशब्दैः प्रदक्षिणैः।
एवं सम्पूज्य विधिवद्देवदेवमुमापतिम्॥
सर्व्वपापविनिर्म्मुक्तो रूपयौवनगर्व्वितः।
कुलैकविंशमुद्धृत्य दिव्याभरणभूषितः॥
सौवर्णेन विमानेन किङ्किणीजालमालिना।
उपगीयमानो गन्धर्व्वैरप्सरोभिरलङ्कृतः॥
उद्द्योतयन् दिशः सर्व्वाः शिवलोकं स गच्छति।
भुक्त्वा तत्र सुखं दिव्यं मनसः प्रीतिदायकम्॥
तल्लोकवासिभिः सार्द्धं यावदाहूतसंप्लवम्।
ततस्तस्मादिहायातः पृथिव्यां पुण्यसञ्चये[3]॥
जायते योगिनां गेहे चतुर्व्वेदी द्विजोत्तमः।
योगं पाशुपतं प्राप्य ततो मोक्षमवाप्नुयात्॥

---

(१) घ पुस्तके—पुन्नाग—।

(२) क पुस्तके—नत्वैव।

(३) घ पुस्तके—युगसंक्षये।

शयनोत्थापने चैव संक्रान्त्यामयने तथा।
अशोकाख्यायाञ्चाष्टम्यां[1] पवित्रारोपणे तथा॥
ये च पश्यन्ति देवेशं कृत्तिवाससमव्ययम्।
विमानेनार्कवर्णेन शिवलोकं व्रजन्ति ते॥
सर्व्वकालेऽपि तं देवं ये पश्यन्ति सुमेधसः।
तेऽपि पापविनिर्म्मुक्ताः शिवलोकं व्रजन्ति वै॥
देवस्य पश्चिमे पूर्व्वे दक्षिणे चोत्तरे तथा।
योजनद्वितयं सार्द्धं क्षेत्रं तद्भुक्ति-मुक्तिदम्॥
तस्मिन् क्षेत्रवरे रम्ये[2] भास्करेश्वरसंज्ञितम्।
पश्यन्ति ये तु तं देवं स्नात्वा कुण्डे महेश्वरम्॥
आदित्येनार्च्चितं पूर्व्वं देवदेवं त्रिलोचनम्।
सर्व्वपापविनिर्म्मुक्ता विमानवरमास्थिताः॥
उपगीयमाना गन्धर्व्वैः शिवलोकं व्रजन्ति ते।
भुक्त्वा तत्र वरान् भोगान् यावदाहूतसंप्लवम्॥
पुण्यक्षयादिहायाता धार्म्मिकाश्च भवन्ति वै[3]।
यज्वानो दानशीलाश्च पृथिव्याः पतयस्तथा॥
मुक्तेश्वरञ्च सिद्धेशं स्वर्णजालेश्वरं तथा।
परमेश्वरञ्च विख्यातं शुभाग्रमतिकेश्वरम्।
ये पश्यन्त्यर्च्चयित्वा च स्नात्वा विन्दुसरोऽम्भसि॥

---

(१) घ पुस्तके—अशोकाख्यामयाष्टम्याम्।
(२) ग पुस्तके—लिङ्गम्।
(३) मूले—जायन्ते प्रवरे कुले।

सर्व्वपापविनिर्म्मुक्ता विमानवरमास्थिताः।
उपगीयमाना गन्धर्व्वैः शिवलोकं व्रजन्ति वै॥
तिष्ठन्ति तत्र मुदिताः कल्पमेकं द्विजोत्तमाः।
भुक्त्वा तु विपुलान् भोगान् शिवलोके मनोरमान्॥
पुण्यक्षयादिहायाता जायन्ते प्रवरे कुले।
अथवा योगिनां गेहे वेदवेदाङ्गपारगाः॥
उत्पद्यन्ते द्विजवराः सर्व्वभूतहिते रताः।
मोक्षशास्त्रार्थकुशलाः सर्व्वत्र समबुद्धयः॥
योगं शम्भोर्वरं प्राप्य ततो मोक्षं व्रजन्ति ते।
तस्मिन् क्षेत्रवरे पुण्ये लिङ्गं यद्दृश्यते द्विजाः॥
पूज्याऽपूज्यञ्च सर्व्वत्र वने रथ्यान्तरेऽपि वा।
चतुष्पथे श्मशाने वा यत्र कुत्र च तिष्ठति॥
दृष्ट्वा तल्लिङ्गमव्यग्रः श्रद्धया सुसमाहितः।
स्नापयित्वा तु तं भक्त्या गन्धैः पुष्पैर्मनोहरैः॥
धूपैर्दीपैः सनैवेद्यैर्नमस्कारैः तथा स्तवैः।
दण्डवत्प्रणिपातैश्च नृत्यगीतादिभिस्तथा॥
सम्पूज्यैवं विधानेन शिवलोकं व्रजेन्नरः।
नारी वा द्विजशार्दूलाः सम्पूज्य[1] श्रद्धयाऽन्विताः।
पूर्व्वोक्तं फलमाप्नोति नाऽत्र कार्य्या विचारणा॥
कः शक्नोति गुणान् वक्तुं समग्रान् मुनिसत्तमाः।
तस्य क्षेत्रवरस्याऽद्य ऋते देवान्महेश्वरात्॥

(१) ख पुस्तके—सततं।

तस्मिन् क्षेत्रवरे गत्वा सततं श्रद्धयान्वितः ।
माधवादिषु[1] मासेषु नरो यदि वाऽङ्गना ॥
प्राप्नोत्यभिमतान् भोगान् शिवलोकञ्च गच्छति ।
यस्तत्र तीर्थं विधिवत् करोति नियतेन्द्रियः ॥
कुलैकविंशमुद्धृत्य शिवलोकं स गच्छति ।
यस्मिंस्तस्मिंस्तिथौ विप्राः स्नात्वा विन्दुसरोऽम्भसि ॥
पश्येद्देवं विरूपाक्षं देवीञ्च वरदां शिवाम् ।
गणं चण्डं कार्त्तिकेयं गणेशं वृषभं तथा ॥
कल्पद्रुमञ्च सावित्रीं शिवलोकञ्च गच्छति ।
एकाम्रके शिवक्षेत्रे वाराणसीसमे शुभे ॥
स्नानं करोति यस्तत्र मोक्षं स लभते शुभम् ।

इति कृत्तिवासोविधिः ।

---

## अथ कोणार्कः ।

तथाहि—

एतन्मया मुनिश्रेष्ठाः क्षेत्रं प्रोक्तं सुदुर्लभम् ।
कोणार्कस्योदधेस्तीरं भुक्ति-मुक्तिफलप्रदम् ॥
स्नात्वैव[2] सागरे दत्त्वा सूर्य्यायाऽर्घ्यं प्रणम्य च ।
नरो वा यदि वा नारी सर्व्वकामफलं लभेत् ॥

---

(१) घ पुस्तके—माघाद्यादिषु मासेषु ।
(२) ग पुस्तके—स्नात्वा वै ।

ततः सूर्य्यालयं गच्छेत् पुष्पमादाय वाग्यतः[1]।
प्रविश्य पूजयेद्भानुं कुर्य्यात्तत्त्रिः प्रदक्षिणम् ॥
[2]तान्त्रिकैर्वैदिकैर्मन्त्रैर्भक्त्या कोणार्कमर्च्चयेत्।
गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैरपि ॥
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथाऽपरैः[3]।
एवं सम्पूज्य कोणार्कं सहस्रांशुं जगत्प्रभुम् ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः।
सर्व्वपापविनिर्म्मुक्तो युवा दिव्यवपुर्नरः ॥
सप्ताऽवरान् सप्तपरान् वंशानुद्धृत्य भो द्विजाः।
विमानेनार्कवर्णेन कामगेन सुवर्च्चसा ॥
उपगीयमानो गन्धर्व्वैः सूर्य्यलोकं स गच्छति।
भुक्त्वा तत्र वरान् भोगान् यावदाहूतसंप्लवम् ॥
पुण्यक्षयादिहाऽऽयातः प्रवरे योगिनां कुले।
चतुर्व्वेदी भवेद्विप्रः स्वधर्म्म-[4]निरतः शुचिः ॥
योगं द्विवस्वतः प्राप्य ततो मोक्षमवाप्नुयात् ॥
चैत्रे मासि सिते पक्षे यात्रां मदन-[5]भञ्जिकाम्।
यः करोति नरस्तत्र पूर्व्वोक्तं स फलं लभेत् ॥
शयनोत्थानयोर्भानोः संक्रान्त्यां विषुवेऽयने ॥

---

(१) ख पुस्तके—सत्वरः।

(२) मूले—पूजयेत् परया भक्त्या कोणार्कं मुनिसत्तमाः।

(३) क पुस्तके—स्तवैः।

(४) ग पुस्तके—सर्व्वधर्म्मरतः।

(५) घ पुस्तके—दमनभञ्जिकाम्।

वारे रवेस्तिथौ चैव सर्व्वकालेऽथवा द्विजाः ।
ये तत्र यात्रां कुर्व्वन्ति पुरुषाः संयतेन्द्रियाः ॥
विमानेनार्कवर्णेन सूर्य्यलोकं व्रजन्ति ते ।
यस्तत्र सवितुः क्षेत्रे प्राणांस्त्यजति मानवः ॥
स सूर्य्यलोकमास्थाय देववन्मोदते दिवि ।
पुनर्म्मानुषतां प्राप्य राजा भवति धार्म्मिकः ॥
योगं रवेः समासाद्य ततो मोक्षमवाप्नुयात् ।

कोणार्कक्षेत्रमधिकृत्य—

आस्ते तत्र महादेवः तीरे नद-नदीपतेः ।
रामेश्वर इति ख्यातः सर्व्वकामफलप्रदः ॥
(५)तत्रार्च्चयन्ति कामारिं स्नात्वा सम्यङ्महोदधौ ।
गन्धैः पुष्पैस्तथा धूपैर्दीपैर्नैवेद्यकैर्वरैः ॥
प्रणिपातैस्तथा स्तोत्रैर्गीतैर्वाद्यैर्मनोहरैः ।
राजसूयफलं प्राप्य वाजिमेधफलं तथा ॥
प्राप्नुवन्ति महात्मानः संसिद्धिं परमां तथा ।
कामगेन विमानेन किङ्किणीजालमालिना ॥
उपगीयमाना गन्धर्व्वैः शिवलोकं व्रजन्ति ते ।
आहूतसंप्लवं यावद्भुक्त्वा भोगाननुत्तमान् ॥
पुण्यक्षयादिहागत्य चातुर्व्वेदा भवन्ति ते ।
शाङ्करं योगमासाद्य ततो मोक्षं व्रजन्ति ते ॥

इति कोणार्कविधिः ।

(५) ख पुस्तके—ये तं पश्यन्ति ।

# अथ विरजक्षेत्रम्।

तथा ब्रह्मोवाच—

विरजे विरजा माता ब्रह्माणी सम्प्रतिष्ठिता।
यस्याः सन्दर्शने[1] मर्त्त्यः पुनात्यासप्तमं कुलम्॥
स्नात्वा दृष्ट्वा तु[2] तां देवीं भक्त्याऽऽपूज्य प्रणम्य च।
नरः स्ववंशमुद्धृत्य मम लोकं स गच्छति॥
अन्याश्च तत्र तिष्ठन्ति विरजे[3] लोकमातरः।
सर्व्वपापहरा देव्यो वरदा भक्तवत्सलाः॥
आस्ते वैतरणी तत्र सर्व्वपापहरा नदी।
यस्यां स्नात्वा नरश्रेष्ठः सर्व्वपापैः प्रमुच्यते॥
आस्ते स्वयम्भूस्तत्रैव क्रोड़रूपी हरिः स्वयम्।
दृष्ट्वा प्रणम्य तं भक्त्या नरो विष्णुपुरं व्रजेत्॥
[4]कपिलागोग्रहे सोमतीर्थे चालावुसंज्ञके।
मृत्युञ्जये क्रोड़तीर्थे [5]वसुसिद्धेश्वरे तथा॥
तीर्थेष्वेतेषु मतिमान् यत् फलं लभते नरः।
तत्फलं समवाप्नोति विरजे स्नानतर्पणात्॥

---

(१) घ पुस्तके—सन्दर्शनात्।

(२) क ख पुस्तके—सकृद्दृष्ट्वा तु।

(३) घ पुस्तके—विरजाः।

(४) घ पुस्तके—कापिले।

(५) ख पुस्तके—वासुके चेश्वरे तथा।

विरजे यो मम क्षेत्रे पिण्डदानं करोति वै ।
स करोत्यक्षयां तृप्तिं पितृणां नात्र संशयः ॥
मम क्षेत्रे मुनिश्रेष्ठा विरजे ये कलेवरम् ।
परित्यजन्ति पुरुषास्ते मोक्षं प्राप्नुवन्ति वै ॥

इति विरजक्षेत्रम् ।

---

## अथ गङ्गासागरसमीपे कपिलदर्शनफलम् ॥

ब्रह्मपुराणे—

स्नात्वा यः सागरे मर्त्त्यः पवित्रे कपिलं हरिम् ।
पश्येद्देवीञ्च वाराहीं स याति त्रिदशालयम् ॥

---

अथ कृत्तिवासःक्षेत्रप्रयोगः ।

ॐ अद्याश्वमेधफलसमफलप्राप्तिकामो विन्दुसरसि स्नानमहं करिष्ये।

इति सङ्कल्प्य तत्र सविधि स्नायात् ।

दाने च—

अन्यतीर्थंदानाऽपेक्षयाऽत्र शतगुणं फलम् ।

---

अथ कृत्तिवासःपूजा ।

ॐ अद्य—एकविंशतिकुलोद्धरणपूर्व्वक-सर्व्वपापविनिर्म्मुक्त-रूप-यौवनगर्व्वित-दिव्याभरणभूषित-बहुगन्धर्व्वाप्सरःसमुपगीयमानाऽऽ-

त्मकर्तृकसर्व्वदिगुद्द्योतनसमकालिन किङ्किणीजालमालि-सौवर्ण-विमानकरणक--शिवलोकगमन--तदधिकरणक--यावदाहूतसंप्लव-तल्लोकवासि-बहुपुरुषसहितात्मीयदिव्यसुखभोग-तदुत्तरयोगिगृहोत्पन्नचतुर्व्वेदि-द्विजोत्तमत्वभवन-तदुत्तर-पाशुपतयोगप्राप्तिपूर्व्वक-मोक्षावाप्तिकामो ब्रह्मपुराणोक्तविधिना कृत्तिवासःपूजामहं करिष्ये।

इति सङ्कल्प्य देवं प्रदक्षिणीकृत्य पाद्यमाचमनीयञ्च दत्त्वा अष्टोत्तरपलशतमितेन गव्यघृतेन ततस्तावतैव गव्यदुग्धेन, ततो मधुना ततो गन्धोदकेन, ततस्तीर्थोदकेन, ततश्चन्दनोदकेन, स्नापयित्वा मधुपर्कं पुनराचमनीयञ्च दत्त्वा चन्दनानुलेपनं कुङ्कुमानुलेपनञ्च दत्त्वा अर्क-पद्मादिपुष्पैरागमोक्तमन्त्रेण तदभावे तु "ॐ कृत्तिवाससे नमः" इति ॐ नमः शिवाय "इति" च त्रिः सम्पूज्य धूपं दीपं नैवेद्यमुपहारं वस्त्रञ्च दत्त्वा स्तवैर्दण्डवत्प्रणामैर्गीतैर्वाद्यैर्नृत्येन जपेन नमस्कारेण जयशब्दैः प्रदक्षिणैरर्च्चयेदिति।

शिवस्य शयने उत्थाने संक्रान्तौ, अशोकाष्टम्यां वा कृत्तिवाससो दर्शने ॐ अद्य शिवशयनेऽर्कवर्णविमानकरणकशिवलोकगमनकामः कृत्तिवासोदर्शनमहं करिष्ये।

इति संङ्कल्प्य पश्येत्।

एवं शिवोत्थानादावपि।

कालान्तरे तु—ॐ अद्य शिवलोकगमनकामः कृत्तिवासोदर्शनमहं करिष्ये।

इति सङ्कल्प्य पश्येत्।

एतत् क्षेत्रस्थभास्करेश्वरदर्शने—

ॐ अद्य सर्व्वपापविनिर्म्मुक्त-विमानवरावस्थितबहुगन्धर्व्वोप-गीयमान × × शिवलोकगमन-तदधिकरणकाहूतसंप्लवपर्य्यन्त-बहुवरभोगोपभोग-तदुत्तरैतल्लौकिकधार्म्मिक-यज्ञदानशीलपृथिवी-पतित्वभवनकामः कुण्डस्नानपूर्व्वकभास्करेश्वरदर्शनमहं करिष्ये।

इति सङ्कल्प्य कुण्डे स्नात्वा तं पश्येत्।

मुक्तेश्वर-सिद्धेश-स्वर्णजालेश्वर-परमेश्वराणामन्यतमदर्शने—

ॐ अद्य सर्व्वपापविनिर्म्मुक्तविमानवरावस्थितबहुगन्धर्व्वोपगी-यमानात्मीयशिवलोकगमन—तदधिकरणकैककल्पावच्छिन्नविपुल-मनोरमबहुभोगोपभोग—तदुत्तरैतल्लौकिक—प्रवरयोगिकुल -योगि-गेहान्यतराधिकरणकवेदवेदाङ्गपारगसर्व्वभूतहितरतमोक्षशास्त्रा-र्थकुशल समबुद्धि[1]द्विजवरत्वभवन—तदुत्तरवरशम्भुयोगप्राप्तिपूर्व्वक मोक्षप्राप्तिकामो विन्दुसरोऽम्भसि स्नात्वा मुक्तेश्वरमर्च्चयित्वा तद्द-र्शनमहं करिष्ये।

इति सङ्कल्प्य विन्दुसरसि स्नात्वा मुक्तेश्वरमभ्यर्च्च्य पश्येत्। एवं सिद्धेशादावपि।

रथ्यास्थितलिङ्गान्तरपूजने तु—

ॐ अद्य शिवलोकगमनकामो ब्रह्मपुराणोक्तविधिना कृत्ति-वासःक्षेत्रस्थशिवलिङ्गपूजनमहं करिष्ये।

इति सङ्कल्प्य—

---

१ क पुस्तके—सर्व्वत्र समबुद्धि।

लिङ्गं दृष्ट्वा श्रद्धयैकाग्रमनाः सुसमाहितः स्नपन-गन्ध-पुष्प मनोरमधूप-दीप नैवेद्य—नमस्कार—स्तव—दण्डप्रणाम—नृत्य—गीत-वाद्यैः पूजयेत्।

ततः क्षेत्रगमने तु—ॐ अद्याभिलषितबहुकामावाप्ति-शिव-लोकगमनकामः कृत्तिवासःक्षेत्रगमनमहं करिष्ये।

इति सङ्कल्प्य तत्र गच्छेत्।

अथ कोणार्कविधिः।

ॐ अद्याभिमतफलप्राप्तिकामः सागरस्नान-सूर्य्यार्घ्यदान तत्-प्रणाममहं करिष्ये।

इति सङ्कल्प्य सागरे सविधितर्पणान्तं स्नानं कृत्वा सूर्य्यं प्रणमेत्।

ततः पुष्पमादाय मौनी कोणार्कमठं प्रविश्य—

ॐ अद्य दशाश्वमेधजन्यफलसमफलप्राप्ति-सप्ताऽवरसप्तपरवंशो-द्धारपूर्व्वक सर्व्वपापविनिर्म्मुक्तवरदिव्यवपुर्वरबहुगन्धर्व्वोपगीयमाना-र्कीयार्कवर्णकामगसुवर्च्चोविमानकरणक—सूर्य्यलोकगमन—तदधि-करणकाहूतसंप्लवपर्य्यन्तवरबहुभोगोपभोग—तदुत्तरैतल्लौकिकप्रवर-योगिकुलाधिकरणकचतुर्व्वेदिस्वधर्म्मनिरतशुचिविप्रत्वभवन-तदुत्तर-दिवस्यतियोगप्राप्तिपूर्व्वकमोक्षावाप्तिकामो ब्रह्मपुराणोक्तविधिना कोणार्कपूजनमहं करिष्ये।

इति सङ्कल्प्य अर्कं त्रिः प्रदक्षिणीकृत्यागमिकैर्वैदिकैश्च मन्त्रै-र्गन्ध-पुष्प-धूप-दीप-नैवेद्य-दण्डप्रणाम-जयशब्दैरर्च्चयेत्।

अथाऽत्रैव रामेश्वरविधिः—

ॐ अद्य राजसूयाश्वमेधफलसमफल परमसंसिद्धिप्राप्तिकामः-किङ्किणीजालमालिविमानकरणक-गन्धर्व्वोपगीयमानात्मकर्त्तृक-शिवलोकगमन-तदधिकरणकाहृतसंप्लवपर्य्यन्तमुत्तम-बहुभोगोपभोग तदुत्तरैहिकयजुर्व्वेदिविप्रत्वभवन-तदुत्तरशङ्करयोगप्राप्तिपूर्व्वक-मोक्षावाप्तिकामो ब्रह्मपुराणोक्तविधिना रामेश्वरपूजामहं करिष्ये ।

इति सङ्कल्प्य समुद्रे सविधि स्नात्वा कोणार्कवदेव रामेश्वर-मर्च्चयेत् ।

अथ विरजाक्षेत्रप्रयोगः ।

ॐ अद्याऽऽस्मत्कुलपवित्रीकरणकामो विरजादर्शनमहं करिष्ये ।

इति सङ्कल्प्य पश्येत् ।

अस्यास्तु स्नानपूर्व्वक-दर्शन-पूजा-प्रणामानां स्ववंशोद्धारपूर्व्वक-ब्रह्मलोकगमनं फलम् ॥

वैतरणीस्नाने सर्व्वपापविनिर्म्मुक्तिः फलम् ।

क्रोड़रूपि-विष्णुदर्शने विष्णुपुरगमनं फलम् ।

एवं वाराहीदर्शनेऽपीति ।

इति महामहोपाध्याय श्रीवाचस्पतिमिश्रविरचिते

तीर्थचिन्तामणौ द्वितीयः पुरुषोत्तमप्रकाशः ।

---

## ॐ गङ्गायै नमः।



जलक्रीड़ालोलत्रिदशतरुणीनागरमणी
नवश्रोणिश्रेणी-घनजघन-पीनस्तनभरैः।
त्रुटद्वीचीचञ्चत्कनककलहंसीकलरवैः
समाहूतब्रह्मश्रियमिव भजे देवसरितम्॥

मज्जद्देववधूटिकाकुचतटीसंघट्टसञ्चूर्णिता
गङ्गाया जलवीचयो मधुलिहां श्रेणीभिराचुम्बिताः।
चञ्चच्चञ्चलचक्रवाकतरुणीसंभ्रान्तनेत्राञ्चलै-
रापीता जगतां दिशन्तु सततं कल्याणमव्याहतम्॥

तत्रादौ माहात्म्यम्—

अत्र विष्णुपुराणे—

ततः प्रभवति ब्रह्मन् सर्व्वपापहरा सरित्।
गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा॥

महाभारते—

ते देशास्ते जनपदास्ते श्रमास्ते च पर्व्वताः।
येषां भागीरथी पुण्या मध्ये याति सरिद्वरा॥
तपसा ब्रह्मचर्य्येण यज्ञैस्त्यागेन वा पुनः।
तां गतिं न लभन्ते तु गङ्गां संसेव्य यां लभेत्॥
पूर्व्वे वयसि कर्म्माणि कृत्वा पापानि ये नराः।
शेषे गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम्॥

तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान् ।
मासमेकन्तु गङ्गायां समौ स्यातां नवा समौ ॥
लम्यतेऽवाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ॥
भूतानामिह सर्व्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥
प्रकृष्टैरशुभैर्ग्रस्तानेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान् प्रेत्य तारयेत् ॥

प्रेत्य पतत इति सम्बन्धः ।

ते सन्नियुक्ता मुनिभिर्नृणां देवैः[१] सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गामभिमताम्बरैः (?) ॥
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आ देहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥

अन्धान् जड़ान् द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्दानवैश्च
निषेविता सर्व्वकामैर्युनक्ति ॥

जड़ान्धप्रभृतयः कर्म्मानधिकारिणोऽपि गङ्गासेवया अभिमत-फलभागिनो भवन्तीत्यर्थः ।

---

(१) ख पुस्तके—नूनं वेदैः समस्वरैः ।

ब्रह्मपुराणे—

षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत्।
यावत्पुण्यममावास्यां दिनानि दश नित्यशः॥
शुक्लप्रतिपदमारभ्य दिनानि दशसंख्यया।
पाताले सन्निधानन्तु करोति स्वयमेव हि॥
शुक्लैकादशीमारभ्य यावद्दशदिनानि तु।
पञ्चम्यन्तानि सा स्वर्गे भवेत्सन्निहिता सदा॥

पुण्यमिति षष्ठीतो दर्शान्तं गङ्गायां सातिशयं पुण्यं भवतीत्यर्थः।

भविष्यपुराणे—

कृते तु सर्व्वतीर्थानि त्रेतायां पुष्करं परम्।
द्वापरे तु कुरुक्षेत्रं कलौ गङ्गा विशिष्यते॥

ब्रह्माण्डपुराणे—

कलौ तु सर्व्वतीर्थानि स्वं स्वं वीर्य्यं स्वभावतः।
गङ्गायां प्रतिमुञ्चन्ति सा तु देवी न कुत्रचित्॥

वाराहे—

गङ्गाम्भःकणदिग्धस्य वायोः संस्पर्शनादपि।
पापशीला अपि नराः शुभां गतिमवाप्नुयुः॥

---

# अथ गङ्गाजलमाहात्म्यम् ।

तत्र स्कान्दपुराणे—

योऽसौ सर्व्वगतो विष्णुश्चित्स्वरूपी जनार्द्दनः ।
स एव द्रवरूपेण गङ्गाम्भो नाऽत्र संशयः ॥

लिङ्गपुराणे—

ब्रह्महा गुरुहा गोघ्नः स्तेयी तु गुरुतल्पगः ।
गङ्गाम्भसा च पूयन्ते नाऽत्र कार्य्या विचारणा ॥

यमः—

चिरस्थमुद्धृतं वाऽपि शीतमुष्णमथापि वा ।
गाङ्गेयं हरते तोयं पापमामरणान्तिकम् ॥
वर्ज्यं पर्य्युषितं तोयं वर्ज्यं पर्य्युषितं दलम् ।
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥

महाभारते—

मेरोः समुद्रस्य च सर्व्वरत्नैः
संख्योपलानामुदकस्य वापि ।
गङ्गाजलानां न तु शक्तिरस्ति
वक्तुं गुणाख्यापरिमाणमत्र ॥

मत्स्यपुराणे—

तीर्थयात्राविधिं कृत्स्नमकुर्व्वाणोऽपि यो नरः[1] ।
गङ्गातोयस्य माहात्म्यात् सोऽप्यत्र फलभाग्भवेत् ॥

---

(१) ग पुस्तके—मानवः ।

ब्रह्माण्डपुराणे—

चिन्तामणिगणाश्चापि गङ्गायास्तोयविन्दवः ।
विशिष्टा यत्प्रयच्छन्ति भक्तेभ्योऽचिन्तितं[1] फलम् ॥
गण्डूषमात्रतो भक्त्या सकृद्गङ्गाम्भसा नरः ।
कामधेनुस्तनोद्भूतान् भुङ्क्ते दिव्यरसान्दिवि[2] ॥
सर्व्वपापं निहत्येह रेजे गङ्गाजलोक्षितः ।
अपहत्य तमस्तीव्रं भाति सूर्य्यो यथोदये ॥
मनो-वाक्कायजैर्ग्रस्तः पापैर्बहुविधैरपि ।
वीक्ष्य गङ्गां भवेत्पूतः पुरुषो नाऽत्र संशयः ॥

तथा—

गङ्गातोयाभिषिक्तन्तु भक्ष्य[3]मश्नाति योगवित् ।
सर्पवत्कञ्चुकं त्यक्त्वा पापहीनो नरोत्तमः ।
स्वर्गापवर्गिकां सिद्धिं प्राप्नोत्येव न संशयः ॥
तथा गङ्गाजलैर्दिग्धः[4] पवनः पुरुषं यदा ।
स्पृशति सोऽपि पाप्मानं सर्व्वथै[5]वापवर्ज्जति ॥

नारदीये—

हिमवद्विन्ध्यसदृशा राशयः पापकर्म्मणाम् ।
गङ्गाम्भसा ते नश्यन्ति विष्णुभक्तिहतापदः[6] ॥

---

(१) ग पुस्तके—भक्तेभ्यश्चिन्तितम् ।

(२) ख पुस्तके—भुवि ।

(३) ख पुस्तके—षिक्तान्तु भिक्षाम् ।

(४) ख ग पुस्तकद्वये—गङ्गाया जलदिग्धोऽयम् ।

(५) ख पुस्तके—सर्व्वमेव । (६) ग पुस्तके—हृता यथा ।

भविष्यपुराणे—

प्रवेशमात्रे गङ्गायां स्नानार्थं भक्तितो नृणाम् ।
ब्रह्महत्यादयो दोषा हाहेत्युक्त्वा प्रयान्त्यलम् ॥

ब्रह्माण्डपुराणे—

गङ्गातीरे वसेन्नित्यं गङ्गातोयं पिबेत्सदा ॥

---

## अथ गङ्गासेवनफलम् ।

तत्र स्कन्दपुराणे—

स एव देवैर्मर्त्त्यैश्च पूजनीयो महर्षिभिः ।
यो वै गङ्गां समाश्रित्य सुखं तिष्ठति निर्भयः ॥

तथा—

तिष्ठेदवाक्शिरा यस्तु वर्षाणामयुतं नरः ।
यः सेवते मासमेकं गङ्गां स तु विशिष्यते ॥

नारदीये—

किमष्टाङ्गेन योगेन किं तपोभिः किमध्वरैः ।
वास एव हि गङ्गायां ब्रह्मज्ञानस्य कारणम् ॥

ब्राह्मे—

तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः पुमान् ।
मासमेकन्तु गङ्गायां समौ स्यातां न वा समौ ॥

ब्रह्माण्डे—

किं यज्ञैर्बहुवित्ताढ्यैः किं तपोभिश्च तापनैः।

स्वर्ग-मोक्षप्रदा गङ्गा सुखसेव्या यतः स्थिता॥

यज्ञैर्यमैश्च नियमैर्दानैः संन्यासतोऽपि वा।

न तत्फलमवाप्नोति गङ्गां प्राप्य यदाप्नुयात्॥

प्रभासे गोसहस्रेण राहुग्रस्ते दिवाकरे।

यत्फलं लभते मर्त्त्यो गङ्गायां तद्दिने दिने॥

अन्योपायांस्तु यस्त्यक्त्वा मोक्षकामः सुनिश्चितः।

गङ्गातीरे सुखं तिष्ठेत् स वै मोक्षस्य भाजनम्॥

वाराणस्यां विशेषेण गङ्गा सद्यस्तु मोक्षदा॥

प्रतिमासं चतुर्द्दश्यामष्टम्याञ्चैव सर्व्वदा।

पक्षयोरुभयोश्चैव सर्व्वपर्व्वसु सर्व्वदा॥

गङ्गातीरनिवासश्च यावज्जीवप्रतिज्ञया॥

यस्य सिध्यति धर्म्मात्मा स देवो नाऽत्र संशयः।

भविष्ये—

[1]कृच्छ्रादिनियमान् कृत्वा नरो यत्फलमश्नुते॥

सदा चान्द्रायणञ्चैव तल्लभेज्जाह्नवीतटे॥

गङ्गासेवापरस्येह दिवसार्द्धेन यत्फलम्।

न तच्छक्यं समत्वेन [2]प्राप्तुं क्रतुशतैरपि॥

सर्व्वयज्ञ-तपो-दान-योग-स्वाध्यायकर्म्मभिः।

यत्फलं तल्लभेद्भक्त्या गङ्गातीरे निवासतः॥

(१) ग पुस्तके—कृच्छ्राऽतिकृच्छ्राणि सदा। (२) क ख पुस्तकद्वये—वक्तुम्।

सत्यवादिषु यत्पुण्यं नैष्ठिकब्रह्मचारिणाम् ।
यदग्निहोत्रिणां पुण्यं तत्तु गङ्गानिवासतः ॥

---

## अथ गङ्गाभक्तिफलम् ।

तत्र ब्राह्मे—

स्वमातृ-पितृ-दाराणां कुलकोटीमनन्त(कं)रम् ।
गङ्गाभक्त(क्ति)स्तारयते संसारार्णवतो ध्रुवम् ॥
सन्तोषः परमैश्वर्य्यं तत्त्वज्ञानं सुखात्मना ।
विनयाचारसम्पत्तिर्गङ्गाभक्तस्य जायते ॥
कृतकृत्यो भवेन्मर्त्यो गङ्गां प्राप्यैव केवलम् ।
तद्भक्तस्तत्परश्च स्यात् मुक्त एव न संशयः ॥
भक्त्या तज्जलपक्काशी तज्जलं सेवते च यः ।
अनायासेन हि नरो मोक्षोपायं स विन्दति ॥
दीक्षितः सर्व्वयज्ञेषु सोमपानं दिने दिने ॥
सर्व्वाणि येषां गाङ्गेयैस्तोयैः कृत्यानि देहिनाम् ।
देहं त्यक्त्वा नराः शैवे पदे तिष्ठन्ति सर्व्वदा ।

स्कान्दपुराणे—

तिष्ठेद्युगसहस्रन्तु पादेनैकेन यः सदा ।
यः संश्रयेद्यथेष्टन्तु गङ्गाम्भः स विशिष्यते ॥

महाभारते—

देवाः सोमार्कसंस्थानि यथा [1]मन्त्रादिभिर्मुखैः ।
अमृतान्युपभुञ्जन्ति तथा गङ्गाजलं नराः ॥

---

(१) ग पुस्तके—सत्रादिभिर्मखैः ।

## अथ गङ्गातोयपानफलम् ।

तत्र भविष्यपुराणे—

कन्यादानैस्तथाऽन्यत्र भूमिदानैश्च भक्तितः ।
अन्नदानैश्च गोदानैः स्वर्णदानादिभिस्तथा ॥
रथाऽश्व-गजदानैश्च यत्पुण्यं परिकीर्त्तितम् ।
ततः शतगुणं पुण्यं गङ्गागण्डूषतो भवेत् ॥
चान्द्रायणसहस्राणां यत् फलं परिकीर्त्तितम् ।
ततोऽधिकफलं गङ्गातोयपानादवाप्यते ॥

स्कान्दपुराणे—

गण्डूषमात्रपानेन अश्वमेधफलं लभेत् ।
स्वच्छन्दं यः पिबेदम्भस्तस्य शक्तिः करे स्थिता ॥

तथा—

त्रिभिः सारस्वतं तोयं सप्तभिस्त्वथ यामुनम् ।
नार्म्मदं दशभिर्म्मासैर्गाङ्गं वर्षेण जीर्य्यति ।
[1]नाभ्यन्तर्गततोयानां मृतानां क्वापि देहिनाम् ।
तत्तत्तीर्थफलावाप्तिर्नाऽत्र कार्य्या विचारणा ॥

तथा—

चान्द्रायणसहस्रन्तु यश्चरेत् कायशोधनम् ।
यः पिबेत् तद् यथेष्टन्तु गङ्गाम्भः स विशिष्यते ॥

भविष्ये—

गङ्गां पश्यति संस्तौति स्नाति भक्त्या पिबेज्जलम् ।
स स्वर्गं ज्ञानममलं योगं मोक्षञ्च विन्दति ॥

---

(१) ख पुस्तके—अभ्यन्तर्गत—।

महाभारते—

यस्तु सूर्य्यांशुनिष्टप्तं गाङ्गेयं पिबते जलम्।
गवां निर्हारनिर्म्मुक्ताद्यावकात्तद्विशिष्यते॥

निर्हारो मैलम्। यावकः—[1]खिन्नयवः।

अयमत्र प्रयोगः।

ॐ अद्य बहुकन्या-भूम्यन्न-गो-सुवर्ण-रथाश्व-गजदानजन्य पुण्य-शतगुणपुण्यप्राप्तिकामो गण्डूषमितगङ्गाजलपानमहं करिष्ये।

ॐ अद्य मोक्षकामः स्वच्छन्दं गङ्गाजलपानमहं करिष्ये।

ॐ अद्य गोनिर्हारनिर्म्मुक्तयवयावकप्राशनजन्य शुद्ध्यधिकशुद्धि-प्राप्तिकामः [2]सूर्य्यनिष्ठप्तगङ्गाजलपानमहं करिष्ये।

---

## अथ दर्शनम्।

तत्र महाभारते—

भवन्ति निर्व्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात्।
गङ्गाया दर्शनात्तद्वत् सर्व्वपापैः प्रमुच्यते॥
वाङ्मनः-कर्म्मजैर्ग्रस्तः पापैरपि पुमानिह।
वीक्ष्य गङ्गां भवेत् पूतस्तत्र मे नास्ति संशयः॥
सप्ताऽवरान् सप्तपरान् पितॄंस्तेभ्यश्च येऽपरे।
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च॥
दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्त्तनात्।
[3]पुण्यं पुनाति पुरुषान् शतशोऽथ सहस्रशः॥

---

(१) ग पुस्तके—स्निग्ध-। (२) ग पुस्तके—सूर्य्यांशु—।
(३) ग—पुण्यान्।

ब्रह्माण्डे—

ज्ञानमैश्वर्य्यमायुश्च प्रतिष्ठा सर्व्वमान्यता ।
शुभानामाश्रयत्वञ्च गङ्गादर्शनजलं फलम् ॥
सर्व्वेन्द्रियाणां चापल्यं व्यसनासक्ति[1]राशु वै ।
निर्घृणत्वं नृणां गङ्गा-दर्शनादेव नश्यति ॥
परहिंसा च कौटिल्यं परदोषाद्यवेक्षणम् ।
दाम्भिकानां नृणां गङ्गा-दर्शनादेव नश्यति ॥

पाद्मे—

मुहुर्मुहुस्तथा पश्येत् स्पृशेद्वापि मुहुर्मुहुः ।
भक्त्या यदिच्छति नरः शाश्वतञ्चामृतं पदम् ॥

भविष्ये—

वापीकूपतड़ागादि-प्रपासत्रादिभिस्तथा ।
अन्यत्र यद्भवेत् पुण्यं तद्गङ्गादर्शनाद्भवेत् ॥

तथा—

यत् फलं जायते पुंसां दर्शने परमात्मनः ।
तद्भवेदेव गङ्गाया दर्शने भक्तिभावतः ॥

तथा—

नैमिषे च कुरुक्षेत्रे नर्म्मदायाञ्च पुष्करे ।
स्नानात् संसेवनाच्चापि यत्फलं लभते नरः ।
गङ्गाया दर्शनादेव कलौ प्राहुर्महर्षयः ॥

---

(१) क ख पुस्तकद्वये—वाग्भवम् ।

अयमत्रप्रयोगः—

ॐ अद्य सर्व्वपापक्षयकामो गङ्गादर्शनमहं करिष्ये ।

ॐ अद्य वाङ्मनः कर्म्मजबहुपापक्षयकामो वा । एकविंशति-पुरुषतारणकामो वा । स्पर्शने अवगाहने च इदं फलम् ।

स्वीयशतसंख्यपुरुषपापक्षयकामो वा । स्पर्शने कीर्त्तनेऽपीदं फलम् ।

ज्ञानैश्वर्य्यायुः-प्रतिष्ठा-सर्व्वमान्यता-शुभाश्रयत्वकामो वा । वापी-कूप-तड़ाग-प्रपा-सत्रादिजन्यफल-प्राप्तिकामो वा । नैमिष-पुष्कर-कुरुक्षेत्र-नर्म्मदा स्नानसेवनजन्यफल-प्राप्तिकामो वा ।

ॐ अद्य परमात्मदर्शनजन्यफल-समफलप्राप्तिकामो वा भक्त्या गङ्गादर्शनमहं करिष्ये ।

---

## अथ गङ्गास्मरणम् ।

तत्र ब्रह्मपुराणे—

अशुभैः कर्म्मभिर्युक्तान् मज्जमानान् भवार्णवे ।
पततो नरके गङ्गा संस्मृता हरते सदा ॥

मात्स्ये—

योजनानां सहस्रेषु गङ्गां स्मरति यो नरः ।
अपि दुष्कृतकर्म्माऽपि लभते परमां गतिम् ॥

भविष्ये—

स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम् ।
भेदं सहस्रधा याति गिरिर्वज्रहतो यथा ॥

तथा—

गच्छंस्तिष्ठन् स्वपन् ध्यायन् जाग्रद्भुञ्जन् श्वसन् वदन् ।
यः स्मरेत् सततं गङ्गां स च मुच्येत बन्धनात् ॥
सहस्रयोजनस्थाश्च गङ्गां भक्त्या स्मरन्ति ये ।
तेऽप्यशेषैर्महापापैर्मुच्यन्ते नाऽत्र संशयः ॥
भवनानि विचित्राणि विचित्राभरणाः स्त्रियः ।
आरोग्यं वित्तसम्पत्तिर्गङ्गास्मरणजं फलम् ॥
[1]यैः पुण्यवाहिनी गङ्गा सकृद्भक्त्याऽवगाहिता ।
तेषां कुलानां लक्षन्तु भवात्तारयते शिवा ॥

ब्रह्माण्डे—

मनसा संस्मरेद् यस्तु गङ्गां दूरस्थितो नरः ।
चान्द्रायणसहस्रन्तु लभते नाऽत्र संशयः ॥

अयमत्र प्रयोगः ।

ॐ अद्य नरकपाताभावकामो गङ्गास्मरणमहं करिष्ये—
परमगतिप्राप्तिकामो वा पापसङ्घातभेदकामो वा—
ॐ अद्याशेषमहापापविमुक्तिकामो वा ।
विचित्रबहुभवन-विचित्राभरण बहुस्त्र्यारोग्य वित्तसम्पत्तिकामो
वा—चान्द्रायणसहस्रजन्यफलप्राप्तिकामो वा ।
ॐ अद्य पातकविमुक्तिकामो वा भक्त्या गङ्गास्मरणमहं करिष्ये।
भक्त्या गङ्गा गङ्गेत्यभिधानेऽप्येतदेव फलम् ।
जागरे बहुधा गङ्गास्मरणे च विमुक्तिः [2]फलम् ॥

---

(१) क ख पुस्तकद्वये—अधिकमिदं पद्यम् । (२) ग पुस्तके—बन्धमुक्तिः ।

## अथ कीर्त्तनम् ।

तत्र विष्णुपुराणे—

गङ्गा गङ्गेति यन्नाम योजनानां शतैरपि ।
स्थितैरुच्चारितं हन्ति पापं जन्मत्रयाऽर्ज्जितम् ॥

गङ्गां प्रक्रम्य-मात्स्ये—

कीर्त्तनान्मुच्यते पापात् दृष्ट्वा भद्राणि पश्यति ।
अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ।

ब्रह्माण्डे—

[1]सप्तावरान् सप्त परान् सप्ताऽथ परतः परान् ।
गङ्गा तारयते पुंसां प्रसङ्गेणापि कीर्त्तिता ॥
अनिच्छयाऽपि गङ्गाया योऽसौ नामानुकीर्त्तनम् ।
करोति पुण्यवाहिन्याः सोऽपि स्वर्गस्य भाजनम् ॥

नारदीये—

सर्व्वावस्थां गतो वाऽपि सर्व्वधर्म्मविवर्ज्जितः ।
गङ्गायाः कीर्त्तनेनापि शुभां गतिमवाप्नुयात् ॥

अयमत्रप्रयोगः ।

ॐ अद्य जन्मत्रयार्ज्जितपापक्षयकामो गङ्गा-गङ्गेति कीर्त्तनमहं करिष्ये ।

एकविंशतिपुरुषतारणकामो वा । स्वर्गभागित्वकामो वा । शुभगतिप्राप्तिकामो वा ।

---

(१) ग पुस्तके—सप्तावरान् सप्ताऽथ परतः परतः परान् ।

## स्पर्शनम्।

तत्र गङ्गाऽधिकारे वाराहे—

ब्रह्महा गुरुहा गोघ्नः स्पृष्टो वा सर्व्वपातकैः।
तस्यास्तोयैर्नरः स्पृष्टः सर्व्वपापैः प्रमुच्यते॥

ॐ अद्य महापातकादिसकलपापक्षयकामो गङ्गास्पर्शनमहं करिष्ये।

---

## अथाऽभिलाषः।

तत्र भविष्ये—

कदा वक्ष्यामि[1] तां गङ्गां कदा स्नानं लभेमहि।
इति पुंसाऽभिलषिता कुलानां तारयेच्छतम्॥

ॐ अद्य कुलशततारणकामो गङ्गाभिलाषमहं करिष्ये।

---

## अथ स्नानम्।

तत्र विष्णुपुराणे—

स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति।
अपूर्व्वपुण्यप्राप्तिश्च[2] सद्यो मैत्रेय जायते॥

भारते—

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम्।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि॥

---

(१) ख—पुस्तके द्रक्ष्यामि। (२) ख पुस्तके पुण्यावाप्तिश्च।

प्रयतः—एकादशेन्द्रियसंयतः । व्युष्टिः पुण्योपचयः ।

तथा—

अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहत्य पाप्मानं भाति गङ्गाजलोच्चितः ॥

ब्रह्माण्डे—

एकेन स्नानमात्रेण विधिना भक्तिमान्नरः ।
अश्वमेधफलं सद्यो गङ्गायां प्राप्नुयाद्ध्रुवम् ॥

तथा—

अनेकजन्मसम्भूतं पुंसां पापं प्रणश्यति ।
स्नानमात्रेण गङ्गायां सद्यः स्यात् पुण्यभाजनम् ॥

तथा—

अन्यस्थानगतं पापं गङ्गातीरे विनश्यति ।
गङ्गातीरकृतं पापं गङ्गास्नानेन नश्यति ॥

तथा—

रात्रौ दिवा च सन्ध्यायां गङ्गायान्तु प्रयत्नतः ।
स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥
सर्व्वतीर्थेषु यत्पुण्यं सर्व्वेष्वायतनेषु च ।
तत्फलं लभते सर्व्वं गङ्गास्नानान्न संशयः ॥

अत्र योगसिद्धिन्यायादन्यतमफलकामना अधिकारिविशेषणमिति द्रष्टव्यम् ।

महापातकसंयुक्तो युक्तो वा सर्व्वपातकैः ।
गङ्गास्नानेन विधिना मुच्यते सर्व्वपातकैः ॥

गङ्गास्नानात् परं स्नानं न भूतं न भविष्यति ।

महापातकं जन्मान्तरीयं न त्वैहिकम् । अन्यथाऽनधिकारापत्तेः ।

विशेषतः कलियुगे पापं हरति जाह्नवी ।

तथा—

निहत्य कामजान् दोषान् काय-वाक्-चित्तसम्भवान् ।
समा-स्नानेन भक्त्या तु मोदते दिवि देववत् ॥

समा वर्षम् ।

षण्मासं स्नाति गङ्गायां नैरन्तर्य्येण यो नरः ।
समस्तपापनिर्म्मुक्तः समस्तकुलसंयुतः ॥
समस्तभोगसंयुक्तो विष्णुलोके महीयते ।
परार्द्धद्वितयं यावन्नाऽत्र कार्य्या विचारणा ॥

तथा—

गङ्गायां स्नाति यो मर्त्त्यो यावज्जीवन्तु नित्यशः ।
जीवन्मुक्तः स चाऽत्रैव देहान्ते मुक्त एव सः ॥

तथा—

प्रातःस्नानाद्दशगुणं पुण्यं मध्यन्दिने तथा ।
सायंकाले शतगुणमनन्तं शिवसन्निधौ ।

भविष्ये—

कपिलाकोटिदानात्तु गङ्गास्नानं विशिष्यते ।

मात्स्ये—

कुरुक्षेत्रसमा गङ्गा यत्र तत्राऽवगाहिता ।

आग्नेये सूर्य्यवाक्यम्—

ये मदीयांशुसन्तप्ते जले स्नानादिकां क्रियाम् ।
करिष्यन्तीह यास्यन्ति भित्वा ते मम मण्डलम् ॥

तथा—

यो गृहे वर्त्तमानोऽपि त्वां स्नाने कीर्त्तयिष्यति ।
स यास्यति दिवं नित्यमित्याह वरुणश्च ताम् ॥

---

## अथैतत्प्रयोगः ।

ॐ अद्य सद्यः पापप्रणाश-सद्योऽपूर्व्वपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

कुरुक्षेत्रस्नानजन्यफल-समफलप्राप्तिकामो वा । प्रयतस्य तु क्रतुशतजन्यव्युष्ट्यतिशयितव्युष्टिकामो वा । पापविघातपूर्व्वक-भासमानत्वकामो वा ।

ॐ अद्याश्वमेधफलप्राप्तिकामो भक्त्या वैध-गङ्गास्नानमहं करिष्ये ।

रात्रौ सन्ध्यायां तथोद्धृतगङ्गाजलेन गृहेऽपि स्नाने अश्व-मेधफलमेव ।

सर्व्वतीर्थ–सर्व्वायतनजन्य–पुण्याऽन्यतम–पुण्यप्राप्तिकामो वा गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य सर्व्वपातकविमुक्तिकामो विधिना गङ्गास्नानमहं करिष्ये । गङ्गातीरकृत-पापनाशकामो वा ।

कपिलाकोटिदानजन्यफलाधिकफलप्राप्तिकामो वा।

ॐ अद्य सूर्य्यमण्डलभेदपूर्व्वक गमनकामः सूर्य्यांशुसन्तप्तगङ्गा-जलस्नानमहं करिष्ये।

ॐ समस्तपापविनिर्म्मुक्त-समस्त-कुलसंयुक्त-समस्तभोगसंयुक्ता-त्मीयपरार्द्धद्वितयावच्छिन्नविष्णुलोकमहितत्वकामो अद्यादि-षण्मा-सान् गङ्गायां स्नानमहं करिष्ये।

ॐ कायवाक्-चित्तसम्भवकामजदोषनिहननपूर्व्वकस्वर्गलोका-धिकरणकदेववन्मोदमानत्वकामोऽद्यादि भक्त्या वर्षं गङ्गायां स्नान-महं करिष्ये।

ॐ अद्य प्रातःकालीन गङ्गास्नानजन्यफल-दशगुणफलप्राप्ति कामो मध्याह्ने गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य प्रातःकालीन गङ्गास्नानजन्यशतगुणफलप्राप्तिकामः सायंकाले गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य गङ्गास्नानजन्यानन्तफलकामः शिवसन्निधौ गङ्गा-स्नानमहं करिष्ये।

ॐ ऐहिकजीवन्मुक्तत्व-देहान्तकालिकमुक्तत्वकामो अद्यादि यावज्जीवं गङ्गायां स्नानमहं करिष्ये।

---

## अथ कालविशेषे स्नानम्।

तत्र ब्रह्माण्डपुराणे—

नैरन्तर्य्येण गङ्गायां माघे[1] यः स्नाति मानवः।
स शक्रलोकेषु चिरं कालं स्थित्वा सगोत्रजः।
ततो ब्रह्मपुरे तिष्ठेत् कल्पकोटिशतायुतम्॥

अत्र च सौरमासपरिग्रहः शिष्टाचारात्।

भविष्ये—

नैरन्तर्य्येण विधिना गङ्गायां स्नाति यो नरः।
षण्मासमेकस्त्वपरः सकृदेवोत्तरायणे॥
तयोः समं भवेत् पुण्यं विषुवेषु तथैव च।
संक्रान्तिषु च सर्व्वासु चातुर्म्मास्यफलं लभेत्॥
एतदेव भवेत् पुण्यं माघ-कार्त्तिकमासयोः।
संवत्सरफलन्तु स्यात् नवम्यां कार्त्तिके तथा॥

इयञ्च शुक्ला प्राथम्यात्।

मन्वादौ च युगादौ च मासत्रयफलं लभेत्।
द्वादश्यां श्रवणर्क्षे च अष्टम्यां पुष्ययोगतः॥
आर्द्रायाञ्च चतुर्द्दश्यां गङ्गास्नानं सुदुर्लभम्।
वैशाखे वै पौर्णमास्यां माघे वै कार्त्तिके तथा॥
तथा माघी त्वमावास्या गङ्गायामतिदुर्लभा।
कृष्णाष्टम्यां सहस्रन्तु शतं स्यात् सर्व्वपर्व्वसु।
अष्टमी चेयं माघस्य तत्सन्दंशात्॥

---

(१) ग पुस्तके—मासम्।

तत्रापि कृष्णा शिष्टपरिग्रहात्। तत्रैव—

अमावस्यां शतगुणं सहस्रन्तु दिनक्षये।

सोम-सूर्य्यग्रहे लक्षं व्यतीपाते त्वनन्तकम्॥

सूर्य्याचन्द्रमसोः संक्रान्तिसाम्यं व्यतीपात इति कल्पतरुः।

मासत्रयफलन्तु स्यात् फाल्गुनाषाढ़मासयोः।

जन्मर्क्षे तु कृते स्नाने गङ्गायां भक्तिभावतः।

जन्मप्रभृतिपापौघं सञ्चितं नश्यति क्षणात्॥

तथा भविष्ये—

चतुर्द्दश्यां यदा योगो व्यतीपातेन चार्द्रया।

तदा पुण्यतमः कालो देवानामपि दुर्लभः॥

तदा यः स्नाति गङ्गायां भक्त्या तत्फलमाप्नुयात्।

यत्र तत्र विपन्नोऽपि गङ्गामरणजन्तु तत्॥

कृष्णाष्टम्यां यदार्द्रा स्याद्[1] व्यतीपातश्च वै तदा।

गङ्गायां दुर्लभं स्नानं स योगो ह्यतिदुर्लभः॥

यो माघे दैवयोगेन सदा स्नानं विधानवित्।

लभते दैवयोगेन जातिं स्मरति पौर्व्विकीम्॥

सर्व्वयज्ञ-तपो-दान-फलमाप्नोति तत्क्षणात्।

सर्व्वशास्त्रार्थविज्ञातो ह्यरोगश्च तदा भवेत्॥

तथा—

संक्रान्त्यां पक्षयोरन्ते ग्रहणे चन्द्र-सूर्य्ययोः।

[2]गङ्गास्नातो नरः कामाद्ब्रह्मणः सदनं व्रजेत्॥

---

(१) ग पुस्तके—यदा चार्द्रा। (२) ख पुस्तके—गङ्गां स्नातः।

ब्रह्माण्डे—

चन्द्र-सूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम् ॥

स्मृतिः—

इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतम् ।
गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥

तथा स्कान्दे—

गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे ॥
दिवाकरे पुनस्तद्वत् शतसंख्यमुदाहृतम् ।
वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी ॥
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा ।

शङ्खः—

वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः ॥
ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्याम्
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्त्यलोकम् ।
पापान्यस्यां हरति च तिथौ सा दशेत्याहुरार्य्याः
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥

ब्रह्माण्डे—

संक्रान्तिषु व्यतीपाते ग्रहणे चन्द्र-सूर्य्ययोः ।
पुष्ये स्नात्वा तु गङ्गायां कुलकोटीः समुद्धरेत् ॥

व्यतीपातः सूर्य्याचन्द्रमसोः क्रान्तिसाम्यमिति कल्पतरुः ॥

श्रवणाश्विधनिष्ठार्द्राश्लेषामृगशिरोऽन्यतमयुता रविवारामावास्या इति तु केचित्—

तदाह वृहन्मनुः—

श्रवणाश्वि-धनिष्ठार्द्रा नागदैवत मस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

यमः—

वैशाखशुक्लपक्षे तु तृतीयायां विशेषतः[1] ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः ॥

पद्मपुराणे—

महापातकसंज्ञानि यानि पापानि सन्ति मे ।
गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि ॥

गोविन्दद्वादशी—फाल्गुनशुक्लद्वादशी ।

ब्रह्माण्डे—

प्रतिमासे चतुर्द्दश्यामष्टम्याञ्चैव सर्व्वदा ।
पक्षयोरुभयोश्चैव सर्व्वपर्व्वसु जाह्नवीम् ॥
भागीरथीं विशेषेण [2]तीर्थान्यायतनानि च ।
समायान्ति विशेषेण सर्व्वपापहराणि च ॥
आत्मनो जन्मनक्षत्रे गङ्गातोयेषु भक्तितः ।
नरः स्नात्वा तु गङ्गायां कुलं सर्व्वं समुद्धरेत् ॥

---

(१) मूल पुस्तके—तिथौ सकृत् ।

(२) क घ पुस्तकद्वये—तथाऽन्यायतनानि च ।

तथा—

माससंज्ञेन ऋक्षेण[1] चन्द्रः सम्पूर्णमण्डलः ।
गुरुणा याति संयोगं तन्महत्त्वं तिथेः स्मृतम् ॥
महाज्यैष्ठी सुरश्रेष्ठ ज्ञताऽनन्तफला स्मृता ।
तस्यान्तु जाह्नवीस्नानं सूर्य्यग्रहशताधिकम्[2] ॥

स्मृतिः—

अरुणोदयवेलायां शुक्ला माघस्य सप्तमी ।
गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समाः ॥

अत्रैतद्वाक्ययोः सूर्य्यग्रहणफलं स्नानजमेव । स्नानमपि च गाङ्गमेव सन्निहिते बुद्धिरन्तरङ्गेति न्यायात् ।

तेन सूर्य्यग्रहणकालीनगङ्गास्नानस्यैव फलमिह शतगुणादि-रूपं भवतीत्यर्थः ।

अथायमत्रप्रयोगः--

ॐ शक्रलोकाधिकरणक-गोत्रजसहित सुचिरकालस्थिति-पूर्व्वककल्पकोटिशतायुतावच्छिन्नब्रह्मपुरवासकामोऽद्यादि माघे गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्योत्तरायणरविसंक्रान्तौ वैधनिरन्तरषण्मासावच्छिन्न-गङ्गास्नानजन्यपुण्य-समपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये । विषुवयोरप्येवम् ।

---

(१) घ पुस्तके—संज्ञे यदा ऋक्षे ।

(२) ख पुस्तके—सूर्य्यग्रहणभाविकम् ।

दक्षिणायन-विष्णुपदी-षड़शीतिषु नवसु ॐ अद्यामुकसंक्रान्तौ वैधनिरन्तरमासचतुष्टयावच्छिन्नगङ्गास्नानजन्यफल-समफलप्राप्ति-कामो गङ्गायां स्नानमहं करिष्ये ।

समस्तमाघस्नाने समस्तकार्त्तिकस्नानेऽप्येवम् ।

अक्षयनवम्यां—ॐ अद्य कार्त्तिकनवम्यां वैधनिरन्तरसंवत्सरा-वच्छिन्न गङ्गास्नानजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नान-महं करिष्ये ।

ॐ अद्य मन्वादौ वैध निरन्तरमासत्रयावच्छिन्नगङ्गास्नान जन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

युगादिष्वप्येवम् ।

श्रवणयुतद्वादश्यां, पुष्ययुताष्टम्यां, वैशाख्यां, माघ्यां, कार्त्तिक्यां माघामावस्यायाञ्च गङ्गास्नानमतिदुर्लभम् ।

अतिदुर्लभत्वन्तु सहस्रगुणाधिकत्वम् । कालान्तरे सहस्रगुण-मेतेष्वतिदुर्लभमित्यभिधानेन तथैव प्रतीतेः ।

तथाच—

ॐ अद्य श्रवणयुक्तद्वादश्यां गङ्गास्नानजन्यफलसहस्रगुणाधिक-फलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

एवमेवाष्टम्यादिषु षट्स्वपि द्रष्टव्यम् ।

ॐ अद्य माघकृष्णाष्टम्यां गङ्गास्नानजन्यफल-सहस्रगुणफल-प्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य पर्व्वणि गङ्गास्नानजन्यफल-शतगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य दिनक्षये गङ्गास्नानजन्यफल-सहस्रगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य सूर्य्यग्रहे गङ्गास्नानजन्यफल-लक्षगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

सोमग्रहेऽप्येवम् ।

[1][ॐ अद्य व्यतीपाते अनन्तगङ्गास्नानजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये । ]

ॐ वैधनिरन्तरमासत्रयावच्छिन्नगङ्गास्नानजन्यफलप्राप्तिकामो अद्यादि फाल्गुनं गङ्गास्नानमहं करिष्ये ।

आषाढ़ेऽप्येवम् ।

ॐ अद्य जन्मप्रभृतिसञ्चितपापौघनाशकामो गङ्गायां स्नानमहं करिष्ये । सर्व्वकुलसमुद्धरणकामो वा ।

ॐ अद्य व्यतीपातार्द्रायुतायां चतुर्द्दश्यां गङ्गामरणजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य माघे कृष्णाष्टम्याम् आर्द्राव्यतीपातयुक्तायां जातिस्मरत्व-सर्व्वयज्ञ-तपो-दानजन्यफल-समफलप्राप्ति-सर्व्वशास्त्रविदरोगित्वकामो गङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य संक्रान्त्यां(न्तौ) ब्रह्मसदनगमनकामो गङ्गायां स्नानमहं करिष्ये । एवमेवामावास्यायां, पौर्णमास्यां चन्द्रग्रहे, सूर्य्यग्रहे च फलम् । अद्य सूर्य्यग्रहे सर्व्वतीर्थस्नानजन्यफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये । चन्द्रग्रहेऽप्येवम् ।

(१) ख पुस्तके—[ ] चिह्नितांशः पतितः ।

ॐ अद्य राहुग्रस्ते दिवाकरे दशकोटिगुणगङ्गास्नानजन्य-फल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

ॐ अस्यां रात्रौ राहुग्रस्ते निशाकरे सम्यग्दत्त गोकोटि-सहस्रजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य राहुग्रस्ते दिवाकरे सम्यग्दत्तगोकोटिसहस्रजन्य फल-शतगुणफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये!

ॐ अद्य चैत्रकृष्णत्रयोदश्यां वारुणनक्षत्रयुतायां शतसूर्य्य-ग्रहणकालीनगङ्गास्नानजन्यफल-समफलप्राप्तिकामो गङ्गायां स्नान-महं करिष्ये।

ॐ अद्य वैशाखशुक्लतृतीयायां सर्व्वकिल्विषविमुक्तिकामो गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य ज्यैष्ठशुक्लदशम्यां क्षितिसुतहस्तनक्षत्रयुतायां दशविध-पापनाश--वाजिमेधायुतजन्यपुण्य-शतगुणपुण्यप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य संक्रान्त्यां(न्तौ) बहुकुलकोटिसमुद्धरणकामो गङ्गायां स्नानमहं करिष्ये।

एवमेव व्यतीपात-पुष्य-चन्द्रग्रह-सूर्य्यग्रहेष्वपि वाक्यम्।

ॐ अद्य महाज्यैष्ठ्यां शतसूर्य्यग्रहणकालीनगङ्गास्नानजन्य-फलाधिकफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य माघशुक्लसप्तम्यां सूर्य्यग्रहकालीनशतगङ्गास्नानजन्य-फल-समफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये।

---

## अथ देशविशेषे स्नानम्।

तत्र पद्मपुराणे--

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता।
कुरुक्षेत्राद्दशगुणा यत्र विन्ध्येन सङ्गता॥
विन्ध्याच्छतगुणा प्रोक्ता का(शि)शीपुर्य्यान्तु जाह्नवी।

विन्ध्यसङ्गमश्च कर्णतीर्थादौ।

तथा—

सर्व्वत्र[1] सुलभा गङ्गा त्रिषु स्थानेषु दुर्ल्लभा।
गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे॥
तेषु स्नाता[2] दिवं यान्ति ये मृतास्तेऽपुनर्भवाः।

मात्स्ये—

कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता।
कुरुक्षेत्राद्दशगुणा यत्र विन्ध्येन सङ्गता॥
ततः शतगुणा प्रोक्ता यत्र पश्चिमवाहिनी।
[3]तस्मात् सहस्रगुणिता यत्र चोत्तरवाहिनी॥
[4]तस्मात् सहस्रगुणिता यत्र चोभयवाहिनी।

भविष्ये—

गङ्गाद्वारे कुशावर्त्ते स्नाने पुण्यफलं शृणु।
सप्तानां राजसूयानां फलं स्यादश्वमेधयोः॥

---

(१) क ख पुस्तकद्वये—सर्व्वत्र दुर्ल्लभा गङ्गा त्रिषु स्थाने विशेषतः।

(२) ग पुस्तके—स्नात्वा। (३) ख पुस्तके—पद्यमिदं नास्ति।

(४) ग पुस्तके—पद्यमिदमधिकम्।

उषित्वा तत्र मासार्द्धं षस्वां विश्वजितां फलम्।
दशायुतगवां दानपुण्यञ्च लभते नरः॥
सुरोत्तमञ्च गोविन्दं रुद्रं कणखले स्थितम्।
स्नात्वा वाप्य च गङ्गायां पुण्यमक्षयमाप्नुयात्॥

महाभारते—

तीर्थञ्च शौकरं नाम महापुण्यं मुने शृणु।
यस्मिन्नाविरभूत् पूर्व्वं वराहाकृतिरच्युतः॥
शतमग्निचितां पुण्यं ज्योतिष्टोमद्वयस्य च।
अग्निष्टोमसहस्रस्य फलमत्राप्नुयान्नरः॥
तत्रैव ब्रह्मणस्तीर्थं ज्योतिष्टोमायुतस्य च।
अश्वमेधत्रयस्यापि स्नातस्तत्र फलं लभेत्॥

तथा—

कुशाख्यं तीर्थमनघं यत्र च व्याधयोऽखिलाः।
नश्यन्ति सर्व्वजन्मोत्थं स्यान्नष्टं पातकं नृणाम्॥
अथाहुः कापिलं तीर्थं कपिला धेनवोऽन्वहम्।
दत्त्वा धेनायुतान्यष्टौ स्नात्वा तुल्य[1] फलं लभेत्॥
गङ्गाद्वारे कुशावर्त्ते विल्वके नीलपर्व्वते।
तीर्थे कणखले स्नात्वा धूतपापो दिवं व्रजेत्॥

काशीमभिधाय तथैव।

पवित्राख्यं ततस्तीर्थं सर्व्वतीर्थात् पवित्रकम्।
द्वयोर्व्विश्वजितोस्तत्र स्नानात् पुण्यं लभेन्नरः॥

---

(१) क ख पुस्तकद्वये—तस्य।

वेणीवाह्वं ततस्तीर्थं सरयूर्यत्र गङ्गया ।
सुपुण्यया महापुण्या स्वसा स्वस्रेव सङ्गता ॥
हरेर्दक्षिणपादाब्जक्षालनादमरापगा ।
वामपादोदकं विद्धि सरयूं मानसोद्भवाम् ॥
तीर्थं तत्रार्चयन्रुद्रं विष्णुं विष्णुत्वमाप्तवान् ।
पञ्चाश्वमेधफलदं स्नानं तस्मिन्नघापहम् ॥

वेणीवाह्वं दर्द्दरीति प्रसिद्धम् ॥

ततस्तु गाण्डकं तीर्थं गण्डकी यत्र सङ्गता ।
गोसहस्रस्य दानञ्च तत्र स्नानेन सम्मितम् ॥
[1]रामतीर्थं ततः पुण्यं वैकुण्ठो यत्र सन्निधौ ॥
सोमतीर्थं ततः पुण्यं यत्रासौ मुद्गलो मुनिः ।
समभ्यर्च्य शिवं ध्यायन् गणतान्तु समाययौ ॥
चम्पकाख्यं पुण्यतीर्थं यत्र गङ्गोत्तरवाहिनी ।
[2]मणिकर्णिकावद्विज्ञेया महापातकनाशिनी ॥
कलसाख्यं ततस्तीर्थं कलसादुत्थितो मुनिः ।
अगस्त्यः पूजयन् यत्र रुद्रं मुनिवरोऽभवत् ॥
सोमद्वीपं महापुण्यं तीर्थं वाराणसीसमम् ।
सोमो यत्रार्चयन्नीशं रुद्रेण शिरसा धृतः ॥
विश्वामित्रस्य भगिनी गङ्गया यत्र सङ्गता ।
तत्राप्लुत्य च त्रिरात्रैः सम्मतस्तु प्रियातिथिः ॥

---

(१) ग पुस्तके नास्ति ।

(२) ग पुस्तके—मणिकर्णिका तु सा ज्ञेया ।

जह्नुह्रदे महातीर्थे स्नानं यत्र शरीरिणाम् ।
एकविंशतिसन्तानतारकं किमतःपरम् ॥

जह्नुह्रद एकशाखानगरे गङ्गायाम् ।

तस्माददितितीर्थञ्च यत्र [1]तप्त्वाऽदितिर्हरिम् ।
कश्यपात्तनयं लेभे तत्र स्नानं महोदयम् ॥
शिलोच्चयं महातीर्थं तत्र तप्त्वा तपः प्रजाः ।
तृणादिभिः सह स्वर्गं यान्ति तीर्थगुणाश्रयात् ॥
इन्द्राणी नाम तीर्थं स्यात् इन्द्राणी यत्र वासवम् ।
तपस्तप्त्वा पतिं लेभे स्नानादत्र प्रयागवत् ॥
पुण्यमाम्रातकं तीर्थं विश्वामित्रस्तपश्चरन् ।
यत्र ब्रह्मर्षितां लेभे क्षत्रियस्तीर्थसेवया ॥
प्रद्युम्नतीर्थं तपसा यत्र स्वेन स्मरो हरेः ।
प्रद्युम्ननामा पुत्रोऽभूत् स्नाने तत्र महोदयः ॥
तद्दक्षिणप्रयागस्तु गङ्गातो यमुना गता ।
स्नानात्तत्राक्षयं पुण्यं प्रयाग इव लभ्यते ॥

दक्षिणप्रयागस्तु मुक्तवेणी सप्तग्राम इति प्रसिद्धः ।

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ।
स्नात्वैव ब्रह्मणो विष्णोः शिवस्य च पुरं व्रजेत् ॥

महाभारते—

गङ्गायास्त्वथ राजेन्द्र सागरस्य च सङ्गमे ।
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥

---

(१) क ख पुस्तकद्वये—यत्र वाप्यादितिर्हरिम् ।

अथायमत्र प्रयोगः—

ॐ अद्य कुरुक्षेत्रस्नानजन्यफल-दशगुणफलप्राप्तिकामो विन्ध्य-सङ्गतगङ्गायां स्नानमहं करिष्ये ।

ॐ अद्य विन्ध्यसङ्गतगङ्गास्नानजन्यफल-शतगुणफलप्राप्तिकामः काश्यां गङ्गायां स्नानमहं करिष्ये ।

पश्चिमवाहिन्यामपि एतदेव फलम् ।

ॐ अद्य पश्चिमवाहिनीगङ्गास्नानजन्यफलसहस्रगुणफलप्राप्ति-काम उत्तरवाहिन्यां गङ्गायां स्नानमहं करिष्ये ।

ॐ राजसूयसप्तकाश्वमेधद्वयजन्यफल-समफलप्राप्तिकामो गङ्गा-द्वारे गङ्गायां स्नानमहं करिष्ये ।

कुशावर्त्तेप्येवम् ।

ॐ अद्याक्षयपुण्यकामः कणखले स्नात्वा तत्रस्थसुरोत्तम-गोविन्द-रुद्रपूजनमहं करिष्ये ।

ॐ अद्याग्निचित्क्रतु-ज्योतिष्टोमद्वयपुण्यसमपुण्याग्निष्टोम-सहस्रजन्यफलसमफलप्राप्तिकामः शौकरतीर्थे गङ्गायां स्नानमहं करिष्ये । अत्रैव ब्रह्मतीर्थस्नाने—

ॐ अद्य ज्योतिष्टोमायुताश्वमेधत्रयजन्यफलसमफलप्राप्ति-कामो ब्रह्मतीर्थे स्नानमहं करिष्ये ।

ॐ अद्याखिलव्याधि-सर्व्वजन्मोत्थपातकनाशकामः कुब्जाख्य-तीर्थे स्नानमहं करिष्ये ।

ॐ अद्य स्वदत्तकपिलधेन्वयुताष्टकजन्यफलसमफलप्राप्तिकामः कपिलतीर्थे स्नानमहं करिष्ये ।

ॐ अद्य धूतपापस्वीयस्वर्लोकगमनकामो गङ्गाद्वारे स्नानमहं करिष्ये।

ॐ एतदेव कुशावर्त्ते विल्वके नीलपर्व्वते कणखले च स्नानफलम्।

ॐ अद्य विश्वजिद्यज्ञजन्यपुण्य-समपुण्यप्राप्तिकामः पवित्राख्यतीर्थे स्नानमहं करिष्ये।

ॐ अद्य पञ्चाश्वमेधयज्ञजन्यफल समफलप्राप्ति-पापनाशन-कामः सरयूसङ्गतगङ्गायां स्नानमहं करिष्ये।

ॐ अद्य गोसहस्रदानजन्यफल-समफलप्राप्तिकामो गण्डकी-सङ्गतगङ्गायां स्नानमहं करिष्ये।

ॐ अद्य महापातकनाशकामः चम्पकाख्यतीर्थे उत्तरवाहिन्यां गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य वृत्रारिसम्मतप्रियातिथित्वकामः कौशिकीसङ्गत-गङ्गायां स्नानमहं करिष्ये।

ॐ अद्य एकविंशतिसन्ततिसन्तारणकामो जह्नुह्रदे स्नानमहं करिष्ये।

ॐ अद्य महोदयकामोऽदितितीर्थे स्नानमहं करिष्ये।

ॐ अद्याक्षयपुण्यप्राप्तिकामो दक्षिणप्रयागे स्नानमहं करिष्ये।

ॐ अद्य शिवपुरगमनकामो गङ्गासागरसङ्गमे स्नानमहं करिष्ये।

ॐ अद्याश्वमेधयज्ञजन्यफल-दशगुणफलप्राप्तिकामो गङ्गा-सागरसङ्गमे स्नानमहं करिष्ये। इति वा।

## अथावगाहनम् ।

ब्रह्माण्डे—

यैः पुण्यवाहिनी गङ्गा सकृद्भक्त्याऽवगाहिता ।

तेषां कुलानां लक्षन्तु भवात्तारयते शिवा ॥

ॐ अद्य भवापादनकस्वकीयकुललक्षतारणकामो गङ्गावगाहनमहं करिष्ये ।

---

## अथ सन्ध्या ।

गङ्गायाम् सन्ध्यामुपक्रम्य पौलस्त्यः—

गङ्गायां शतसाहस्रीति ।

ॐ अद्य सन्ध्यावन्दनजन्यफल-लक्षगुणफलप्राप्तिकामो गङ्गायां सन्ध्यावन्दनमहं करिष्ये ।

---

## अथ तर्पणम् ।

तत्र विष्णुपुराणे—

'दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयान्वितैः ।

अक्षयान्तु प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥

भविष्ये—

यावन्तश्च तिला मर्त्यैर्गृहीताः पितृकर्म्मणि ।

तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ॥

---

(१) क ख पुस्तकद्वये पिण्डाः ।

पितरः पितृलोकवासिनः।

भारते—

त्रिषु लोकेषु ये केचित् प्राणिनः सर्व्वे एव ते।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः॥
य इच्छेत् सफलं जन्म जीवितं शुभमेव च।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा॥

भविष्ये—

पतितादीनभिधाय।

ये नरा दुःखिताः सम्यक् सर्व्वे ते सकुशैस्तिलैः।
तर्पिता जाह्नवीतोयैर्नरेण विधिना सकृत्॥
प्रयान्ति स्वर्गलोकन्तु नात्र कार्य्या विचारणा।
स्वर्गसंस्थाश्च ये केचित् पितरः पुण्यशालिनः॥
गङ्गाजलैस्तथा पुंसा विधिना तर्पिताः सकृत्।
तेऽपि मोक्षं प्रपद्यन्ते यद्वि ब्रह्माऽब्रवीद्वचः॥

तथा—

मासतर्पणमात्रेण पिण्डानां पातनेन च॥
गङ्गायां पितरः सर्व्वे विमानान् सूर्य्यवर्च्चसः।
अप्सरोगणसंयुक्तान् हेमरत्नविभूषितान्।
मुक्ताजालपरिच्छन्नान् वेणुवीणानिनादितान्।
भेरीशङ्खमृदङ्गादिनिर्घोषान् स्रग्विभूषितान्॥
गन्धर्व्वगेयरुचिरान् दिव्यभोगसमन्वितान्।

गङ्गातर्पणसम्प्रीताः[१] श्राद्धपिण्डसुतर्पिताः ।
आरुह्य सहसा यान्ति ब्रह्मलोकं सनातनम् ॥

---

## अथ प्रयोगः ।

ॐ अद्य तर्पणतिलसंख्यबहुवर्षसहस्रावच्छिन्न तर्पणीयपितृस्वर्गवासकामः सतिलगङ्गाजलेन पितृतर्पणमहं करिष्ये ।

ॐ अद्याक्षयपितृतृप्तिकामो गङ्गाजलेन पितृतर्पणमहं करिष्ये ।

ॐ अद्य जन्मसाफल्य—जीवितशुभप्राप्तिकामो गङ्गाजलेन पितृतर्पणमहं करिष्ये ।

ॐ अद्य नरकस्थपितृस्वर्गप्राप्ति—स्वर्गस्थपितृमोक्षप्राप्तिकामः सतिलगङ्गाजलेन पितृतर्पणमहं करिष्ये ।

ॐ सूर्य्यवर्चोऽप्सरोगणसंयुक्त–हेमरत्नविभूषित–मुक्ताजाल-परिच्छन्न-वेणुवीणानिनादित–भेरीशङ्खमृदङ्गादिनिर्घोषि-स्रग्विभूषितगन्धर्व्वगेय-रुचिरदिव्यभोगसमन्वित–बहुविमानारोहणपूर्व्वक-तर्पणीयपितृगणकर्त्तृकब्रह्मलोकगमनकामोऽद्यादि–मासं गङ्गा-जलेन पितृतर्पणमहं करिष्ये ।

मासं पिण्डदानेऽप्येवम् ।

इदन्तु जलोपकण्ठे चेत् पिण्डपितृयज्ञरीत्या कर्त्तव्यम् ।

---

(१) ग पुस्तके सुप्रीताः ।

## अथ शिवार्च्चनम्।

तत्र स्मृतिः—

गङ्गायान्तु नरः स्नात्वा यो लिङ्गं नित्यमर्च्चयेत्।
एकेन जन्मना मोक्षं परमाप्नोति स ध्रुवम्॥

तथा—

अग्निहोत्राणि [1]वेदाश्च यज्ञाश्च बहुदक्षिणाः।
गङ्गायां लिङ्गपूजायाः कोट्यंशेनापि नो समाः॥

तथा—

[[2]गङ्गामज्जनशीलस्तु गङ्गातीरे विशेषतः— ]
प्रह्लादं निर्वृतिं स्वास्थ्यं आरोग्यञ्चारुरूपताम्।
आप्नोति कलसैर्भानोर्गङ्गातोयाभिषेकतः॥
पितॄनुद्दिश्य तान् देवान् स्नापयेद्गाङ्गवारिणा।
तृप्ताः स्युस्तस्य पितरो नरकस्थाश्च तत्क्षणात्॥
तत्तल्लोकान् प्रयान्त्येवं मोदन्ते तेषु वै चिरम्॥

तान् सूर्य्यादीन्।

मृत्कुम्भात्ताम्रकुम्भैस्तु स्नानं दशगुणं स्मृतम्।
रौप्यैः शतगुणं पुण्यं हैमैः कोटिगुणं फलम्॥
एवमर्घ्येषु नैवेद्य-बलिपूजादिषु क्रमात्।
पात्रान्तरविशेषेण फलञ्चैवोत्तरोत्तरम्॥
विभवे सति यो मोहान्न कुर्य्याद्विधिविस्तरम्॥

---

(१) ख पुस्तके देवाश्च।

(२) [ ] चिह्नितपङ्क्तिरधिका।

नैतत्फलमवाप्नोति देवद्रोहः स उच्यते ॥
देवानां दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
स्पर्शनादर्च्चनं श्रेष्ठं घृतस्नानमतःपरम् ॥
अष्टकृत्वो मन्त्रजपैः [1]पुष्पैश्चैव सुगन्धिभिः ।
प्राहुर्गङ्गाजलैः स्नानं घृतस्नानसमं बुधाः ॥
अर्घ्यद्रव्यविशेषेण गङ्गातोयेन यः सकृत् ।
[2]मागधप्रस्थमात्रेण ताम्रपात्रस्थितेन च ॥
भानवेऽर्घ्यं प्रदद्यात्तु स्वकीयपितृभिः सह ।
पुत्र-पौत्रैश्च संयुक्तः स्वर्गलोके महीयते ॥
आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रक्तानि करवीराणि तथा रक्तञ्च चन्दनम् ।
अष्टाङ्ग एषः अर्घ्यो वै भानवे परिकीर्त्तितः ॥

तथा—

शिवस्य विष्णोः सूर्य्यस्य दुर्गाया ब्रह्मणस्तथा ।
गङ्गातीरे प्रतिष्ठान्तु यः करोति नरोत्तमः ॥

प्रतिष्ठा स्थापनम् ।

तथैवायतनान्येषां कारयन्त्यतिशक्तितः ।
अन्यतीर्थेषु करणात् कोटिकोटिगुणं [3]लभेत् ॥
गङ्गातीरसमुद्भूतमृदा लिङ्गानि शक्तितः ।
सलक्षणानि कृत्वा तु प्रतिष्ठाप्य दिने दिने ॥

---

(१) ख ग-सुप्रभूतैः । (२) ग गोदुग्ध- ।

(३) क ख पुस्तकद्वये भवेत् ।

मन्त्रैश्च पुष्पपत्राद्यैः पूजयित्वा स्वशक्तितः ।
गङ्गायां निक्षिपेन्नित्यं तस्य पुण्यं ततोऽधिकम् ॥

अथ प्रयोगः—

ॐ अद्याग्निहोत्र-बहुवेद-बहुदक्षिण-बहुयज्ञजन्यफलाधिक-फलप्राप्तिकामो गङ्गायां शिवलिङ्गपूजनमहं करिष्ये ॥

ॐ अद्य प्रह्लाद-निर्वृति-स्वास्थ्यारोग्य-चारुरूपताकामः कलसैर्गङ्गातोयेन भानोरभिषेकमहं करिष्ये ॥

ॐ अद्यान्यतीर्थाधिकरणकशिवप्रतिष्ठाजन्यफल-कोटिगुणफल-प्राप्तिकामो गङ्गायां शिवप्रतिष्ठामहं करिष्ये। एवं विष्णोः सूर्य्यस्य दुर्गाया ब्रह्मणश्च प्रतिष्ठावाक्यम् । एषामायतनकरणेऽप्येवम् ॥

ॐ अद्य पितृतात्कालिकतृप्ति-शिवलोकगमन-तल्लोकाधि-करणककामचारमोदनकामः पितरमुद्दिश्य कलसेन गङ्गाजलेन शिवं[1]स्नपनमहं करिष्ये। पितरमुद्दिश्य सूर्य्यादिस्नपनेऽप्येवम् । पितामहादिकमुद्दिश्य शिवादिस्नपनेऽ[2]प्येवम् ।

---

## अथ जपः ।

तत्र भविष्ये—

सर्व्वानन्दप्रदायिन्यां गङ्गायां यो नरोत्तमः ।
अष्टाक्षरं जपेद्भक्त्या मुक्तिस्तस्य करे स्थिता ॥

---

(१) ख पुस्तके सङ्कल्पवाक्ये स्नपनपदस्थाने स्थापनपदं लिखितम् ।

(२) क पुस्तके—स्नाने ।

गङ्गायां विधिना स्नात्वा जपेदष्टाक्षरं यदि ।
सर्व्वयज्ञफलं तस्य सर्व्वदानफलं तथा ॥
सर्व्वव्रतफलं तस्य भवेत् सर्व्वतपःफलम् ॥
षण्मासादणिमाद्यास्तु सिद्धयोऽत्र भवन्ति वै ।
नमो नारायणायेति प्रणवाद्योऽष्टवर्णकः ॥

तथा—

नमः शिवायेति मन्त्र आदौ प्रणवसंयुतः ।
सर्व्वधर्म्मप्रदः सद्यो विधिना शिवभक्ति(दः)तः ॥

तथा—

चतुर्व्विंशतिभिर्लक्षैर्जप्तैः सिद्धो भवेद्ध्रुवम् ।
सम्यक्सिद्धैकमन्त्रस्तु शिवतुल्यो भवेत् सुखी ॥
[1]पञ्चाक्षरो सिद्धमन्त्रः शिव एव न संशयः ।
अपवित्रः पवित्रो वा सर्व्वावस्थाङ्गतोऽपि वा ।
महापातकयुक्तोऽपि मन्त्रस्यास्य जपे यथा ।
अधिकारी भवेत् सर्व्व इति देवोऽब्रवीच्छिवः ॥

अष्टाक्षरजपे भुक्तिः । सर्व्वयज्ञ-सर्व्वदान-सर्व्वव्रत-सर्व्वतपः-फलं वा । षण्मासमेतज्जपेऽणिमादिसिद्धिप्राप्तिः फलम् । पञ्चाक्षर-जपे सर्व्वधर्म्मशिवभक्तिप्राप्तिः फलम् । चतुर्व्विंशतिलक्षमितपञ्चा-क्षरजपे शिवतुल्यत्वं फलम् । अत्र च काम्यजपे यावकादिक-माहारो वक्तव्यः ।

---

(१) क पुस्तके—पञ्चाक्षरः ।

## अथ गङ्गापूजा।

तत्र स्मृतिः—

पूजितायान्तु गङ्गायां पूजिताः सर्व्वदेवताः।
तस्मात् सर्व्वप्रयत्नेन पूजयेदमरापगाम्॥

भविष्ये—

चतुर्भुजां सुनेत्राञ्च सर्व्वावयवशोभिताम्।
रत्नकुम्भ-सिताम्भोज-वरदानाभयङ्कराम्॥
श्वेतवस्त्रपरीधानां मुक्ता-मणिविभूषिताम्।
ततो ध्यायेत् सुरूपाञ्च चन्द्रायुतसमप्रभाम्॥
चामरैर्वीज्यमानाञ्च श्वेतवस्त्रो[1]पशोभिताम्।
सुप्रसन्नां सुवदनां करुणार्द्रनिजान्तराम्॥
सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम्।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम्॥
दिव्यरूपविभूषाञ्च दिव्यमाल्यानुलेपनाम्।
ध्यात्वा जले यथा प्रोक्तां तथाऽर्च्चायान्तु पूजयेत्॥
तथा काम्यानवाप्नोति काम्याराधनतोऽपि च।
मासार्द्धमपि यस्त्वेवं नैरन्तर्य्येण पूजयेत्॥
स एव पुरुषश्रेष्ठो नैरन्तर्य्यं हि दुष्करम्।
एवञ्च बहुकालं यो नैरन्तर्य्येण पूजयेत्॥

---

(१) क पुस्तके—छत्रोपशोभिताम्।

तस्य पुण्यफलं वक्तुं वागीशोऽपि न हि क्षमः ।
महामखैर्महादानैस्तपोभिर्विधिवत् कृतैः ॥
अनेकशतसाहस्रैर्न तत् फलमवाप्यते[1] ।

बहुत्वञ्चाव्यवहितपक्षापेक्षं तेन त्रिपक्षादिकं लभ्यते ।

ब्रह्मपुराणे—

[2][वैशाखशुक्लसप्तम्यां जह्नुना जाह्नवी पुरा ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ॥]
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ॥

वैशाखशुक्लतृतीयामधिकृत्य भविष्ये—

रात्रौ जागरणं कृत्वा यवैर्बिल्वैस्तिलैस्तथा ।
विष्णुं गङ्गाञ्च शम्भुञ्च पूजयेद् भक्तिभावतः ॥
तथा सुगन्धिकुसुमैः कुङ्कुमागुरुचन्दनैः ।
तुलसीविल्वपत्राद्यैर्मातुलुङ्गफलादिभिः ॥
धूपैर्दीपैश्च नैवेद्यैर्यथाविभवविस्तरैः ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥
दिव्यं विमानमास्थाय विष्णुलोके महीयते ।
ततो महीतलं प्राप्य खाण्डवे जायते प्रभुः ॥
राजा भूत्वा तु धर्मात्मा सुखानि विविधानि च ।
भुञ्जीत द्विजसौभाग्यसंयुक्तो रूपशीलवान् ॥
देहान्ते ज्ञानवान् भूत्वा शिवसायुज्यमाप्नुयात् ॥

---

(१) ख पुस्तके—अवाप्स्यते ।

(२) ख पुस्तके—[ ] चिह्नितश्लोकः पतितः ।

अथ प्रयोगः—

ॐ अद्य सर्व्वदेवतापूजनजन्यफलसमफलप्राप्तिकामोऽमुक-स्ववाञ्छितफलप्राप्तिकामो वा गङ्गापूजनमहं करिष्ये ।

इति सङ्कल्प्य यथोक्तध्यानं कृत्वा चतुर्थ्यन्तनमोऽन्तनाम्ना पञ्चोपचारैस्तां पूजयेत् ।

ॐ पुरुषश्रेष्ठत्वकामो ऽद्यादि मासाहं गङ्गापूजनमहं करिष्ये ।

ॐविधिवत्-कृतानेकशतसाहस्रमहामख-महादान-तपो-जन्य-फलसमफलप्राप्तिकामो अद्यादि बहुकालं गङ्गापूजनमहं करिष्ये ।

एवं सङ्कल्प्य यथोक्तं ध्यात्वा पञ्चोपचारैश्चतुर्थ्यन्तनमोऽन्तनाम्ना सम्पूज्य दशहराव्रतोक्तस्तवेन [१]स्तुत्वा प्रणिपत्य विसर्ज्जयेदिति ।

---

## अथ दानम् ।

तत्र ब्रह्माण्डे—

यज्ञो दानं तपो जप्यं श्राद्धञ्च सुरपूजनम् ।
गङ्गायान्तु कृतं सर्व्वं कोटि-कोटिगुणं भवेत् ॥

भविष्ये—

यस्त्वक्षयतृतीयायां गङ्गातीरे ददाति वै ।
घृतधेनुं विधानेन तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
सहस्रादित्यसङ्काशः सर्व्वकामसमन्वितः ।
हेमरत्नमये चित्रे विमाने हंसभूषिते ॥

---

[१] ग पुस्तके—व्रतोक्तं भक्त्या ।

स्वकीयपितृभिः सार्द्धं रुद्रलोके महीयते ।
ततस्तु जायते विप्रो गङ्गातीरे धनान्वितः ॥
अन्ते तु ब्रह्मविद्भूत्वा मोक्षमाप्नोत्यसंशयम् ।
तथैव गोप्रदानञ्च विधिना कुरुते तु यः ॥
गोलोमसंख्यया तावत्कल्पान्यर्व्वुदसंख्यया ।
गोलोके शिवलोके वा कामधेनुप्रजान्वितः ॥
भुञ्जानः सर्व्वकामांस्तु दिव्यान् नानाविधान् बहून् ।
देवानामप्यलभ्यांश्च स्थित्वा तु सह बान्धवैः ॥
पितृभिश्च सुहृद्भिश्च सर्व्वरत्नविभूषितः ।
जायते सत्कुले पश्चात् धनधान्यसमाकुले ॥
रत्नकाञ्चनसम्पूर्णे शीलविद्यायशोऽन्विते ।
स भुक्त्वा विपुलान् भोगान् पुत्रपौत्रसमन्वितः ॥
सर्व्वदुःखविनिर्म्मुक्तः सर्व्वकामसमन्वितः ।
सर्व्वप्राणिप्रियो भूत्वा ततो मोक्षमवाप्नुयात् ॥
कपिला यदि दत्ता स्याद् विधिना वेदपारगे ।
नरकस्थान् पितॄन् सर्व्वान् स्वर्गं नयति वै तदा ॥
निवर्त्तनद्वयं भूमेर्गङ्गातीरे विशेषतः ॥
विप्राय वेदविदुषे तिथौ तस्यां विशेषतः ।
नरो ददाति भक्त्या वै तस्य पुण्यफलं त्विदम् ॥
तद्भूमिपरमाणूनां संख्ययाऽयुतसंख्यया ।
सोमेन्द्रविष्णुलोकेषु ब्रह्मलोके तथैव च ॥
शिवलोके तथा श्रीमान् भोगान् भुङ्क्ते यथाविधि ।

जायते रूपसम्पन्नः सर्व्वशोकविवर्ज्जितः।
सर्व्वसम्पत्समृद्धस्तु सप्तद्वीपपतिर्भवेत् ॥
भेरीशङ्खादिनिर्घोषैर्गीतवादित्रनिस्वनैः।
स्तुतिभिर्मागधानाञ्च सुप्तोऽसौ प्रतिबुध्यते ॥
सर्व्वसौख्यानवाप्येह सर्व्वधर्म्मपरायणः।
नरकस्थान् पितॄन् सर्व्वान् प्रापयित्वा दिवन्तथा।
स्वर्गस्थितान् पितॄन् सर्व्वान् मोचयित्वा महाद्युतिः ॥
अन्ते ज्ञानासिना छित्वा अविद्यां पञ्चपूर्व्विकाम्[1]।
परं वैराग्यमापन्नः परं ब्रह्माधिगच्छति ॥

अयुतसंख्यया इत्यत्र तावत्कल्पानीति पूर्व्वोक्तमनुषज्यते ॥

निवर्त्तनलक्षणं मत्स्यपुराणे उक्तम्—

सप्तहस्तेन [2]दण्डः स्यात्त्रिंशद्दण्डा निवर्त्तनम्[3]।
त्रिभागहीनं गोचर्म्ममानमाह प्रजापतिः[4] ॥

तथाच भविष्ये—

ग्रामं गङ्गातटे योऽसौ विप्रेभ्यः सम्प्रयच्छति।
ब्रह्म-विष्णु-शिवेभ्यश्च दुर्गायै भास्कराय च ॥
सर्व्वदानेषु यत् पुण्यं सर्व्वयज्ञेषु यत्फलम्।
सर्व्वतीर्थेषु यत्पुण्यं सर्व्वव्रत-तपःसु च ॥

---

(१) ग पुस्तके—पञ्चपर्व्विकाम्।
(२) मूल पुस्तके—दण्डेन।
(३) क ख पुस्तकद्वये—दण्डान्निवर्त्तनम्।
(४) ग पुस्तके—मानमाहुर्मनीषिणः।

सहस्रगुणितं तत्र फलं स्याद्भूमिदानतः ।
सूर्य्यकोटिप्रतीकाशैर्दिव्यस्त्रीकोटिसंयुतैः ॥
दिव्यरत्नमयैश्चित्रैर्विमानैर्वैष्णवे पुरे ।
क्रीड़ति सर्व्वसम्पन्नः [1]शाङ्करे च पुरे तथा ॥
स्वकीयपितृभिः सार्द्धं क्रीड़ते कालमक्षयम् ॥
यावत्तु ग्रामभूमेर्वै परमाणुषु संख्यया ।
भोगान् भुक्त्वा तथा लोके जायते योगिनां कुले ॥
अणिमादिगुणैर्युक्तः स्वयं भोगी भवत्यपि ।
देहान्ते निर्म्मले नित्ये परे ब्रह्मणि लीयते ॥
तथा तस्यां तृतीयायां वेदविद्ब्राह्मणाय वै ।
माषषोड़शमात्रं वा सुवर्णं यः प्रयच्छति ॥
स हेमरत्नखचिते विमाने सर्व्वगे शुभे ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वभूषणभूषितः ॥
सर्व्वैश्वर्य्यसमृद्धश्च सर्व्वलोकेषु सर्व्वदा ।
ब्रह्माण्डान्तरसंस्थे तु रत्नभोगान् पृथग्विधान् ॥
अनुभूय स्वपितृभिर्यावदाहूतसंप्लवम् ।
ततो रुद्रस्य सायुज्यं प्राप्नोति च न संशयः ॥

तथा—

गङ्गायां कुशदानेन ब्रह्मलोकं समाप्नुयात् ।
विष्णोश्च[2] यवदानेन रुद्रलोकं तथैव च ॥
प्राप्नोति तिलदानेन होमैनैश्वर्य्यमाप्नुयात् ।

---

(१) ग पुस्तके—शशाङ्के । (२) मूले—विष्णौ च ।

सदाशिवपदं साक्षाद्रत्नदानेन चाप्नुयात् ।
गो-भू-हिरण्यदानेन भक्त्या गङ्गातटे सकृत् ॥
नरो न जायते भूयः संसारे दुःखसङ्कटे ।
दीर्घायुष्टन्तु वासोभिरन्नदानेन सम्पदः ॥
विद्यादानेन वै ज्ञानं कीर्त्तिः कन्याप्रदानतः ।
सर्व्वदानानि नियमा यमाश्चैव तपांसि च ।
यज्ञो दानं तथा जप्यं श्राद्धञ्चेश्वरपूजनम् ॥
गङ्गायान्तु कृतं सर्व्वं कोटि-कोटिगुणं भवेत् ॥

तथा—

वासो हिरण्यरत्नानि पत्र-पुष्प-फलानि च ।
अन्नदानादिकञ्चापि स्वस्य यद्यदतिप्रियम् ॥
तत्तद्दत्त्वेह गङ्गायै यः प्रयच्छति मानवः ।
तत्तात् स्वर्गस्य चान्ते हि सम्प्राप्यैवेह जन्मनि ॥
प्रेत्य चाप्नोति नियतं निर्व्वाणं वा निरञ्जनम् ।
गङ्गातीरे नरो यस्तु जम्ब्वाम्रवकुलावृतम् ॥
कदली-नारिकेलैश्च कपित्थाशोकचम्पकैः ।
पनसैर्विल्ववृत्तैश्च कदम्बाश्वत्थपाटलैः ॥
नारङ्गैर्मातुलुङ्गैश्च वृक्षैरन्यैश्च संयुतम् ।
जाती(ति)विजय-पुन्नाग-करवीरयुतं तथा ।
निचितं कारयित्वैवमारामं पुष्पशोभितम् ॥
शिवाय विष्णवे वापि दुर्गायै भास्कराय वा ।
प्रयच्छति तथा भक्त्या सर्व्वार्थं परिकल्प्य च ॥

तस्य पुण्यफलं वक्ष्ये संक्षेपान्न तु विस्तरात्।
यावन्ति तेषां वृक्षाणां पुष्प-मूल-फलानि च ॥
बीजानि च विचित्राणि तेषां मूलानि वै तथा।
तावत्कल्पसहस्राणि तेषां लोके महीयते ॥

---

## अथ प्रयोगः।

तत्रादौ धेनुविधानम्।

तत्र मत्स्यपुराणे,—

गुड़धेनुविधानस्य यद्रूपमिह यत् फलम्।
तदिदानीं प्रवक्ष्यामि सर्व्वपापप्रणाशनम् ॥
कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद् भुवि।
गोमयेनोपलिप्तायां दर्भानास्तीर्य्य यत्नतः ॥
लघ्वेणकाजिनं तद्वत् वत्सस्य परिकल्पयेत्।
प्राङ्मुखीं कल्पयेद्धेनुमुदक्पादां सवत्सकाम् ॥
उत्तमा गुड़धेनुः स्यात् सदा भारचतुष्टयम्।
वत्सं भारेण कुर्व्वीत भाराभ्यां मध्यमा स्मृता ॥
अर्द्धभारेण वत्सः स्यात् कनिष्ठा भारकेण तु।
चतुर्थांशेन वत्सः स्यात् गृहवित्तानुसारतः ॥

तथाचायं शक्तिह्रासे द्रव्यह्रासस्तेन मुख्यकल्पशक्तेन न कल्पान्तरमाश्रयणीयम्।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न साम्परायिकं तस्य दुर्म्मतेर्विद्यते[1] फलम् ॥
इति कात्यायनेन निषेधात् ।

साम्परायिकं पारलौकिकम् । धेनुद्रव्यभिन्नमत्र वत्सद्रव्यं द्वयोः पृथक्द्रव्यकथनात् ।

कामधेनुमहादाने तु नैवम् । तत्र वत्सद्रव्यस्य पृथगनभिधानात् ।

धेनु-वत्सौ घृतास्यौ तौ सितसूक्ष्माम्बरावृतौ[2] ।
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ ॥
सितसूत्रशिरानद्धौ सितकम्बलकम्बलौ ।
ताम्रगड्डु(गण्डु)कपृष्ठौ तौ सितचामरलोमकौ ॥
विद्रुमभ्रूयुगोपेतौ नवनीतस्तनान्वितौ ।
क्षौमपुच्छौ कांस्यदोहाविन्द्रनीलकतारकौ ॥
सुवर्णशृङ्गाभरणौ राजतक्षुरसंयुतौ ।
नानाफलसमायुक्तौ घ्राणगन्धकरण्डकौ ॥

गन्धकरण्डकः सुरभिगन्धाढ्यद्रव्यं कर्पूरादि ।

इत्येवं रचयित्वा तु धूपदीपैरथार्च्चयेत् ।
या लक्ष्मीः सर्व्वभूतानां या च देवेष्ववस्थिता ॥
धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु ।
देहस्था या च रुद्राणी शङ्करस्य सदा प्रिया ॥

---

(१) क्वचित्—जायते ।

(२) ग पुस्तके—सितश्लक्ष्णाम्बरावृतौ । ख पुस्तके—अम्बरावुभौ ।

धेनुरूपेण सा देवी मम पापं व्यपोहतु।
विष्णोर्वक्षसि या लक्ष्मीः स्वाहा चैव विभावसोः॥
चन्द्रार्कशक्रशक्तिर्या धेनुरूपा तु सा श्रिये।
चतुर्मुखस्य या लक्ष्मीर्लक्ष्मीश्च धनदस्य हि॥
लक्ष्मीर्या लोकपालानां सा धेनुर्व्वरदाऽस्तु मे।
स्वधा या पितृमुख्यानां स्वाहा यज्ञभुजाञ्च या॥
सर्व्वपापहरा धेनुस्तस्मा[1]च्छान्तिं प्रयच्छतु।
एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत्॥
विधानमेतद्धेनूनां सर्व्वासामिह पठ्यते।
यास्तु पापविनाशिन्यः पठ्यन्ते दश धेनवः॥
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप।
प्रथमा गुड़धेनुः स्यात् घृतधेनुस्तथा परा॥
तिलधेनुस्तृतीया तु चतुर्थी जलसंज्ञिका।
क्षीरधेनुश्च विख्याता मधुधेनुस्तथा परा॥
सप्तमी शर्कराधेनुर्दधिधेनुस्तथाऽष्टमी।
रसधेनुश्च नवमी दशमी स्वस्वरूपतः॥
कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः।
सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः॥
नवनीतेन तैलेन तथान्येऽपि महर्षयः।
एतदेव विधानं स्यात्तत्र वोपस्कराः स्मृताः॥

---

(१) ख पुस्तके—धेनुर्मम।

मन्त्रावाहनसंयुक्ता सदा पर्व्वणि पर्व्वणि ।
यथाश्राद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदा ॥
अमेययज्ञफलदाः सर्व्वपापहराः शुभाः ।
अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः ॥
गुड़धेन्वादयो देया उपरागादिपर्व्वसु ।

अत्र घृतादिधेनुद्रव्यपरिमाणमपि गुड़धेनूक्तमेव ।

"विधानमेतद्धेनूनां सर्व्वासामपि पठ्यते ।"

इति सामान्येनातिदेशात् ।

कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः ।

इति भारचतुष्टयादिपरिमितद्रव्य-[1]व्यवस्थापनकथनम् ।

एवं घृतादिधेनुष्वपि कृष्णाजिनधारणं कुम्भकथनेनापि तद-बाधनात्, एतदेव विधानं स्यादिति वचनाच्च ।

केचित्तु—नानाजिनमिच्छन्ति ।

भारस्तु पलसहस्रद्वयात्मकः ।

तदाहुः—तुला पलशतं ज्ञेयं भारः स्यात् विंशतिस्तुलाः ॥ इति

अयमत्र प्रयोगः ।

गोमयोपलिप्तायां भूमौ कुशानास्तीर्य्य तत्र प्राग्ग्रीवं चतुर्हस्तं कृष्णाजिनं धेन्वर्थं पातयित्वा तत्समीपे लघुकृष्णाजिनं प्राग्ग्रीवमेव वत्सार्थं धृत्वा तदुपरि शक्त्यनुसारेण भारचतुष्टयेन भारद्वयेन एकभारेण वा गव्यघृतेन घटेषु स्थापितेन धेनुं यथाक्रम-मेकभारेण अर्द्धभारेण भारचतुर्थांशेन वा गव्यघृतेनैव घटस्थेन वत्स-

(१) क पुस्तके प्रकार कथनम् ।

मुपकल्प्य उभावपि प्राङ्मुखावुदक्पादौ घृतास्यौ श्वेतसूक्ष्मवस्त्र-वेष्टितौ शुक्तिमयकर्णौ विद्रुमयपादचतुष्टयौ श्वेतमुक्तामयलोचनौ तदभ्यन्तरस्थेन्द्रनीलमयतारादयौ श्वेतसूत्रात्मकशिरानद्धौ श्वेत-कम्बलमयसास्नाकौ, ताम्रगण्डुकमयपृष्ठौ सितचामररोमाणौ प्रवालमयभ्रूयुगौ नवनीतस्तनौ क्षौमपुच्छौ कांस्यदोहौ सुवर्ण-शृङ्गौ राजतखुरौ नानाफलसमायुक्तौ अगुरुप्रभृतिसुरभिद्रव्य-निर्म्मितघ्राणावेवं धेनु वत्सौ निर्म्माय "ॐ सोपकरणसवत्सघृत-धेनवे नमः" ।

एवं धूपं दीपं नैवेद्यं दत्त्वा ॐ ब्राह्मणाय नमः इति त्रिः सम्पूज्य "ॐ इमां सोपकरणां सवत्सां घृतधेनुं ददानि" इति द्विजकरे जलं दत्त्वा धेनुं प्रोच्य ॐ या लक्ष्मीरित्यादिश्लोकपञ्चकं पठित्वा कुशतिलजलान्यादाय—

ॐ अद्याक्षयतृतीयायां गङ्गातीरे बहुकल्पकोटिशतावच्छिन्नहेम-रत्नमयचित्रहंसभूषित-विमानाधिकरणक-स्वकीयपितृगणसहित--सहस्रादित्यसङ्काश-सर्व्वकामसमन्वितस्वीयरुद्रलोकमहितत्व--तदु-त्तरगङ्गातीराधिकरणक--धनान्वितविप्रत्वभवनान्तकालिक-ब्रह्म--विद्भवनानन्तरमोक्षावाप्तिकामः—

इमां गोमयोपलिप्तास्तीर्णकुशभूम्युपरिस्थ-लघुप्राग्ग्रीवैणकाजि-नस्थ-घृतास्यसितसूक्ष्माम्बरावृत-शुक्तिकर्णद्रुमयचतुष्पाद-शुचिमुक्ता-फलेक्षण-सितसूत्रशिरानद्ध-सितकम्बलकम्बल-ताम्रगण्डुकपृष्ठ-सित-चामररोमक—विद्रुमभ्रूयुगोपेत—नवनीतस्तनान्वित--क्षौमपुच्छ--कांस्यदोहेन्द्रनीलतारक-सुवर्णशृङ्गाभरण-राजतखुर-नानाफलसमा-

शुक्तगन्धमयनासिक--स्व चतुर्थभाग परिमित घृतमय वत्ससहितां गोमयोपलिप्तास्तीर्णकुशभूम्युपरिस्थितचतुर्हस्तप्राग्ग्रीवकृष्णाजिन-स्थितां प्राङ्मुखीमुदक्पादां घृतास्यां सितसूक्ष्माम्बरावृतां शुक्ति-कर्णामिक्षुमयचतुष्पादां शुचिमुक्ताफलेक्षणां सितसूत्रशिरानद्धां सितकम्बलकम्बलां ताम्रगण्डूकमयपृष्ठां सितचामररोमकां विद्रुमभ्रूयुगोपेतां नवनीतस्तनान्वितां क्षौमपुच्छां कांस्यदोहा-मिन्द्रनीलतारकां सुवर्णशृङ्गाभरणां राजतखुरां नानाफलसमायुक्तां विशिष्टगन्धमयनासां घृतमयीं धेनुं विष्णुदैवताममुकगोत्रायामुक-शर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ ॐ स्वस्ति ॥

ॐ अद्य कृतैतत्-सोपकरणवत्ससहितघृतधेनुदानप्रतिष्ठार्थम् इदं सुवर्णमग्निदैवतमित्यादि ॥ ततः पुच्छे धेनुं स्पृष्ट्वा द्विजः कामस्तुतिं पठेत् ॥

---

## अथाक्षयतृतीयायां गोदानम् ।

### तत्र प्रयोगः—

गो-ब्राह्मणौ सम्पूज्य द्विजकरे जलं दत्वा 'गामालभ्य[1]— ॐ अद्याक्षयतृतीयायां गङ्गातीरे गोलोमसमसंख्यककल्पार्व्वुदाव-च्छिन्न-गोलोक शिवलोकान्यतराधिकरणक-बान्धवपितृमातृसुहृद्-सहित-कामधेनुप्रजान्वित स्वीयदिव्यनानाविधदेवालभ्य सर्व्वका-मोपभोगवत्स्थिति--तदनन्तरधनधान्यसमाकुल--रत्नकाञ्चनभूपूर्ण-

---

(१) ग पुस्तके—गामभिषिच्य ।

शीलविद्यायशोऽन्वित सत्कुलाधिकरणकजन्म-यशः पुत्रपौत्रसमन्वित सर्व्वदुःखविनिर्मुक्त-सर्व्वकामसमन्वित-सर्व्वप्राणिप्रिय-स्वकर्त्तृक-विपुलबहुभोगोपभोग-तदुत्तरमोक्षावाप्तिकाम इमां गां रुद्रदैवता-मित्यादि ।

कपिलादाने,—

ॐ कपिलगव्यै नमः, ॐ ब्राह्मणाय नमः, इति कपिलामभि-षिच्य, अद्याक्षयतृतीयायां गङ्गातीरे नरकस्थसर्व्वपितृ-स्वर्गनयन-काम—ॐ इमां कपिलां गां रुद्रदैवताममुकगोत्रायामुकशर्म्मणे ब्राह्मणाय वेदपारगाय तुभ्यमहं सम्प्रददे । ॐ स्वस्तीत्यादि । दक्षिणां पूर्व्ववद्दद्यात् ।

---

## अथ भूमिदानम् ।

ॐ अद्याक्षयतृतीयायां गङ्गातीरे दातव्यभूमिपरमाणुसमसंख्यक-कल्पायुतावच्छिन्न सोमेन्द्रब्रह्मविष्णुशिवलोकाधिकरणक श्रीमत्-स्वकर्त्तृक-बहुभोगोपभोग-तदुत्तररूपसम्पन्न--सर्व्वरोगविवर्ज्जित-सर्व्वसम्पत्समृद्ध--भेरीशङ्खादिनिर्घोष--गीतवादित्रनिःस्वन--मागध-स्तुतिकरणकसुप्तप्रतिबोधवत्सप्तद्वीपपतित्वभवन---सर्व्वधर्म्मपरा---यणस्वकर्त्तृकसर्व्वसौख्यावाप्ति- नरकस्थसर्व्वपितृ-स्वर्गनयन-स्वर्गस्थ-सर्व्वपितृ-मोक्षप्रापणानन्तर-महाद्युति-स्वकर्त्तृकाविद्याच्छेदपर-वैराग्योत्पत्तिपरब्रह्माधिगमनकाम इमां भूमिं निवर्त्तनद्वयमितां प्रियदत्तां विष्णुदैवतामित्यादि ।

---

## अथ ग्रामदानम्।

ग्राम-ब्राह्मणौ सम्पूज्य—ॐ अद्याक्षयतृतीयायां गङ्गातीरे सर्व्वदान सर्व्वयज्ञ सर्व्वतीर्थ सर्व्वतपोजन्यफलसहस्रगुणफलप्राप्ति-सूर्य्यकोटिप्रतीकाशदिव्यस्त्रीकोटिसंयुक्त-दिव्यरत्नमय-विचित्र-बहु-विमानकरणकाक्षयकालव्यापि स्वपितृसहितसुक्रीड़न-दातव्य-ग्रामभू—परमाणु-समसंख्य तल्लोकाधिकरणक बहुभोगोपभोग-पूर्व्वकयोगिकुलजन्माणिमादिगुणयुक्तभोगित्वभवन देहान्तकालिक-निर्म्मलनित्यपरब्रह्मलयकाम इमं ग्रामं विष्णुदैवतमित्यादि।

---

## अथ सुवर्णदानम्।

ॐ अद्याक्षयतृतीयायां—गङ्गातीरे सर्व्वलोकाधिकरणक हेमरत्नखचितसर्व्वगशुभविमानाधिकरणक सर्व्वपापविनिर्मुक्त-सर्व्वैश्वर्य्यसमृद्ध स्वपितृसहित स्वकीययावदाहूतसंप्लवपृथग्विध-बहुभोगोपभोग-तदुत्तररुद्रसायुज्यप्राप्तिकाम इदं षोड़शमाषमितं सुवर्णमग्निदैवतमित्यादि।

अथ यदा कदाचित् कुशदाने ब्रह्मलोकावाप्तिः। यवदाने विष्णुलोकावाप्तिः। तिलदाने रुद्रलोकावाप्तिः। तिलहोमे ऐश्वर्य्यम्। रत्नदाने शिवपदप्राप्तिः। गो-भू-हिरण्यान्यतमदाने पुनर्जन्माभावः। वस्त्रदाने दीर्घायुष्ट्वम्। अन्नदाने सम्पदः। विद्यादाने ज्ञानम्। कन्यादाने कीर्त्तिः।

गङ्गायै वस्त्रहिरण्यरत्नपत्रपुष्पफल [1]स्वप्रियाणामन्यतमदाने स्वर्गानन्तर-तद्वस्तुप्राप्ति तदुत्तरनिर्वाणप्राप्तिः फलम्।

---

(१) क पुस्तके—सुप्रेयानाम्।

विहितं कर्म्म यद्गङ्गातीरे क्रियते तस्य कोटिगुणं फलम्। जम्ब्वाम्र-वकुल-कदली नारिकेल-कपित्थाशोक चम्पक-पणस विल्व-कदम्बाश्वत्थ---पाटलानागरङ्ग- मातुलुङ्गामलकी–तिन्तिड़ी–सह-- कारादिसंयुक्तं जाति-विजय-पुन्नाग-करवीर-विचिकीलादिशोभित-मारामं गङ्गातीरे कारयित्वा शिवाय विष्णवे दुर्गायै भास्कराय-दत्वा तदारामस्थवृक्षीयपुष्पमूलफलबीजसमसंख्य कल्पसहस्रावच्छिन्न शिवादिलोकमहितत्वावाप्तिः फलम् ।

तथात्र—गङ्गातीरे यथोक्तमारामं कारयित्वा चतुर्द्दश्यादौ शिवं सम्पूज्यारामञ्च प्रोक्ष्य—

ॐ अद्यामुकमासीयामुकतिथौ एतदारामवृक्षीयपुष्प-मूल-फल-बीज-तन्मूलसमसंख्यककल्पसहस्रावच्छिन्न शिवलोकमहितत्वा-वाप्तिकामोऽमुमारामं गङ्गातीरे स्वकारितं वनस्पतिदैवतं भगवते शिवायाहं ददे। एवं विष्ण्वादिदानेऽपि वाक्यं शिवलोकस्थाने विष्णुलोके इति विशेषः।

---

## अथ गङ्गायां व्रतफलम् ।

तत्र भविष्ये,—

अष्टमूर्त्तिधरां गङ्गां दिव्यरूपां निरीक्षितुम् ।
साक्षादेवाशु मर्त्त्यानां तमुपायं व्रतं वद ॥
शालितण्डुलप्रस्थेन द्विप्रस्थपयसा तथा ।
पायसं पाचयित्वा तु मधुखण्डं घृतन्तथा ॥

प्रत्येकं पलमात्रन्तु तत्र निक्षिप्य भक्तितः।
तत्पायसमपूपांश्च मोदकान् मण्डलानि च ॥
तथा गुञ्जार्द्धमात्रञ्च सुवर्णं रूप्यमेव च।
चन्दनागुरुकर्पूरकुङ्कुमानि च गुग्गुलुम् ॥
विल्वपत्राणि दूर्व्वांश्च रोचनां सितसर्षपम्।
नीलोत्पलस्य पुष्पाणि पुष्पाभावे दलान्यपि ॥
यथाशक्त्या महाभक्त्या गङ्गायां यो विनिक्षिपेत्।
पौर्णमास्यां मासि मासि दर्शे च प्रहरद्वये ॥
श्रद्धयाऽनेन मन्त्रेण यावत् संवत्सरन्तथा।
ॐ गङ्गायै नारायण्यै शिवायै च नमो नमः ॥
इति मन्त्रेण सततं शतमष्टोत्तरं जपेत्।
गङ्गाजलान्तःस्थित्वा च तन्मनास्त्यक्तसंशयः ॥
हविष्याशी मिताहारी यमी तेषु दिनेषु च।
संवत्सरान्ते तस्यैषा गङ्गा दिव्यवपुर्धरा ॥
दिव्यमालाम्बरधरा दिव्यरत्नविभूषिता।
प्रत्यक्षरूपा पुरतस्तिष्ठत्येव वरप्रदा ॥
एवं प्रत्यक्षतः साक्षात् गङ्गां दिव्यवपुर्धराम्।
दृष्ट्वा स्वचक्षुषा मर्त्त्यो वरदानसमुद्यताम् ॥
यान् यान् कामयते मर्त्त्यस्तांस्तान् कामानवाप्नुयात्।
निष्कामस्तु लभेन्मोक्षं स तेनैव च जन्मना ॥

मण्डलं मण्डलाकारशष्कुलीविशेषः पूरिकादिः। अत्र यावकानीति पाठान्तरम्।

शृणुध्वं भक्तितो यूयं वक्ष्यामि मुनिपुङ्गवाः ।
सर्व्वव्रतानां राजानं धर्म्मव्रतमनुत्तमम् ॥
वृषध्वजेन कथितं शिवेन दयया पुरा ।
प्रीत्या देव्या च पृष्टेन गङ्गातीरनिवासिना ॥
देवैस्तु भुक्तं पूर्व्वाह्णे मध्याह्ने ऋषिभिस्तथा ।
अपराह्णे च पितृभिः शर्व्वर्य्यां गुह्यकादिभिः ॥
सर्व्ववेलामतिक्रम्य नक्तंभोजनमुत्तमम् ॥
उपवासात् परं भैक्ष्यं भैक्ष्यात्परमयाचितम् ।
अयाचितात् परं नक्तं तथा नक्तेन वर्त्तयेत् ॥
हविष्यभोजनं स्नानं सत्यमाहारलाघवम् ।
अग्निकार्य्यमधःशय्यां नक्तंभोजी षडाचरेत् ॥

लाघवमिति-आहारस्तावदर्द्धोदरपूरणः-अर्द्धमन्नेन पूरयेदित्यभिधानात् तस्याप्यर्द्धत्वं लाघवं "समं स्यादश्रुतत्वात्" इति न्यायात्। अग्निकार्य्यं होमः स च घृतेन महाव्याहृतिमन्त्रेण च प्रजापतिदेवताकः ।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

इति कात्यायनवचनात् ।

संख्या चाष्टोत्तरशतमष्टाविंशतिरष्टौ वा ।
होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ॥

इति देवीपुराणवचनात् ।

तथा तत्रैव—

गङ्गातीरे माघमासे यः कुर्य्यान्नक्तभोजनम् ।
शिवायतनपार्श्वे तु क्षपरं घृतसंयुतम् ॥
नैवेद्यञ्च निवेद्यैव क्षपरान्नं शिवस्य तु ।
[1]काष्ठमौलेन भुञ्जानो जिह्वालौल्यं विवर्ज्जयेत् ॥
पलाशपत्रे भुञ्जानः शिवं स्मृत्वा जितेन्द्रियः ।
धर्म्मराजस्य देव्याश्च पृथक् पिण्डं प्रकल्पयेत् ॥
सोपवासश्चतुर्द्दश्यां भवेदुभयपक्षयोः ।
पौर्णमास्यान्तु गन्धैश्च गङ्गायाः सलिलैस्तथा ॥
शिवं संस्थाप्य पयसा मधुना च स्वशक्तितः ।
तथैव [2]हेमपट्टञ्च लिङ्गमूर्द्ध्नि विनिःक्षिपेत् ॥
ततो दद्यात् स्वशक्त्यैव शिवाय घृतकम्बलम् ।
एकाढ़कं कृष्णतिलं शिवलिङ्गोपरि क्षिपेत् ॥
नीलोत्पलैश्च सर्व्वेशं पूजयेत् पङ्कजैरपि ।
अलाभे कारयेद्धेम्ना माषमात्रेण चोत्पलम् ॥
पायसञ्चात्र मधुना घृतयुक्तञ्च गुग्गुलुम् ।
घृतदीपं तथाचैव चन्दनाद्यैर्विलेपनम् ॥
दद्यात् स्वशक्तितो भक्त्या तथा पञ्चफलानि च ।
कृष्णगोमिथुनञ्चैव स्वरूपञ्च निवेदयेत् ॥
भोजयेत् ब्राह्मणानष्टौ मासान्ते तु सदक्षिणान् ।
वर्ज्जयेन्मधुमांसञ्च तं मासं ब्रह्मचर्य्यवान् ॥

---

(१) क ख पुस्तके-काष्ठमौनेन । (२) ग पुस्तके-क्षौमपट्टञ्च ।

एवं कृत्वा यथोद्दिष्टमेकवारमिदं व्रतम् ।
यमनियमसम्पन्नः श्रद्धाभक्तिपरायणः ॥
इह भोगानवाप्नोति प्रेत्य चानुत्तमाङ्गतिम् ।
इन्द्रनीलप्रतीकाशैर्विमानैः शिखिसंयुतैः ॥
दिव्यरत्नमयैश्चैव दिव्यभोगसमन्वितैः ।
गत्वा शिवपुरं रम्यं सर्व्वस्वकुलसंयुतः ॥
सुहृद्भिर्बहुभिश्चैव विविधानप्यभीप्सितान् ।
भुक्त्वा भोगानशेषांश्च यावदाहूतसंप्लवम् ॥
ततो भवति धर्म्मात्मा [1]सप्तद्वीपपतिस्तथा ॥
तत्र भुङ्क्ते समस्तांश्च भोगान् विगतकण्टकः ।
सुरूपः सुभगश्चैव नतिरस्कृतशासनः ॥
सर्व्वरोगविनिर्मुक्तः सोऽप्येतत्फलमाप्नुयात्[2] ।

तथा—

वैशाखे शुक्लपक्षे तु चतुर्द्दश्यां समाहितः ।
शाल्यन्नं क्षीरसंयुक्तं यः कुर्य्यान्नक्तभोजनम् ॥
शिवं सम्पूज्य पुष्पाद्यैर्भोज्यञ्च संनिवेद्य च ।
काष्ठमौलेन[3] भुञ्जानो वटकाष्ठेन वै ततः ॥
मौनेन प्रयतो भूत्वा कुर्य्याद्वै दन्तधावनम् ।
शिवलिङ्गसमीपे तु गङ्गातीरे निशि स्वपेत् ॥

---

(१) ख ग पुस्तकद्वये जम्बुद्वीपपतिः ।
(२) ख पुस्तके-फलभाग्भवेत् ।
(३) क ख पुस्तके-मौनेन ।

पौर्णमास्यां प्रभाते तु गङ्गायां विधिना तथा ।
स्नात्वोपवासं सङ्कल्प्य कुर्य्याज्जागरणं निशि ॥
लिङ्गं घृतेन संस्नाप्य पुष्पगन्धादिभिस्तथा ।
नैवेद्य-धूप दीपैश्च सम्पूज्य वृषभं शुभम् ॥
सुश्वेतवस्त्रपुष्पाद्यैर्हारिद्रै[१]श्चन्दनैस्तथा ॥

हारिद्रं सुवर्णम् ।

अलङ्कृत्य विधानेन शिवाय विनिवेदयेत् ।
ब्राह्मणांश्च यथाशक्ति पायसेन तु भोजयेत् ॥
एवं सकृच्च यो भक्त्या करोति श्रद्धयान्वितः ।
लभते [२]देवपादानां (?) युगानां द्विसहस्रकम् ॥
तपः कृत्वा तु नियमात् यत् पुण्यं तदसंशयम् ।
हंसकुन्दप्रभायुक्तैर्विमानैश्चन्द्रसन्निभैः ॥
सुखेन वृषसंयुक्तैर्मुक्ताजालविभूषितैः ।
स्वकीयपितृभिः सार्द्धं प्रयातीश्वरमन्दिरम् ॥
नीलोत्पलसुगन्धाभिः [३]स्वरूपाभिः समन्ततः ।
कान्ताभिर्दिव्यरूपाभिर्भुञ्जन्[४] भोगानशेषतः ॥
अनन्तकालमैश्वर्य्ययुक्तो भूत्वा ततो भुवि ।
जायते स महीपालः कीर्त्ति-रूपसमन्वितः ॥

---

(१) क पुस्तके—घृताक्तैः ।
(२) ग पुस्तके—पादोनम् ।
(३) क पुस्तके—सुरूपाभिः ।
(४) ख ग पुस्तके—भुक्ता ।

एकच्छत्रेण स मही पालयत्याज्ञया सह ।
अन्ते वैराग्यसम्पन्नः स गङ्गां [1]लभते पुनः ॥
स तया श्रद्धया युक्तो गङ्गाया मरणं लभेत् ।
तथा तत्र [2]स्मृतिं लब्ध्वा मोक्षमाप्नोति स ध्रुवम् ॥

---

## अथ दशहराव्रतम् ।

भविष्ये—

ज्यैष्ठे मासि सिते पक्षे दशम्यां हस्तसंयुते ।
गङ्गातीरे तु पुरुषो नारी वा भक्तिभावतः ॥
निशायां जागरं कृत्वा गङ्गां दशविधैस्तथा ।
पुष्पैर्गन्धैश्च नैवेद्यैः फलैश्च दशसंख्यया ॥
तथैव [3]दीपैस्ताम्बूलैः पूजयेत् श्रद्धयान्वितः ।
स्नात्वा भक्त्या तु जाह्नव्यां दशकृत्वो विधानतः ॥
दशप्रसृति कृष्णांश्च तिलान् सर्पिश्च वै जले ॥
शक्तुपिण्डान् गुडपिण्डान् दद्याच्च दशसंख्यया ।
ततो गङ्गातटे रम्ये हेम्ना रौप्येण वा तथा ॥
गङ्गायाः प्रतिमां कृत्वा वक्ष्यमाणस्वरूपिणीम् ।
पद्मस्वस्तिकचिह्नस्य संस्थितस्य तथोपरि ॥
वद्धस्रग्दामकण्ठस्य पूर्णकुम्भस्य चोपरि ।

---

(१) क पुस्तके—भजते ।   (२) ख पुस्तके स्थितिम् ।
(३) क पुस्तके वस्त्रैः ।

संस्थाप्य पूजयेद्देवीं तदभावे मृदापि वा।
अथ 'तत्राप्यशक्तश्चेत्[1] लिखेत् पिष्टेन वै भुवि॥
चतुर्भुजां सुनेत्राञ्च चन्द्रायुतसमप्रभाम्।
रत्नकुम्भ-सिताम्भोज-वरदा-ऽभयसत्कराम्'[2]॥
श्वेतवस्त्रपरीधानां मुक्ताजालविभूषिताम्।
स्मितवक्त्रां सुकेशाञ्च सर्व्वावयवशोभिताम्॥
चामरैर्वीज्यमानाञ्च श्वेतच्छत्रोपशोभिताम्।
सुप्रसन्नाञ्च वरदां करुणार्द्रनिजान्तराम्॥
सुधाप्लावितभूपृष्ठामार्द्रगन्धानुलेपनाम्।
त्रैलोक्यनमितां गङ्गां देवादिभिरभिष्टुताम्॥
दिव्यरत्नपरीताञ्च दिव्यमाल्यानुलेपनाम्।
ध्यात्वा जले यथाप्रोक्तां तथार्च्चायाञ्च पूजयेत्॥
वक्ष्यमाणेन मन्त्रेण कुर्य्यात् पूजामशेषतः।
पञ्चामृतेन च स्नानमर्च्चायान्तु विशेषतः॥
प्रतिमाग्रे स्थण्डिले तु गोमयेनोपलेपिते।
नारायणं महेशञ्च ब्रह्माणं भास्करन्तथा॥
भगीरथञ्च नृपतिं हिमवन्तं नगेश्वरम्।
गन्धपुष्पादिभिश्चैव यथाशक्ति प्रपूजयेत्॥
दशप्रस्थान् तिलान् दद्यात् [3]दशगोभ्यो गवां[4] हितान्।
प्रस्थः षोड़शपलानीति कल्पतरुः॥

---

(१) ग पुस्तके तत्र प्रशक्तश्चेत्। (२) क पुस्तके-गव्यै।
(२) ख पुस्तके वरदानाभयङ्कराम्। (४) ख पुस्तके-दशविप्रेभ्य एव च।

मत्स्य-कच्छप-मण्डूक-मकरादिजलेचरान् ।
कारयित्वा यथाशक्ति स्वर्णेन रजतेन वा ॥
तदलाभे पिष्टमयानभ्यर्च्य कुसुमादिभिः ।
गङ्गायां प्रक्षिपेदार्घ्यं दीपांश्चैव प्रवाहके ॥
रथयात्रां दिने तस्मिन् विभवे सति कारयेत् ।
रथारूढ़प्रतिकृतेर्गङ्गायास्तूत्तरामुखम् ।
भ्रमन्त्यादर्शनं[1] लोके दुर्लभं पापकर्म्मणाम् ॥
[2]यथा दुर्गारथयात्रा तथैवात्रापि कारयेत् ।
एवं कृत्वा विधानेन वित्तशाठ्यविवर्ज्जितः ।
दशपापैर्वक्ष्यमाणैः सद्य एव विमुच्यते ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः ।
असम्बद्धप्रलापश्च वाचिकं स्याच्चतुर्व्विधम् ॥
परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।
एतैर्दशविधैः पापैर्जन्मकोटिसमुद्भवैः ॥
मुच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा ।
दशत्रिंशच्छतान् पूर्व्वान् पितॄनेव तथा परान् ॥
उद्धरत्येव संसारान्मन्त्रेणानेन पूजयेत् ।
ॐ नमो नारायण्यै दशहरायै गङ्गायै नमोनमः ॥

---

(१) ग पुस्तके-दर्शनम् । (२) ग पुस्तके-पङ्क्तिर्नास्ति ।

इति मन्त्रञ्च यो मर्त्यो दिने तस्मिन् दिवानिशम्।
जपेत् पञ्चसहस्राणि दशधर्म्मफलं लभेत्॥
उद्धरेद्दशपूर्व्वन्तु कुलञ्चैव भवार्णवात्।
वक्ष्यमाणमिदं स्तोत्रं विधिना प्रतिपूज्य च॥
गङ्गाग्रे तद्दिने जप्यं [1]द्विस्तत्पूजां प्रवर्त्तयेत्।
ॐ नमः शिवायै गङ्गायै शिवदायै नमोऽस्तु ते॥
नमोऽस्तु विष्णुरूपिण्यै गङ्गायै ते नमोनमः।
सर्व्वदेवस्वरूपिण्यै नमो भेषजमूर्त्तये॥
सर्व्वस्य सर्व्वव्याधीनां भिषक्श्रेष्ठे नमोऽस्तु ते।
स्थानुजङ्गमसम्भूतविषहन्त्रि नमोऽस्तु ते॥
संसारविषनाशिन्यै जीवनायै नमोनमः।
तापत्रितयहन्त्र्यै च प्राणेश्यै ते नमोनमः॥
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्त्तये।
सर्व्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये॥
भुक्ति-मुक्तिप्रदायिन्यै भद्रायै ते नमोनमः।
भोगोपभोगदायिन्यै भोगवत्यै नमोनमः॥
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमोनमः।
नमस्त्रैलोक्यभूतायै त्रिदशायै नमोनमः।
नमस्त्रिशुक्लसंस्थायै क्षेमवत्यै नमोनमः॥
त्रिदशायनसंस्थायै तेजोवत्यै नमोनमः।
मन्दायै लिङ्गधारिण्यै नारायण्यै नमोनमः॥

---

(१) क ख पुस्तके क्रत्स्नं पूजाम्।

नमस्ते विश्वमित्रायै रेवत्यै ते नमोनमः ।
बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमोनमः ॥
नमस्ते विश्वमुख्यायै नन्दिन्यै ते नमोनमः ।
पृथ्व्यै शिवामृतायै च विरजायै नमोनमः ॥
परापरगताद्यायै तारायै ते नमोनमः ।
पापजालनिकृन्तन्यै अभिन्नायै नमोनमः ॥
शान्तायै ते प्रतिष्ठायै वरदायै नमोनमः ।
उग्रायै सुखजल्पायै सञ्जीवन्यै नमोनमः ॥
ब्रह्मगायै ब्रह्मदायै दुरितघ्न्यै नमोनमः ।
[१]सर्व्वापत्प्रतिपक्षायै मङ्गलायै नमोनमः ॥
प्रणतार्त्तिप्रभञ्जिन्यै जगन्मात्रे नमोनमः ।
निस्तुषायै दुर्गहन्त्र्यै दक्षायै ते नमोनमः ॥
परात्परपरे तुभ्यं नमस्ते मोक्षदे सदा ।
गङ्गा ममाग्रतो भूयाद्गङ्गा मे पार्श्वयोस्तथा ।
गङ्गा मे सर्व्वतो भूयात्त्वयि गङ्गेऽस्तु मे स्थितिः ॥
आदौ त्वमन्ते मध्ये च सर्व्वं त्वं गाङ्गते शिवे ।
त्वमेव मूलप्रकृतिस्त्वं हि नारायणः प्रभुः ।
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥
इतीदं पठति स्तोत्रं नित्यं भक्तिपरो हि यः ।
शृणोति श्रद्धया यश्च कायवाक्चित्तसम्भवैः ॥

---

(१) खपुस्तके-परापत्- ।

दशधासंस्थितैर्दोषैः सर्व्वैरेव विमुच्यते।
रोगस्थो मुच्यते रोगादापद्भ्यश्च विमुच्यते॥
द्विषद्भ्यो बन्धनाद्यैश्च भयेभ्यश्च विमुच्यते।
सर्व्वान् कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते॥
इमं स्तवं गृहे यस्तु लिखित्वापि विनिक्षिपेत्।
नाग्निचौरभयं तस्य पापेभ्योऽपि भयं नहि॥
तस्यां दशम्यामेतत्तु स्तोत्रं गङ्गाजले स्थितः।
जपंश्च दशकृत्वश्च दरिद्रो वापि चाक्षमः॥
सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः।
पूर्व्वोक्तेन विधानेन यत्फलं परिकीर्त्तितम्॥
यथा गौरी तथा गङ्गा तस्माद्गौर्य्याश्च पूजने।
विधिर्योऽभिमतः सम्यक् सोऽपि गङ्गाप्रपूजने॥
यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथा ह्युमा।
उमा यथा तथा गङ्गा चातूरूप्यं न विद्यते॥
विष्णु-रुद्रान्तरं यच्च गङ्गा-गौर्य्यन्तरं यथा।
लक्ष्मीगौर्य्यन्तरं यच्च यो ब्रूते मूढ़धीस्तु सः॥

---

## अथ व्रतप्रयोगः।

कस्यामपि पूर्णिमायां विध्यादिदोषरहितायां कृतनित्य-क्रियः—

ॐ भगवन् सूर्य्य भगवत्यो देवता अद्यादि वर्षं सर्व्वपञ्चदशी-

प्रहरद्वयकालीनगङ्गाधिकरणकपायसादि-प्रक्षेपादि-व्रतमहमाचरिष्यामीति निवेद्य-कुशानादाय---ॐ गङ्गासाक्षात्कारकामोऽद्यादि-सर्व्वं प्रतिपौर्णमासं प्रतिदर्शं प्रहरद्वये गङ्गायां मधुखण्डघृतसहित-पायस बहुपूप-मोदक-मण्डल-गुञ्जार्द्धमितसुवर्ण-रूप्य-चन्दनागुरु-कर्पूर--कुङ्कुमखण्ड--गुग्गुलु बहुनिम्बपत्र बहुदूर्व्वा--गोरोचना सितचन्दन-नीलोत्पल तत्पत्रान्यतमप्रक्षेपमहं करिष्ये। इति संकल्पयेत्।

ततः शालितण्डुलेन प्रस्थमितेन प्रस्थद्वयमितगव्यदुग्ध-साधितेन पायसे निष्पन्ने पलमितं मधु पलमितं खण्डम् पलमितं गव्यघृतञ्च प्रक्षिप्य तत्पायसमपूपत्रयं मोदकत्रयं मण्डलत्रयं वर्त्तिकार्द्धहिरण्यं वर्त्तिकार्द्धरजतं चन्दनमगुरु कर्पूरं कुङ्कुमं चन्दनं गुग्गुलुविल्वपत्राणि दूर्व्वाश्च गोरोचनां सितचन्दनं नीलोत्पलं तत्पत्रं वा सर्व्वमेकस्मिन् पात्रे निधाय तच्च दक्षिणहस्तेनादाय कृतनित्य-क्रियो दिवसमध्ये प्राङ्मुख उपविष्टः पवित्रोपग्रहपाणिराचान्त-स्तन्मनाः श्रद्धया भक्त्या च ॐ गङ्गायै नारायण्यै शिवायै नमो नम इति मन्त्रेणैकदैव गङ्गाप्रवाहे क्षिपेत्।

तत्र इममेव मन्त्रं—गङ्गाजलप्रविष्टो गङ्गां ध्यायन्नष्टोत्तर-शतं जपेत्।

ततस्तद्दिने संयतेन्द्रियो मितहविष्याशी च भवेदेवं प्रतिपञ्च-दशी वर्षपूर्त्तिपर्य्यन्तं भवेत्।

पूर्त्तिदिने चामावस्यात्मके ब्राह्मणत्रयं भोजयेत्।

---

## अथ माघप्रयोगः।

प्रथमदिने प्रातः—ॐ भविष्यपुराणोक्तविधिना अद्यादि-माघं नक्तव्रतमहमाचरिष्यामीति[1] निवेद्य-कुशादिकमादाय—

ॐ ऐहिकबहुभोगोपभोगप्राप्त्यनन्तरानुत्तमगतिप्राप्तीन्द्रनील-प्रतीकाश-शिखिसंयुत-दिव्यरत्नमय-दिव्यभोगसमन्वित बहुविमान-करणकरम्यशिवपुरगमन--तदधिकरणक—सर्व्वस्वकुल---बहुसुहृत्स-हित-यावदाहूतसंप्लवविविधाभीप्सित--बहुभोगोपभोगकामोऽद्यादि-माघं भविष्यपुराणोक्तरीत्या गङ्गातीरे शिवायतनपार्श्वे नक्तव्रत-महमाचरिष्ये—

इति संकल्प्य प्रत्यहं पूर्व्वाह्णे शिवपूजां तिलमुद्गसहितैः श्वेतधान्यतण्डुलैः साधितकृशरनैवेद्यदानसहितां कुर्य्यात् यथोक्तहोमञ्च कुर्य्यात्।

होमश्चायं शिवदेवताको व्रतपर्य्यालोचनेन शिवदेवताकत्वस्या-र्थतोऽतिदेशादिति केचित्।

ततः सायं-सन्ध्योत्तरं कृशरान्नं केवलं पलाशपत्रे कृत्वा शिवं स्मृत्वा—ततश्च-धर्म्मराजाय नमः, दुर्गायै नमः, इति बलिद्वयं दत्वा हुँकारादि निवृत्या[2] भुञ्जीत।

ततो रात्रौ भूमिस्थितायां शय्यायां शयीत। चतुर्द्दश्यामुपवास एव कर्त्तव्यः। पौर्णमास्यान्तु गन्धैर्गङ्गाजलेन दुग्धेन मधुना च अष्टोत्तरशतपलपरिमाणेन तन्न्यूनेनापि यथाशक्त्युपहृतेन शिवं

---

(१) ख पुस्तके—करिष्ये। (२) क पुस्तके—निवृत्त्य।

स्नपयित्वा हेमपट्टं शिवमूर्द्ध्नि दत्त्वा घृतकमलं[1] शक्त्यनुसारेण दत्त्वा एकाढ़कमितान् कृष्णतिलान् शिवलिङ्गोपरि दत्त्वा ततो नीलोत्पलैस्तदभावे एकमाषमितहेमघटितोत्पलैः शिवं सम्पूज्य—ततः समधुपायसं नैवेद्यं तथा सघृतगुग्गुलुधूपं घृतदीपं तथा चन्दनादिविलेपनं तथा तत्र फलमूलादिकं तथा सुरूपं कृष्णगोमिथुनञ्च निवेद्य ततोऽष्टौ ब्राह्मणान् भोजयेत् किञ्चिद्दक्षिणां दद्यादिति।

इमञ्च मासं मधुमांसमैथुनवर्ज्जको यमनियमसम्पन्नः श्रद्धाभक्तिसमन्वितश्च भवेदिति।

---

## अथ व्रतान्तरम्।

वैशाखशुक्लचतुर्द्दश्यां समाहितः पूर्व्वाह्णे शिवं पञ्चोपचारैः सम्पूज्य भोज्यञ्च शिवाय निवेद्य नक्तं शाल्योदनं गव्यदुग्धसहितं महामौनेन भुक्त्वा वटकाष्ठेन महामौनेन दन्तान् संशोध्य गङ्गातीरे शिवलिङ्गसमीपे निशि स्वपेत्।

ततः प्रभाते गङ्गायां सविधि स्नात्वा—

ॐ भगवन् सूर्य्य भगवत्यो देवता अद्य भविष्यपुराणोक्तविधिना उपवासरूपव्रतमहमाचरिष्यामीति निवेद्य—

कुशाद्यादाय ॐ अद्य पादोनयुगसहस्रद्वयपर्य्यन्ततपःकरणजन्यपुण्य-समपुण्यप्राप्ति-हंसकुन्दप्रभायुक्त-चन्द्रसन्निभ-वृषभसंयुक्त-मुक्ताजालविभूषित-बहुविमानकरणक-स्वपितृगणसहितेश्वरमन्दिर-

(१) क पुस्तके—कम्बलम्। (२) क पुस्तके—नीलोत्पलदलैः।

गमन-नीलोत्पलसुगन्धि-सुरूप[1]-बहुकान्तासहितैश्वर्य्ययुक्तस्वकर्तृ-कानन्तकाल-बहुभोगोपभोग-तदुत्तरकीर्त्ति-रूप-समन्वितैकच्छत्रा-ज्ञासहित--महीपालत्वभवनान्तकालिकवैराग्यसम्पन्न--स्वीयगङ्गा--लाभश्रद्धायुक्तगङ्गामरणप्राप्ति---जातिस्मरणपूर्व्वकमोक्षावाप्तिकामो भविष्यपुराणोक्तविधिनोपवासमहं करिष्ये।

इति सङ्कल्प्य तद्दिने उपवासं रात्रौ जागरणञ्च कुर्य्यात्। ततः प्रभातेऽष्टोत्तरशतपलपरिमितगव्यघृतेन शिवलिङ्गं स्नपयित्वा पञ्चोपचारैः सम्पूज्य श्वेतवस्त्र-पुष्प-चन्दन-सुवर्णालङ्कृतं वृषं शिव-वृषौ च सम्पूज्य—

ॐ अद्य इमं वृषभं श्वेतवस्त्र-पुष्प-हारिद्र-चन्दनालङ्कृतं रुद्र-दैवतं शिवायाहं ददे इति दद्यात्।

ततो यथाशक्ति ब्राह्मणान् पायसं भोजयेदिति।

---

## अथ दशहराप्रयोगः।

नवमीरात्रौ जागरणं कृत्वा दशम्यां कृतस्नानादिः—

ॐ अद्य ज्यैष्ठशुक्लदशम्यां हस्तयुक्तायां कोटिजन्मार्ज्जितदश-विधपापनाशकामो भविष्यपुराणोक्तरीत्या [2]दशहरापूजामहं करिष्ये।

इति सङ्कल्प्य गङ्गायां विधिवत्स्नात्वा कृतदेवार्च्चनादिर्गङ्गां दशविधैर्गन्धैः पुष्पैर्धूपैर्दीपैर्नैवेद्यकैः फलैस्ताम्बूलैश्चार्च्चयेदिति।

(१) क पुस्तके—दिव्यरूप—। (२) क पुस्तके—दशहरागङ्गा।

ततो गङ्गायां दशधा सविधि स्नात्वा-ॐ गङ्गायै नम इति मन्त्रेण कृष्णतिलानां दशप्रसृतीस्तथा सर्पिषां दशप्रसृतीस्तथा दश शक्तुपिण्डान् तथा दश गुड़पिण्डांश्च गङ्गायां क्षिपेत् ।

ततो गङ्गातीरेऽष्टदलमालिख्य तत्र वस्त्रमाल्यवेष्टितग्रीवं जलपूर्णं कुम्भं कृत्वा तदुपरि शराविकादौ हैमीं राजतीं[२] वा गङ्गाप्रतिमां चतुर्भुजां रत्नकुम्भ-सिताम्भोज-वरदाभयकृत्करां सुनेत्रां सर्व्वावयवशोभितां श्वेतवस्त्रपरीधानां मुक्ताजालविभूषितां कृत्वा ततोऽतिसौम्याश्चन्द्रायुतसमप्रभां चामरैर्वीज्यमानां श्वेतच्छत्रोपशोभितां सुप्रसन्नां करुणार्द्रहृदयां सुधाप्लावितभूपृष्ठां देवादिभिः स्तुतां दिव्यरत्नपरीधानां दिव्यमाल्यानुलेपनां गङ्गां प्रवाहे प्रतिमायाञ्च ध्यात्वा—

प्रत्येकं द्वात्रिंशद्रत्तिकाधिकतोलकद्वयसहितैकविंशतिपलमितेन गव्येन दुग्धेन दध्ना घृतेन मधुना खण्डितेन च पञ्चामृतं कृत्वा तेन तत्प्रतिमां स्नपयित्वा—

ॐ नमो नारायण्यै दशहरायै गङ्गायै नमो नमः ।

इति पठित्वा इदं पाद्यमेषोऽर्घ्यं इदमाचमनीयं इदं स्नानीयमित्यादि प्रत्येकं दद्यात् ।

ततो गन्धं दत्वा उक्तमन्त्रेण त्रिः सम्पूज्य धूपादि दत्वा प्रतिमाग्रतः स्थण्डिले गोमयेनोपलिप्य नारायणं महेशं ब्रह्माणं भास्करं भगीरथं हिमवन्तञ्च पञ्चोपचारैः सम्पूज्य दशभ्यो विप्रेभ्यो दशतिलप्रस्थान् दद्यात् ।

---

(२) क पुस्तके—मार्त्तिकीम् ।

तथा दशभ्यो गोभ्यो दशयवप्रस्थान् दत्वा मत्स्य-कच्छप-मण्डूक-मकर-शिशुमार-डुण्डुभ-भद्रक--जलौकः-शम्बूक-शङ्खान् दशजलचरान् राजतान् पैष्टकान् वा गन्धादिभिरभ्यर्च्च्य गङ्गायां क्षिपेत्।

ततो दश घृतदीपान् प्रवाहे दद्यात्।

सति विभवे गङ्गाप्रतिमां रथमारोप्य भ्रामयेत्।

ततोऽधिकफलाय—ॐ नारायण्यै दशहरायै गङ्गायै नमो नमः, इति मन्त्रं पञ्चसहस्रकृत्वो जपेत्।

अत्र [1]भवार्णवापादनपूर्व्वकदशकुलोद्धरणं फलम्।

---

## अथ गङ्गायां श्राद्धफलम्।

तत्र भविष्यपुराणे—

गयाश्राद्धं कृतन्तेन उत्सृष्टस्तु वृषस्तथा।
येन तद्वीचिसंसिक्ते तीरे श्राद्धमकारि च॥
तस्यालं तीर्थगमनं शरीरपरिशोधनम्[2]।
येन गङ्गाजले स्नानं कृतं श्राद्धञ्च श्रद्धया॥

तथा—

पितॄनुद्दिश्य यो भक्त्या पायसं मधुसंयुतम्।
गुड़सर्पिःसमायुक्तं गङ्गाम्भसि विनिक्षिपेत्॥
तृप्ता भवन्ति पितरस्तस्य वर्षशतत्रयम्।

---

(१) ग पुस्तके—दशधर्म्मफललाभ इति वाक्यमधिकम्।

(२) क पुस्तके—शोषणम्।

[1]गङ्गा-यमुनयोस्तीरे पयोष्ण्यामरकण्टके।
नर्म्मदायां गयातीर्थे सर्व्वमानन्त्यमश्नुते॥
एषु तीर्थेषु यच्छ्राद्धं तत्कोटि-गुणमिष्यते।
गङ्गायां यत्कृतं तत्तु श्रद्धया चापवर्गदम्॥

ॐ अद्य गयाश्राद्ध-वृषोत्सर्गजन्यफल-समफलप्राप्तिकामो गङ्गावीचिसंसिक्ततीरे श्राद्धमहं करिष्ये।

ॐ अद्य तीर्थगमन-शरीरपरिशोधन[2]जन्यफलसमफलप्राप्ति-कामो गङ्गासमीपे श्राद्धमहं करिष्ये।

ॐ अद्यानन्तपितृतृप्तिकामो गङ्गातीरे श्राद्धमहं करिष्ये।

ॐ अद्य श्राद्धजन्यफलकोटिगुणफलप्राप्तिकामो गङ्गातीरे श्राद्धमहं करिष्ये।

ॐ अद्यापवर्गप्राप्तिकामः श्रद्धया श्राद्धमहं करिष्ये।

ॐ अद्य वर्षशतत्रयावच्छिन्न-पितृतृप्तिकाम इदं पायसं मधु-गुड़-सर्पिःसमायुक्तं गङ्गाम्भस्यहं प्रक्षेप्स्यामीति सङ्कल्प्य सव्येनैव प्राङ्मुख उपविष्टः प्रक्षिपेत्।

---

## अथ गङ्गान्तर्जलमरणफलम्।

तत्र स्मृतिः—

शुक्लपक्षे दिवा भूमौ गङ्गायामुत्तरायणे।
धन्या देहं विमुञ्चन्ति हृदयस्थे जनार्द्दने॥

---

(१) क पुस्तके यमस्रोत— ख पुस्तके विष्णुरिति कृत्वा वचनं लिखितम्।

(२) ग पुस्तके—शोषण।

आग्नेयपुराणे—गङ्गां प्रति विष्णुवाक्यम्—

ये मुञ्चन्ति नराः प्राणांस्तिष्ठन्तः सन्निधौ तव।

ते मे लोकं गमिष्यन्ति पूज्यमाना दिवौकसाम्॥

तत्रैव—

अर्द्धोदके तु जाह्नव्या म्रियतेऽनशनेन यः।

स याति न पुनर्जन्म ब्रह्मसायुज्यमेति च॥

अर्द्धोदकं चरणान्नाभिपर्य्यन्तमुदकम्।

ब्रह्माण्डपुराणे,—

या गतिर्योगयुक्तस्य सत्वस्थस्य मनीषिणः।

सा गतिस्त्यजतः प्राणान् गङ्गायान्तु शरीरिणः॥

[1]अनाशकं गृहीत्वा यो गङ्गातीरे मृतो नरः।

सद्य एव परं मोक्षमाप्नोति पितृभिः सह।

गङ्गायां मरणात् प्राणान् कः प्राज्ञस्त्यक्तुमर्हति॥

गतानि बहुजन्मानि तत्र तत्र मृतानि च।

महांश्चापि गतः कालो यत्र तत्रापि गच्छतः॥

अत्र दूरे समीपे च सदृशं योजनद्वयम्।

गङ्गायां मरणेनेह नात्र कार्य्या विचारणा॥

ब्राह्मे—

अज्ञानतो ज्ञानतो वा कामतोऽकामतोऽपि वा।

गङ्गायान्तु मृतो मर्त्त्यः स्वर्गं मोक्षञ्च विन्दति॥

---

(१) क ख पुस्तके अनशनम्।

भविष्ये—

प्राणेषूत्सृज्यमानेषु गङ्गां यः संस्मरेन्नरः ।

स्मृशेद्वा पापशीलोऽपि स याति परमां गतिम् ॥

भारते— गङ्गां गत्वा यैः शरीरं विसृष्टं

गता धीरास्ते विबुधैः समत्वम् ।

गङ्गासागरमुपक्रम्य—

अन्तरीक्षे क्षितौ तोये पापीयानपि यो मृतः ।

ब्रह्म-विष्णु-शिवैः पूज्यं पदमक्षयमश्नुते ॥

तथा—

उत्क्रामद्भिश्च यः प्राणैः प्रयतः शिष्टसम्मतः ।

चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥

ब्रह्माण्डे,—

यत्र तत्र मृतो वापि मरणे समुपस्थिते ।

भक्त्या गङ्गां स्मरन् याति नरः शिवपुरं मृतः ॥

---

## अथ गङ्गायामस्थिस्थितिफलम् ।

तत्र विष्णुपुराणे,—

शम्भोर्जटाकलापात्तु विनिष्क्रान्तास्थिशर्करा: ।

प्लावयित्वा दिवं निन्ये यान् पापान् सगरात्मजान् ॥

कौर्म्मे—

यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य वै ।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

गङ्गातोयेषु यस्यास्थि नीत्वा संक्षिप्यते नरैः ।
वर्षाणान्तु सहस्राणि तस्य स्वर्गे भवेत् स्थितिः ॥

ब्रह्माण्डपुराणे--

यस्मिन् काले नृणामस्थि गङ्गायां क्षिप्यते नरैः ।
तत्कालमादितः कृत्वा स्वर्गलोके भवेत् स्थितिः ॥

यमः—

गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्म्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कथञ्चन ॥

गौड़ाः--

दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति[१] ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥

## अथास्थिप्रक्षेपप्रकारः ।

तत्र ब्रह्मपुराणे--

स्नात्वा ततः पञ्चगवेन सिक्त्वा
हिरण्य-मध्वाज्यतिलेन योज्यम्[२] ।
ततस्तु मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढ़ाम् ।
नमोऽस्तु धर्म्माय वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ॥

(१) क ख पुस्तकद्वये अस्थिसंस्थितिः ।

(२) ख ग पुस्तकद्वये तिलैर्नियोज्य ।

स्नात्वा तथोत्तीर्य्य च भास्करञ्च
दृष्ट्वा प्रदद्यादथ दक्षिणान्तु ।
एवं कृते प्रेतपुरस्थितस्य
स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ॥

पञ्चगवं पञ्चगव्यम् ।

---

## अथ तीरादिनिरूपणम् ।

तत्र ब्रह्मपुराणे--

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
न तत्र प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि ।

दानधर्म्मे--

भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्द्ध्वं तीरमुच्यते ॥

ब्रह्मपुराणे—

सार्द्धहस्तशतं यावद्गर्भतस्तीरमुच्यते ।

स्कन्दपुराणे—

तीराद्गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते ।
अत्र दानं तपो होमो गङ्गायां नात्र संशयः ॥

उभयतटे प्रत्येकं क्रोशद्वयं क्षेत्रम् ।

तदुक्तं भविष्ये—

गङ्गासीमां न लङ्घन्ति सर्व्वपापान्यशेषतः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ।
एकयोजनविस्ती(र्णा)र्णः क्षेत्रसीमा तटद्वयात् ॥ इति

ब्रह्मपुराणे—

यत्र गङ्गा महाराज शम्भोस्तत्र तपोवनम् ।
सिद्धिक्षेत्रन्तु तज्ज्ञेयं समन्तात्तु द्वियोजनम् ॥

अत्र हस्तचतुष्टयाभ्यन्तरे प्रतिग्रहनिषेधः सर्व्वत्र । सार्द्ध-हस्तशताभ्यन्तरे तत्तीरे तन्निषेधो गण्डक्यादिप्रसिद्धनदीष्विति शिष्टाचारः ।

क्षेत्रे प्रतिग्रहनिषेधस्तु गङ्गायामेव तत्रैव क्षेत्रकथनादिति व्यवस्था ।

मत्स्यपुराणे—

तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्व्वेषु अप्रमत्तो भवेन्नरः ॥
तीर्थे यः प्रतिगृह्णाति पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्व्वेषु क्षेत्रेषु च तथैव च ॥
निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते ।

गङ्गायामन्यदपि तत्रैव—

तीरे प्रतिगृह्णीते तु विक्रीता जाह्नवी भवेत् ।
गङ्गाविक्रयणाद्राजन् विष्णोर्विक्रयणं भवेत् ।
जनार्द्दने तु विक्रीते विक्रीतं भुवनत्रयम् ॥

## अथ तीरमृत्तिकाफलम्।

भारते—

गङ्गातीरसमुद्भूतां मृदं मूर्द्ध्ना[1] बिभर्त्ति यः।

बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्॥

इति श्रीवाचस्पतिमिश्रविरचिते तीर्थचिन्तामणौ

तृतीयो गङ्गाप्रकाशः।

---

वायव्य-गारुत्मत-कल्पवृक्षान् दृष्ट्वा विचार्य्यापि च शास्त्रयुक्त्या।

तनोति नत्वाऽऽदिगदाधराय वाचस्पतिः श्रीपितृतीर्थसंस्थाम्॥

## अथ गयाविधिः।

तत्र कल्पतरौ मत्स्यपुराणे—

पितृतीर्थं गया नाम सर्व्वतीर्थवरं स्मृतम्।

यत्रास्ते देवदेवेशः स्वयमेव पितामहः॥

यत्रैषा पितृभिर्गाथा गीता भोगमभीप्सुभिः।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।

यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

गारुड़े ब्रह्मवाक्यम्—

सारात्सारतरं व्यास गयामाहात्म्यमुत्तमम्।

प्रवक्ष्यामि समासेन भुक्ति-मुक्तिफलप्रदम्॥

गयासुरोऽभवत्पूर्व्वं वीर्य्यवान् परमः स च।

तपोऽतप्यन्महाघोरं सर्व्वभूतोपतापनम्॥

---

(१) ख पुस्तके मूर्द्ध्नि।

तत्तपस्तापिता देवा तद्बधार्थं हरिं गताः।
शरणं हरिरूचे तान् भवितव्यं शिवार्थिभिः[1]।
पातितोऽस्य मया देहे तथेत्यूचुः सुरा हरिम्॥
कदाचित् शिवपूजार्थं क्षीराब्धेः कमलानि च।
आनीय कीकटे देशे शयनञ्चाकरोद्वने॥
विष्णुमायाविमूढ़ोऽसौ गदया विष्णुना हतः।
अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः॥
तस्य देहे लिङ्गरूपी स्थितः शुद्धे[2] पितामहम्।
विष्णुराहाथ[3] मर्य्यादौ पुण्यक्षेत्रं भविष्यति॥
यत्नं श्राद्धं पिण्डदानं स्नानादि कुरुते तु यः।
स स्वर्गं ब्रह्मलोकञ्च गच्छेन्न नरकं नरः॥
गयातीर्थं परं ज्ञात्वा यागञ्चक्रे[4] पितामहः॥
ब्राह्मणान् पूजयामास ऋत्विजः समुपागतान्।
नदीं रसवतीं सृष्ट्वा स्थितां व्याप्य दिशं तथा[5]॥
भक्ष्य भोज्यफलानाञ्च कामधेनुं तथाऽसृजत्।
पञ्चक्रोशं गयातीर्थं ब्राह्मणेभ्यो ददौ प्रभुः॥
धर्म्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम्।
स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा ततः॥

---

(१) ग पुस्तके शिवात्मभिः। (३) क ख पुस्तकद्वये चाहेति।
(२) क पुस्तके शुद्धः। (४) क ख पुस्तकद्वये यज्ञं कृत्वा।
(५) क ख पुस्तकद्वये ततः।

मा भूत्त्रिपुरुषी विद्या मा भूत्त्रिपुरुषं धनम् ।
युष्माकं स्वाहारिवहा नदी पाषाणपर्व्वतात् ॥
अमैस्तु प्रार्थितो ब्रह्माऽनुग्रहं कृतवान् प्रभुः ।
लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः ।
युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥
ब्रह्मज्ञानं गयाश्राद्धं गोग्र(ष्ट)हे मरणं तथा ।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥
समुद्राः सरितः सर्व्वा वापी-कूप-ह्रदानि च ।
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
पापं तत्सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति ॥
असंस्कृता मृता ये च पशु-चौरहताश्च ये ।
सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥
गयायां पिण्डदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥

ब्रह्महत्येत्यादि —यस्य गयाश्राद्धं कृतं तस्य महापातकमपि नश्यतीत्यर्थः । असंस्कृता इत्यादि—

एते हि दुर्गतयो गयाश्राद्धात् सुगतयो भवन्तीत्यर्थः । गयायामित्यादि कर्त्तृगतमिदं फलम् ।

तथा कल्पतरौ वराहपुराणे—सनत्कुमार उवाच—

शृणुष्व वाक्यं नृपतिर्बभूव विशालनामा स पुरीं विशालाम् ।
उवास धन्यां द्युतिमानपुत्रः स्वयं विशालाधिपतिर्द्विजाग्रान् ॥

पप्रच्छ पुत्रार्थममित्रहन्ता तं ब्राह्मणाः प्रोचुरदीनसत्त्वाः।
राजन् पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयायां विधिवत्तु पिण्डैः।
ध्रुवं सुतस्ते भविता नृवीर सहस्रदाता सकलक्षितीशः॥
इतीरिते ब्राह्मणैः सम्प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात्।
समागतस्तीर्थवरं द्विजेश गयामिमां तद्गतमानसः सन्॥
आगत्य सोऽथ प्रवरः[1] सुतार्थी गयाशिरो यागपरः पितॄणाम्।
पिण्डप्रदानं विधिवत् प्रयच्छंस्तावद्दियत्युत्तममूर्त्तियुक्तान्॥
पश्यन् स पुंसः सितरक्तकृष्णानुवाच राजा किमिदं भवद्भिः।
सम्मूह्यते शंसत सर्व्वमेव कुतूहलं मे मनसि प्रवृत्तम्॥

सित उवाच—

अहं सितस्ते जनकोऽस्मि राजन् नाम्ना च वर्णेन च कर्म्मणा च।
अयञ्च मे जनको रक्तवर्णो नृशंसकृद्ब्रह्महा पापकारी॥
आन्धेश्वरः शृणु परः पिताऽस्य कृष्णो नाम्ना कर्म्मणा वर्णतश्च।
एतेन कृष्णेन हताः पुरा वै जन्मान्यनेकान्यृषयः पुराणाः॥
एतौ मृतौ द्वावपि पितृ-पुत्राववीचिकं नरकं संप्रविष्टौ।
आन्ध्रेश्वरोऽयं जनकः पुरोऽहं तत्कृष्ण-रक्तावपि दीर्घकालम्।
अहञ्च शुद्धेन निजेन कर्म्मणा शक्रासनं प्राप्य सुदुर्लभं ततः॥
त्वया पुनर्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च।
मोचायितौ तीर्थवरप्रसादादवीचिसंज्ञं नरकं गतौ तौ॥

पितॄन् पितामहांश्चैव तथैव प्रपितामहान्।
प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम॥

---

(१) ख पुस्तके प्रवरम्।

तेनास्मद्युगपद्भोगो[1] जातो वाक्येन सत्तम ! ।
तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः ॥
तत्र पिण्डप्रदानेन एतौ तव पितामहौ ।
दुर्गतावपि संसिद्धौ पापाद्विक्लतलिङ्गकौ ॥
एतस्मात् कारणात् पुत्र अहमेतौ प्रगृह्य च ।
आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि साम्प्रतम् ॥

तथा—

तीर्थप्रभावाद्यत्नेन ब्रह्मघ्नस्यापि सत्तम ।
पितुः पिण्डप्रदानेन कुर्य्यादुद्धरणं सुतः ॥

एवञ्च महापातकिनोऽपि श्राद्धोद्देश्यत्वात् गयाश्राद्धेन सद्गतिर्भवति कर्त्तुः पुत्रकामत्वे पुत्रोऽपि भवतीति प्रघट्टकतात्पर्य्यम् ।

पितॄनित्यादि—एवञ्च अमुकगोत्रः पिता अमुकदेवशर्म्मा तृप्यतामेतत्तिलोदकं तस्मै स्वधा पितरं प्रीणयामीति तर्पणवाक्यं कार्य्यम् ।

एवं पितामहादौ [2]राजतर्पणपर्य्यन्तं सर्व्वाञ्जलिषु प्रयोज्यम् ।

पितॄनिति बहुवचनं मूलेऽविवक्षितमिति सम्प्रदायः ।

तथा—सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम् ।
दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ॥

तत्रैव ब्रह्मपुराणे—

क्रियते पतितानान्तु गते संवत्सरे क्वचित् ।
देशधर्म्म-प्रमाणत्वाद्गयाकूपेषु बन्धुभिः ॥

---

(१) ग पुस्तके— योगः । (२) ख पुस्तके— बीज ।

तत्रैव वामनपुराणे—

प्रेतराजोऽथ वणिजं कश्चित्प्राह सुमुक्तये ।
गयायां तीर्थजुष्टायां स्नात्वा [1]शौचसमन्वितः ॥
मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु ।
तव पिण्डप्रदानेन प्रेतभावादहं सुखम् ॥
मुक्तस्तु [2]सर्व्वदातॄणां प्राप्स्यामि शुभलोकताम् ।
इत्येवमुक्त्वा वणिजं प्रेतराजोऽनुजैः[3] सह ॥
स्वनामानि यथान्यायं सम्यगाख्यातवान् रहः ।
उपार्ज्जयित्वा प्रययौ गयाशिरसमुत्तमम् ॥
पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्व्वशः ।
चकार वसुदायः स्वान् पितॄंश्चक्रे[4] त्वनन्तरम् ॥
आत्मनश्च महाबुद्धिर्महाबोधौ तिलैर्विना ।
पिण्डनिर्वपणं चक्रे तथाऽन्यानपि [5]गोत्रजान् ।
एवं दत्तेषु पिण्डेषु वणिजा प्रेतभावतः ॥
विमुक्तास्ते द्विज प्रेता ब्रह्मलोकं ततो गताः ॥

गयाशिरसमिति—-एवञ्च गयाशिरसि प्रेताय पिण्डे दत्ते तस्य प्रेतत्वविमुक्ति-ब्रह्मलोकावाप्ती-भवत इति ।

आत्मन इति स्वपिण्डदानम् । पिण्डदानं सव्येनैव—-

मन्त्रेण चात्मनोऽन्येषां सव्येनापि तिलैर्विना ।

---

(१) मूले—तिल— ।
(२) ख पुस्तके—नृणाम् । ग पुस्तके सर्व्वदान्दद्यम् । (४) मूले महावेद्याम् ।
(३) मूले गणैः । (५) मूले तथान्येषाञ्च गोत्रिणाम् ।

इति वायुपुराणात्। तथा—

आनन्त्याय भवेद्दत्तं खङ्गिमांसं पितृक्षये।
कृष्णो लोहस्तथा छाग आनन्त्याय प्रकल्पते॥
गयायामक्षयं श्राद्धं जप-होम-तपांसि च।
पितृक्षयो हि तत्पुत्र तेन तत्राक्षयं भवेत्॥

बृहस्पतिः—

काङ्क्षन्ति पितरः पुत्रान् नरकाद्भयभीरवः।
गयां यास्यति यः पुत्रः सोऽस्मान् सन्तारयिष्यति॥
गयायां धर्म्मपृष्ठे च सदसि ब्रह्मणस्तथा।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम्॥
ब्रह्मारण्यं धर्म्मपृष्ठं धेनुकारण्यमेव च।
दृष्ट्वैतानि पितॄंश्चार्च्य वंशान् विंशतिमुद्धरेत्॥

वायुपुराणे—

महाकल्पकृतं पापं गयां प्राप्य विनश्यति।

तथा—गयायां धर्म्मपृष्ठे च सदसि ब्रह्मणस्तथा।
गवि गृध्रवटे चैव श्राद्धं दत्तं महाफलम्॥
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृते।
मतङ्गस्य पदं तत्र दृश्यते सर्व्वमानुषैः॥
ख्यापितं धर्म्मसर्व्वस्वं लोकस्यास्य निदर्शनात्।
तत्पङ्कजवनं पुण्यं पुण्यकृद्भिर्निषेवितम्॥
यस्मिन् पाण्डुविंशत्येव तीर्थं सर्व्वनिदर्शनम्।
तृतीयायां तथा पादे निःक्षीरायाश्च मण्डले॥

महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम्।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता॥
बहुवर्षशतं[1] तप्तं तपस्तीर्थेषु दुष्करम्।
अल्पेनाप्यत्र कालेन नरो धर्म्मपरायणः॥
पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः।
नाम्ना [2]कणखलन्देवतीर्थं जगति विश्रुतम्॥
उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम्।
तत्र स्नात्वा दिवं यान्ति स्वशरीरेण मानवाः॥
दत्तञ्चापि सदा श्राद्धमक्षयं समुदाहृतम्।
स्नात्वा दिनत्रयं तत्र निःक्षीरायां द्विजोत्तमः॥
मानसे सरसि स्नात्वा श्राद्धं निर्वर्त्तयेन्नरः।

मानसे दक्षिणमानसे।

उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम्॥
तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम्।
कामान् स लभते दिव्यान् मोक्षोपायांश्च कृत्स्नशः॥

एवञ्च—मुण्डपृष्ठोदीचीसंस्थायां निःक्षीरायां दिनत्रयं स्नात्वा दक्षिणमानसे श्राद्धं कृत्वा उत्तरमानसे तत्कार्य्यमिति वक्तुरर्थः।

वायुपुराणान्तरे तु यदेतद्विपरीतमुक्तं तत्कल्पान्तरम्।

महाभारते पुलस्त्यतीर्थयात्रायाम्—

ततो गयां समागत्य ब्रह्मचारी जितेन्द्रियः।
अश्वमेधमवाप्नोति गमनादेव भारत॥

---

(१) ख पुस्तके बहून् वर्षशतान्। (२) ख पुस्तके कनकनन्देति।

यत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत ॥
महानद्यामुपस्पृश्य तर्पयेत् पितृदेवताः।
तेनाक्षयान् पितॄन् लोकान् कुलञ्चैव समुद्धरेत् ॥
ततो ब्रह्मसरो गच्छेद्‌ब्रह्मारण्योपशोभितम्।
ब्रह्मलोकमवाप्नोति प्रभातामिव शर्व्वरीम् ॥
ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः।
यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम्।
एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकाम् ॥
सर्व्वपापविशुद्धात्मा सोमलोकं व्रजेद्‌ध्रुवम्।
तत्र चिह्नं महाराज अद्यापि महदद्भुतम् ॥
कपिला सहवत्सा वै पर्व्वते विचरत्युत।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि तत्र वै ॥
तेषु तेषु तु राजेन्द्र पदेषु नृपसत्तम।
यत्किञ्चिदशुभं कर्म्म तत्प्रणश्यति भारत ॥
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः।
स्नायीत (?) भस्मना तत्र अभिगम्य वृषध्वजम् ॥
ब्राह्मणानां भवेद्चीर्णं व्रतं द्वादशवार्षिकम्।
इतरेषान्तु वर्णानां सर्व्वं पापं प्रणश्यति ॥
उद्यन्तञ्च ततो गच्छेत् पर्व्वतं गीतनादितम्।
सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥

तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः।
उपासीना भवेत् सन्ध्या तेन द्वादशवार्षिकी ॥
योनिद्वारञ्च तत्रैव विद्यते भरतर्षभ।
तत्राभिगम्य मुच्येत पुरुषो योनिसङ्कटात् ॥
शुक्ल कृष्णावुभौ पक्षौ गयायां यो वसेन्नृपः।
पुनात्यासप्तमञ्चैव कुलान्यत्र न संशयः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥
ततः फल्गुं व्रजेद्राजन् तीर्थसेवी नराधिपः।
अश्वमेधमवाप्नोति सिद्धिञ्च परमां लभेत् ॥
ततो गच्छेत राजेन्द्र धर्म्मपृष्ठं महाफलम्।
तत्र धर्म्मो महाराज नित्यमास्ते युधिष्ठिर ॥
अभिगम्य ततस्तत्र वाजिमेधफलं लभेत्।
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ॥
तत्राधिगम्य राजेन्द्र ब्रह्माणं भरतर्षभ।
राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥

महानदी-ब्रह्मसरो-धेनुक-गृध्रवटोद्यन्त-धर्म्मपृष्ठ-ब्रह्मतीर्थानां सप्तानां क्रमेण गमनं कार्य्यमिति प्रघट्टकार्थः।

तथा धौम्यतीर्थयात्रायाम्—

पूर्व्वं प्राचीदिशं राजन् राजर्षिगणसेविताम्।
रम्यां ते कथयिष्यामि युधिष्ठिर यथास्मृति ॥
यस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः।

शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः॥
यदर्थं पुरुषव्याघ्र कीर्त्तयन्ति पुरा स्मृतीः।
एष्टव्याः बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्॥
उत्तारयति सन्तप्तान् दशपूर्व्वान् दशावरान्।
महानदी [1]महादेवस्तथा गयशिरो नृप॥
यत्रासौ कीर्त्त्यते विप्रैरक्षय्यकरणो वटः।
तत्र दत्तं पितृभ्योऽन्नमक्षयं भवति प्रभो॥
सा च पुण्यजला तत्र फल्गुनामा महानदी।
बहुमूलफला चापि कौशिकी भरतर्षभ॥

तथा लोमशतीर्थयात्रायां—

ततो महीधरं जग्मुर्धर्म्मज्ञेनाभिरक्षितम्।
राजर्षिणा पुण्यकृता गयेनाप्युपयुज्यते।
सरो गयशिरो यत्र पुण्या चैव महानदी॥
ऋषिजुष्टं महापुण्यं तीर्थं ब्रह्मसरोरुहम्॥
अगस्त्यो यत्र भगवान् गतो वैवस्वतं प्रति।
उवास सततं यत्र धर्म्मराजः[2] सनातनः॥
सर्व्वासां सरितां यत्र समुद्भेदो विशां पते।
यत्र सन्निहितो नित्यं महादेवः पिनाकधृक्॥
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे।
ऋषियज्ञेन महता यः सोऽक्षय्यवटो महान्॥

---

(१) क ख पुस्तकद्वये ब्रह्मतीर्थम्। (२) क पुस्तके धर्म्मो राजा।

तत्र बलभद्रतीर्थयात्रायाम्—

गजस्य यजमानस्य गयस्येव महाक्रतुः।

आहूता तु सरिच्छ्रेष्ठा गययज्ञे सरस्वती।

विशालान्तु गयेष्वाहुर्ऋषयः संशितव्रताः॥

गयस्येति-गजयज्ञस्य तेनैवोपमानमिति प्रशंसार्थम्।

तत्राङ्गिरसयात्रायाम्—

मुण्डपृष्ठं गयाञ्चैव नैरृतं देवपर्व्वतम्।

तृतीयां क्रौञ्चपादीञ्च ब्रह्महत्या विमुच्यते॥

वामनपुराणे—प्रह्लादयात्रायाम्—

गयायां गोपतिं द्रष्टुं स जगाम महासुरः।

सरसि ब्रह्मणः स्नात्वा गत्वा चास्य प्रदक्षिणम्॥

पिण्डनिवर्पणं पुण्यं पितॄणां स चकार ह।

नरसिंहपुराणे—

शिवनद्यां शिवकरं गयायाञ्च जनार्द्दनम्।

सर्व्वत्र परमात्मानं यः पश्यति स मुच्यते॥

शिवनदी विहारनगरोपपण्ठेऽस्ति।

मत्स्यपुराणे—

गौरीस्नानप्रतिपादनप्रस्तावे च—

वाराणस्यां विशालाक्षी प्रयागे ललिता तथा।

गयायां मङ्गला नाम कृतशौचेति सैंहिका॥

याज्ञवल्क्यः—

यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते।

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्य्यात् समाहितः ॥

यमः—

एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

वशिष्ठः—

नन्दन्ति पितरस्तेन सुवृष्टेनेव कर्षकाः ।
यद्गयास्थो ददात्यन्नं पितरस्तेन पुत्रिणः ॥

इति कल्पतरौ तीर्थकाण्डे गयामाहात्म्यम् ।

---

प्रेतशिलाकल्पे वायुपुराणम्—

आच्छादितशिलापादः प्रभासेनाद्रिणा ततः ।
प्रभासो मुनिभिर्वृष्टः[1] शिलाङ्गुष्ठो विनिर्गतः ॥
अङ्गुष्ठस्थित ईशोऽपि प्रभासेशः प्रकीर्त्तितः ।
शिलाङ्गुष्ठैकदेशो यः सा च प्रेतशिला स्थिता ॥
पिण्डदानाद्यतस्तस्यां प्रेतत्वान्मुच्यते नरः ।
महानदी-प्रभासाद्र्योः सङ्गमे स्नानकृन्नरः ॥
रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतम् ।
प्रार्थितोऽथ महानद्या राम स्नातो भवान् यदि ॥

---

(१) क ख पुस्तकद्वये तुष्टः । मूलपुस्तके प्रभासं हि विनिर्भिद्य ।

रामतीर्थं भवत्वत्र सर्व्वलोकेषु पावनम्।
जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया॥
तत्सर्व्वं विलयं यातु रामतीर्थाभिषेचनात्।
मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्व्वीत मानवः॥
रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसौ।
तथेत्युक्त्वा स्थितो रामः सीतया भरताश्रमे॥
रामतीर्थे नरः स्नात्वा मन्त्रैः पिण्डप्रदो भवेत्।
प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः॥

रामेत्यादि पूर्व्ववत्।

नमस्कृत्य प्रभासेशं भासमानः शिवं व्रजेत्।

तथा—

आगत्य च[1] नमस्कृत्य कुर्य्याद्यामबलिन्ततः।
आपस्त्वमसि देवेश ज्योतिषां पतिरेव च॥
पापं नाशय देवेश मनो-वाक्काय-कर्म्मजम्।
शिलायां जघनं भूयः समाक्रान्तं नगेन च॥
धर्म्मराजेनाद्रिरुक्तो न गच्छेति नगः स्मृतः।
यमराज-धर्म्मराजौ निश्चयेनेरितौ स्मृतौ॥
ताभ्यां बलिमकृत्वा स्याद्गयाश्राद्धमसार्थकम्॥
श्वानौ द्वौ श्याव-शवलौ वैवस्वतकुलोद्भवौ।
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ॥

आच्छादित इति—शिलायाः प्रेतशिलायाः पादः प्रभासनाम-

(१) क ख पुस्तकद्वये तत्र गम्यम्।

केनाद्रिणाच्छादितः । तत्र प्रभासशिलाङ्गुष्ठो हि निर्गतः । तदङ्गुष्ठस्थित ईशोऽपि प्रभासेशस्तच्छिलाङ्गुष्ठैकदेशो यः प्रभासेशसहितः सैव प्रेतशिला तस्यां यदीयः पिण्डो दीयते तस्य प्रेतत्वविमुक्तिर्भवतीति वर्त्तुलार्थः ।

महानदीति—महानदी-प्रभासाद्र्योः सङ्गमे स्नानकृदपि प्रेतत्वान्मुच्यते इत्यर्थः ।

जन्मान्तरेति—अनेन मन्त्रेण स्नात्वा य इह रामेशसन्निधाने पिण्डं श्राद्धं वा करोति स विष्णुलोकं गच्छतीत्यर्थः ।

राम रामेति—

राम राम महाबाहो देवानामभयङ्कर ।
[1]त्वाऽनुगम्येऽत्र देवेशं मम नश्यतु पातकम् ॥

इति रामो नमस्कार्य्य इत्यर्थः ।

पिण्डप्रद इति—पित्रादिप्रेतत्वविमुक्त्यनन्तरतत्त्पितृत्वप्राप्तिकामेन तत्र पित्रादिपिण्डदानं कर्त्तव्यमित्यर्थः ।

नमस्कृत्येति—भासमानात्मकर्त्तृकशिवव्रजनकामनया प्रभासेशनमस्कारः कार्य्य इत्यर्थः ।

तञ्चेति—तं रामं च समुच्चये तेन पुनरपि राम-प्रभासेशौ नमस्कार्य्यावित्यर्थः ।

याम्यबलिमिति—ततः प्रभासपर्व्वते—

आपस्त्वमसि देवेश ज्योतिषाम्पतिरेव च ।
पापं नाशय देवेश मनोवाक्कायकर्म्मजम् ॥

---

(१) क पुस्तके त्वां नमस्येऽहं देवेश ।

इति पठित्वा यमायैष बलिर्नम इति कुशजलैर्देय इत्यर्थः। शिलायामित्यस्यां प्रेतशिलायां जघनमङ्ग[1] नगनाम्ना पर्व्वतेन समाक्रान्तं तस्य च नगनामपर्व्वतस्य स्थिरीकरणाय तदुपरि यमराजभ्रमराजौ स्थापितौ।

अतः प्रेतशिलादक्षिणभागस्थतज्जघनस्थे नगनाम्नि पर्व्वते गयाश्राद्धसाफल्यकामनया श्वानौ द्वौ इति श्लोकद्वयं पठित्वा यमराज-भ्रमराजाभ्यामेष बलिर्नम इति ताभ्यामेको बलिर्देय इति।

---

## एतदन्तम्[2] प्रथमदिनकृत्यम्।

प्रेतत्वविमोचकप्रेतशिलाश्राद्धपरिकरत्वादिति। स्नात्वेति-भरताश्रमे महानद्यां स्नात्वा रामेशं रामं सीताञ्च दृष्ट्वा नत्वा राम राम महाबाहो इति पठेदित्यर्थः। अत्र प्रथमदिने प्रेतशिलाकर्म्म सकलदेशीयशिष्टाचारात्।

तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च।
पितॄणावाह्य तेभ्यश्च मन्त्रैः पिण्डांस्तु निर्वपेत्॥

इति वायुपुराणे प्रेतशिलायाः प्रथमोल्लेखाच्चेति।

एतच्च प्रेतपर्व्वतोक्तेतिकर्त्तव्यतया करणीयम्।

सर्व्वस्थानेषु चैवं स्यात् पिण्डदानन्तु नारद।

इति वायुपुराणवचनेन तदितिकर्त्तव्यतातिदेशात्।

---

(१) क पुस्तके मध्याङ्गम्। (२) ग पुस्तके एतदनन्तरम्।

तथाच प्रेतपर्व्वतकृत्ये वायुपुराणम्—

कृत्वात्मानं पितॄणान्तु प्रयतः प्रेतपर्व्वते ।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखः स्मरेत् ॥
कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥
आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ।
मदीयाः पितरो ये च कुले जाताः सनाभयः ॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ।
ते सर्व्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥
आचम्योत्थाय पञ्चाङ्गं प्राणानायम्य यत्नतः[1] ।
पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ।
एवं संकल्प्य विधिवच्छ्राद्धं कुर्य्याद्यथाक्रमम् ।
पितॄणावाह्य चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ।
तीर्थे प्रेतशिलादौ च चरुणा सघृतेन च[2] ।
प्रक्षाल्य पूर्व्वं तत् स्थानं पञ्चगव्यैः पृथक् पृथक् ॥

तथा—

दत्त्वा श्राद्धं सपिण्डानां तेषां दक्षिणभागतः ।
कुशैरास्तीर्य्य तेषान्तु सकृद्दत्त्वा तिलोदकम् ॥
गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः ।
शक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम् ॥

---

(१) मूले प्राणायामं प्रयत्नतः ।    (२) मूले वा ।

तिलाज्यदधिमध्वादि पिण्डद्रव्येषु योजयेत्।
सम्बन्धिनस्तिलाद्भिश्च कुशेष्वावाहयेत्ततः।
एतांस्तु सर्व्वमन्त्रांश्च स्त्रीलिङ्गान्तान् समूह्य च।
पिण्डान् दद्याद्यथापूर्व्वं पितॄणावाह्य पूर्व्ववत्॥
स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातने।
अपृथङ्‌निष्फलं श्राद्धं पिण्डश्चोदकतर्पणम्॥
पिण्डपात्रे तिलं दत्त्वा पूरयित्वा शुभोदकैः।
मन्त्रेणानेन पिण्डांस्तान् प्रदक्षिणकरं यथा॥
परिषिञ्चयेत्त्रिधा सर्व्वान् प्रणिपत्य क्षमापयेत्।
पितॄन् विसृज्य चाचम्य साक्षिणः श्रावयेत् सुरान्।
सर्व्वस्थानेषु चैवं स्यात् पिण्डदानन्तु नारद॥ इति।

कृत्वात्मानमिति—प्रक्षालितपाणिपाद आचान्तः कृताप-सव्यो दक्षिणामुखः कव्यवाल इत्यादि शाश्वतमित्यन्तं मन्त्रं पठित्वा पित्रावाहनरूपं पठेदित्यर्थः।

आचम्येति सव्येनाचम्य—ॐकारव्याहृतिसप्तकगायत्री शिर ॐकाररूपकपञ्चाङ्गजपसहितान् सन्ध्यावन्दनवत्पूरक-कुम्भक-रेचक-प्राणायामान् कुर्य्यादित्यर्थः।

सर्व्वस्थानेष्विति—उपदेशविषये सर्व्वत्रेयमितिकर्त्तव्यताऽति-देशात्सिद्धेत्यर्थः।

वायव्ये—

गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने अस्ते च गुरु-शुक्रयोः॥

न त्यजेत गयाश्राद्धं सिंहस्थेऽपि वृहस्पतौ।

दर्शं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः॥

न्यस्य विष्णुपदे दर्शं मुच्यते पितृभिः सह॥

पायसेन गयायाञ्च शक्तुना पिष्टकेन वा।

चरुणा तण्डुलाद्यैर्वा पिण्डदानं विधीयते॥

मुण्डपृष्ठशिलामधिकृत्य तत्रैव—

तां दृष्ट्वा सर्व्वलोकश्च महापापोऽतिपातकी।

पूतः कृत्याधिकारी च श्राद्धकृद्ब्रह्मलोकभाक्॥

तदयमनुष्ठानक्रमः—

प्रथमदिनेऽश्वमेधसहस्रजन्यफलविलक्षणफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये। इति संकल्प्य स्नायात्।

तदुक्तं स्नानाधिकारे वायुपुराणे—

अश्वमेधसहस्राणां सहस्रं यः समाचरेत्।

नासौ न तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात्॥ इति।

तर्पणन्तु—ॐ अद्यामुकगोत्रोऽस्मत्पिता अमुकदेवशर्म्मा तृप्यतामिदं तिलोदकं तस्मै स्वधा पितरं प्रीणयामीति।

तदुक्तं कल्पतरौ वराहपुराणे—

प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम।

तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम॥ इति।

स्वधोदीरणानन्तरञ्च पितरं प्रीणयामीति योज्यमागन्तुकानामन्तेऽभिनिवेशात्।

ततो देवार्च्चनादि कृत्वा अद्य तीर्थप्राप्तिनिमित्तकपार्व्वणश्राद्ध-

महं करिष्ये इति संकल्प्यार्घ्यावाहनरहितं खगृह्योक्तरीत्या पार्व्वणं कुर्य्यात्। तदसम्भवे पिण्डदानमपि तद्रीत्यैव कार्य्यम्।

पिण्डदानं ततः शस्तं पितॄणाञ्चातिदुर्लभम्।
विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत्॥

इति वचनात्।

ततस्तद्दिन एव महानदीपश्चिमकूललग्नां गयोत्तरस्थां प्रेतशिलां गत्वा तत्कर्म्म कर्त्तव्यम्।

तद्यथा—

प्रेतशिलायां कृतपञ्चभूसंस्कारायाम् आचान्त उपविश्य कृतापसव्यो दक्षिणामुखो भूत्वा ॐ कव्यवाल इत्यादि शाश्वतीमित्यन्तं पठित्वा सव्यं कृत्वा आचम्य सन्ध्यावन्दनवत्प्राणायामान् कृत्वा पुण्डरीकाक्षस्मरणेन श्राद्धीयद्रव्याणि कुशोदकेन प्रोक्ष्य—ॐ अद्यामुकगोत्राणां पितृ-पितामह-प्रपितामहानाममुकामुकदेवशर्म्मणाम् अमुकगोत्राणां मातृ-पितामही-प्रपितामहीनाम् अमुकामुकदेवीनाममुकगोत्राणां मातामह-प्रमातामह-वृद्धप्रमातामहानाममुकामुकदेवशर्म्मणाम् अमुकगोत्राणां मातामही-प्रमातामही-वृद्धप्रमातामहीनाममुकामुकदेवीनां प्रेतत्वविमुक्तिकामः प्रेतशिलायां श्राद्धमहं करिष्ये।

इति संकल्प्य द्वादशदैवतं श्राद्धं पार्व्वणेतिकर्त्तव्यताकं कुर्य्यात्।

हेमाद्रिमते तु मातामह्यादिवर्ज्जं शेषं पूर्व्ववत्। जयशर्म्मादिमते प्रकृतमेव पार्व्वणं किन्तु सपत्नीकत्वेन षण्णामपि देवतात्वमिति।

सम्प्रदायमते षस्यां पुंसामिह देवतात्वं न तु स्त्रीणामिति न च सपत्नीकत्वेनापीति। उभयमतमप्यसत्।

अन्वष्टकायां वृद्धौ च गयायाञ्च मृताहनि।
मातृश्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह॥

इति वायुपुराणविरोधादिति।

एवं दक्षिणादानान्तं पार्व्वणं विधाय तद्वेदिदक्षिणत उपविश्य कृतापसव्यो दक्षिणामुखः कुशत्रयं धृत्वा कव्यालोऽनल इत्यादि-शाश्वतीमित्यन्तं पठित्वा तेषु कुशेषु सक्तुतिलोदकाञ्जलिरूप-मावाहनं कुर्य्यात्।

तत एतानि पाद्यादीनि ॐ पित्रादिभ्यो नम इति क्रमेण पञ्चोपचारेण पित्रादीन् सम्पूज्य—

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षि-पितृ-मानवाः।
तृप्यन्तु पितरः सर्व्वे मातृ-मातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्॥

इति पूर्व्ववदञ्जलिदानरूपमिलितपित्राद्यावाहनं कृत्वा ॐ अद्यामुकगोत्र पितरमुकदेवशर्म्मन्नेष ते पिण्डः स्वधेति [1]मधुतिलमिश्रं पायसाद्यन्यतमपिण्डं पित्रे एवं पितामहादिभ्य एकादशभ्योऽपि यथादक्षिणं दद्यात्। ततस्तद्दक्षिणत उपविश्य समूलान् दक्षि-णाग्रान् कुशानास्तीर्य्य ॐ कव्यवाल इत्यादि शाश्वतीमित्यन्तं पूर्व्ववत्पठित्वा सक्तुतिलोदकदानरूपमावाहनं कृत्वा पूर्व्ववदभ्यर्च्य

(१) ग पुस्तके जलमधुमिश्रम्।

आब्रह्मस्तम्बपर्य्यन्तमित्यादिना सतिलाञ्जलिदानरूपं पूर्व्व-वदावाहनं कृत्वा—

ॐ पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥

इति पौराणिकं मन्त्रमुच्चार्य्य तिल-घृत-दधि-मधु-जलयुतं मुष्टिमितशक्तुकृतं मिलितेभ्यो द्वादशभ्य एकं पिण्डं दद्यात् ।

ततः षोड़शीकर्म्म तद्यथा—

ऊनविंशति[1] पिण्डस्थानानि यथादक्षिणं कृतानि प्रत्येकं यथा-दक्षिणं पञ्चगव्यैरालिप्य तेषु पूर्व्ववद्दक्षिणाग्रं कुशत्रयं धृत्वा—

ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे[2] तिलोदकैः ।
ॐ मातामहकुले ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे[2] तिलोदकैः ॥
ॐ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे[2] तिलोदकैः ॥

इति पौराणिकमन्त्रैरास्तृतदर्भेषु तानावाह्य गन्धादिभि-रभ्यर्च्य ( यदि देवतापदे षोड़शी क्रियते तदा तद्देवतामन्त्रेण तामपि सम्पूज्य ) ॐ आब्रह्मस्तम्बपर्य्यन्तमित्यादिश्लोकाभ्यां पूर्व्व-

(१) क ख पुस्तकद्वये द्वात्रिंशमान इत्यधिकम् ।

(२) ग पुस्तके दर्भपदस्थाने कुशपदम् ।

वदेकवारं तत्र तिलोदकाञ्जलिदानं कृत्वा मूलादितः पिण्डान् दद्यात् ।

तत्र क्रमः,—

ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ (१)
ॐ मातामहकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ (२)
ॐ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ (३)
ॐ अजातदन्ता ये केचिद् ये च गर्भे प्रपीड़िताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ (४)
ॐ अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे ।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ (५)
दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये ।
दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ॥ (६)
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ।
आत्मनो घातिनो[1] ये च तेभ्यः पिण्डं ददाम्यहम् ॥ (७)
अरण्ये वर्त्मनि वने क्षुधया तृषया हताः ।
भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम् ॥ (८)
रौरवे चान्धतामिस्रे कालसूत्रे च ये मृताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ (९)

---

(१) ग पुस्तके चात्मोपघातिनः ।

अनेकयातनासंस्थाः प्रेतलोकञ्च[1] ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ (१०)
अनेकयातनासंस्था ये नीता यमकिङ्करैः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ (११)
नरकेषु समस्तेषु यातनासु च ये स्थिताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ (१२)
पशुयोनिगता ये च पक्षिकीटसरीसृपाः।
अथवा [2]वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम्॥ (१३)
जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा।
मानुष्यं दुर्ल्लभं येषां तेभ्यः पिण्डं ददाम्यहम्॥ (१४)
दिव्यन्तरीक्षभूमिष्ठाः पितरो बान्धवादयः।
असंस्कृतमृता[3] ये च तेभ्यः पिण्डं ददाम्यहम्॥ (१५)
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु पिण्डदानेन सर्व्वदा॥ (१६)
येऽबान्धवा बान्धवा ये येऽन्यजन्मनि बान्धवाः।
तेषां पिण्डो मया दत्तो[4]ऽक्षय्यमुपतिष्ठताम्॥ (१७)
पितृवंशे मृता ये च मातृवंशे च ये मृताः।
गुरु-श्वशुर-बन्धूनां ये चान्ये बान्धवा मृताः॥

---

(१) ग पुस्तके लोके च।
(२) ख पुस्तके वृक्षयोनिस्थाः।
(३) क ख पुस्तकद्वये मृता असंस्कृता ये च।
(४) क ख पुस्तकद्वये दत्त अक्षय्यम्।

ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्ज्जिताः।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा॥
विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम।
तेषां पिण्डो मया दत्तोऽच्चय्यमुपतिष्ठताम्॥ (१८)

आ ब्रह्मणो ये पितृवंशजाता
मातुस्तथा वंशभवा मदीयाः।
कुलद्वये ये मम दासभूता
भृत्यास्तथैवाश्रितसेवकाश्च॥
मित्राणि सख्यः[1] पशवश्च वृचा
दृष्टा ह्यदृष्टाश्च कृतोपकाराः।
जन्मान्तरे ये मम सङ्गताश्च
तेभ्यः स्वधा पिण्डमहं ददानि[2]॥ १९॥

इति पठित्वा ॐकारपूर्व्वमुच्चार्य्य अपसव्येन कथितप्रमाणकानुनविंशतिपिण्डान् प्रत्येकं दद्यात्। इति—

स्त्रीषोड़श्यान्तु—

अस्मत्कुले मृता ये चेत्यावाहनमन्त्रादारभ्य मित्राणि सख्य इति पर्य्यन्तं सम्भवत्स्त्रीलिङ्गमूहनीयम्, अन्यत्तु पुंषोड़शीवत् सर्व्वम्।

ततः सर्व्वेषु पिण्डेषु तिलजलपूर्णपात्रेण प्रदच्चिणं वारत्रयं परिषिचनं कार्य्यम्। तत्र मन्त्रः—

---

(१) मूलपुस्तके शिष्याः।
(२) ग पुस्तके ददामि।

ॐ ये च वो ये चास्मास्वासन् याश्च वो याश्चास्मास्वासन् ते चावाह्यन्तां ताश्चावाह्यन्ताम्। तृप्यन्तु भवन्तस्तृप्यन्तु भवत्यस्तृप्यत गोत्रान् पुत्रानभितर्पयन्तीरापो मधुमतीरिमाः। स्वधां पितृभ्यो-ऽमृतं दुहाना आपो देवीरभयास्तृप्यन्तु। तृप्यत तृप्यत तृप्यतेति।

ततः प्रणिपत्य ॐ पित्रादयः क्षमध्वमिति तान् विसृजेत्। ततः सव्येनाचम्य कृताञ्जलिः—

ॐ साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता॥
आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर।
त्वमेव साक्षी भगवाननृणोऽहमृणत्रयात्॥

इति प्राङ्मुखः पठेत्। एतावत्क्रियाकलापाशक्तौ प्रेत-शिलायां पिण्डदानमपि कर्त्तव्यम्।

तद्यथा,—

ॐ अद्यामुकगोत्राणां पितृ-पितामह-प्रपितामहानाममुका-मुकशर्म्मणाममुकगोत्राणां मातृ-पितामही-प्रपितामहीनाममुका-मुकदेवीनाम् अमुकगोत्राणां मातामह-प्रमातामह-वृद्धप्रमाता-महानाममुकामुकशर्म्मणाम् अमुकगोत्राणां मातामही-प्रमाता-मही-वृद्धप्रमातामहीनाममुकामुकदेवीनां प्रेतत्वविमुक्तिकामः प्रेत-शिलायां पिण्डदानमहं करिष्ये।

इति सङ्कल्प्यापसव्यं कृत्वा कव्यवालोऽनल इत्यादिनावाह्य अनृणोऽहमृणत्रयादित्यन्तं काण्डं पूर्व्वलिखितं कुर्य्यादित्यर्थः।

केचित्तु षट्पुरुषाणामेव प्रेतत्वविमुक्तिकामनया पिण्डदानं

कार्य्यमिति, तत्र च वेदिद्वयकरण-रेखाकरण-तदङ्गावभ्रामण-च्छिन्नमूलधारणावनेजन-पिण्डदान-प्रत्यवनेजन-श्वासधारण-नीवी-भ्रंशन[२] सूत्रदान-गन्धदानान्येव स्वसूत्रोक्तानि वाजसनेयिना कार्य्याणि, एवमन्येनापि स्वसूत्रानुसारेणैव तत्कार्य्यमित्याहुः ।

एतदन्यतमकरणानन्तरन्तु पर्व्वतादवरुह्य पृथिव्यां प्रभासादि-सङ्गतायां महानद्यां रामतीर्थत्वेन प्रसिद्धे प्रभासह्रदे—ॐ अद्य साग्रजन्मान्तरशतकृतदुष्कृतविलयकामोऽस्मिन् तीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानतर्पणे कृत्वा तत्र स्नानीयप्रकृतसकल-मन्त्रपाठानन्तरम्—

ॐ जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया ।
तत्सर्व्वं विलयं यातु रामतीर्थाभिषेचनात् ॥

इति पौराणिकमन्त्रं पठित्वा मज्जेत् ।

ॐ अद्य विष्णुलोकगमनकामो रामतीर्थे श्राद्धमहं पिण्ड-दानं वा करिष्ये—इति सङ्कल्प्य पार्व्वणं पिण्डदानमात्रं वा तत्र कुर्य्यात् ।

इदं पार्व्वणं पिण्डदानञ्च सूत्रानुसारेणैव कर्त्तव्यम् गयोक्त-फलकपितृकर्म्मत्वाभावादिति ।

ॐ अद्य पित्रादिप्रेतत्वविमुक्तिपूर्व्वकपितृत्वप्राप्तिकामो राम-तीर्थे पितॄणां पिण्डदानमहं करिष्ये इति सङ्कल्प्य प्रेतशिलोक्त-रीत्या पित्रादिद्वादशपिण्डाऽन्वष्ट्यपिण्ड-षोड़शीपिण्डान् दद्यात् ।

---

(२) ख पुस्तके विस्रंशन ।

विष्णुलोकफलकस्यास्य चोभयस्याप्यत्र करणासामर्थ्येऽन्यतरदेव कर्त्तव्यमिति[1]।

ततः—ॐ राम राम महाबाहो देवानामयभप्रद[2]।

त्वां नमस्येऽद्य[3] देवेशं मम नश्यतु पातकम्॥

इति पठित्वा स्वर्गकामो रामं नमस्कुर्य्यात्।

तत ॐ भासमानस्वकर्त्तृकशिवलोकगमनकामः प्रभासेश-नमस्कारमहं करिष्ये इति सङ्कल्प्य प्रभासेशं नमस्कुर्य्यात्। ततो राम-प्रभासेशौ नमस्कुर्य्यात्।

ॐ आपस्त्वमसि देवेश ज्योतिषां पतिरेव च।

पापं नाशय मे देव मनोवाक्कायकर्म्मजम्॥

इति पौराणिकमन्त्रं पठित्वा—

ॐ यमायैष बलिर्नम इति कुशत्रयजलेन दैवरीत्या भक्तादिरूपं बलिं दद्यात्।

प्रभासपर्व्वतदक्षिणदिगवस्थितप्रेतशिलाजघनस्थे नगनाम्नि पर्व्वते—

ॐ श्वानौ द्वौ श्याम[4]-शवलौ वैवस्वतकुलोद्भवौ।

ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ॥

इति पठित्वा यमराज-श्वमराजाभ्यामेष बलिर्नम इति तयो-

---

(१) क ख पुस्तकद्वये इदानिमिति।

(२) क पुस्तके अभयङ्कर।

(३) ग पुस्तके नमस्येऽहं।

(४) मूले—श्याव।

मिलितयोरोदनाद्यन्यतमबलिं दद्यात् । इदञ्च बलिदानं नित्य-मकरणेऽनिष्टश्रवणात् ।

अन्यत्तु सर्व्वं काम्यं स्वतन्त्रञ्च । तथाच तेषु यावदेव कर्त्तु-मिच्छति तावदेव कर्त्तव्यं न तु सर्व्वमेवेत्यवधेयम् ।

इति गयाकृत्ये प्रथमदिनकृत्यम् ।

---

## अथ द्वितीयदिनकृत्यम् ।

तत्र वायुपुराणे—

अपरेऽह्नि शुचिर्भूत्वा गच्छेत प्रेतपर्व्वतम् ।
ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत् सुधीः ॥
कृत्वाह्वानं पितॄणान्तु प्रयतः प्रेतपर्व्वते ।
प्राचीनावीतिना भाव्यं (?) दक्षिणाभिमुखः स्मरन् ॥

कव्यवाल इत्यादि—शाश्वतीमित्यन्तेन पितॄनावाह्य पूर्व्ववत् प्राणायामादिसाक्षिश्रावणपर्य्यन्तं प्रेतशिलोक्तं कुर्य्यात् ।

तिलमिश्रांस्ततः शक्तून् निक्षिपेत् प्रेतपर्व्वते ।
प्रेतत्वात्तु विमुक्ताः स्युः पितरस्तस्य नारद ।
प्रेतत्वं तस्य माहात्म्यादस्य चापि न विद्यते ॥

तदयमत्रानुष्ठानक्रमः—

गयाप्राप्तिदिनोत्तरदिने फल्गुतीर्थादौ यथाविधि स्नात्वा देवार्च्चनान्तं कर्म्म कृत्वा प्रेतपर्व्वतं गयावायव्यदिशि गयातो गव्यूत्य-

धिकदूरस्थं गत्वा तन्मूलसंलग्नतदीशानकोणस्थे ब्रह्मकुण्डे स्वर्गकामनया स्नात्वा तर्पणं कृत्वा तं प्रेतपर्व्वतमारुह्य तत्र पितामहाना-दिसाक्षिश्रावणपर्य्यन्तं प्रेतशिलावदेव कर्त्तव्यम्।

अयन्तु विशेषः—

ॐ अद्य पुनरावृत्तिरहितब्रह्मलोकावाप्तिकामः प्रेतपर्व्वते श्राद्धमहं करिष्ये इति पार्व्वणसङ्कल्पः। तच्च पार्व्वणं ब्रह्मवेद्यां क्रियते इति समाचारः।

ततः साक्षिश्रावणानन्तरम्—

अद्य पितृगणप्रेतत्वविमुक्ति-स्वगतप्रेतत्वाभावकामः प्रेतपर्व्वते तिलमिश्रशक्तुप्रक्षेपमहं करिष्ये इति सङ्कल्प्य तिलमिश्रशक्तून् प्रेत-पर्व्वते दक्षिणामुखः प्रक्षिपेदनेन मन्त्रेण—

ॐ ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु शक्तुभिस्तिलमिश्रितैः॥ इति।

ॐ आब्रह्मस्तम्बपर्य्यन्तं यत्किञ्चित् सचराचरम्।
मया दत्तेन तोयेन तृप्तिमायातु सर्व्वशः॥

इति मन्त्रेण तोयाञ्जलिं दद्यात्।

ततो यथाशक्ति दक्षिणां सिद्धवद्दद्यात्।

इति प्रेतपर्व्वतविधिः।

---

# अथ पञ्चतीर्थीकृत्यम् ।

तत्र वायुपुराणे—

आदौ च पञ्चतीर्थेषु चोत्तरे मानसे विधिः ।
आचम्य कुशहस्तेन शिरश्चाभ्युक्ष्य वारिणा ॥
उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत् ।
ॐ उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ॥
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥
स्नात्वाऽथ तर्पणं कुर्य्याद्देवादीनां यथाविधि ॥
आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः ॥
श्राद्धं सपिण्डकं कुर्य्यात् स्वसूत्रोक्तविधानतः ।
अष्टकासु च वृद्धौ च गयायाञ्च क्षयाहनि ॥
मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह ।
वृद्धिश्राद्धे च मात्रादि गयायां पितृपूर्व्वकम् ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
माता पितामही चैव तथैव प्रपितामही ॥
मातामहस्तत्पिता च प्रमातामहकादयः ।
तेषां पिण्डो मया दत्तोऽक्षय्यमुपतिष्ठताम् ॥
ॐ नमो भानवे भर्त्त्रे सोम-भौम-ज्ञरूपिणे ।
जीव-भार्गव सौरेय-राहु-केतुस्वरूपिणे ॥
सूर्य्यं नत्वाऽर्च्चयित्वा च सूर्य्यलोकं नयेत् पितॄन् ।

मानसं हि सरो ह्यत्र तस्मादुत्तरमानसम् ॥
उत्तरान्मानसान्मौनी गच्छेद्दक्षिणमानसम् ।
उदीचीतीर्थमित्युक्तं तत्रोदीच्यां विमुक्तिदम् ॥
उदीच्यां मुण्डपृष्ठस्य[1] देवर्षिपितृसेवितम् ।
मध्ये कनखलं तीर्थं पितॄणां मुक्तिदायकम् ॥
स्नातः कनकवद्भाति नरो याति पवित्रताम् ।
अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ॥
तस्य दक्षिणभागे तु तीर्थं दक्षिणमानसम् ।
दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम् ॥
स्नात्वा तेषु विधानेन कुर्य्यात् श्राद्धं पृथक् पृथक् ॥
दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥
अतः कनकनन्देति स्नानमात्राद्विमुक्तिदा ।
नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च ॥
पुत्रपौत्रधनैश्वर्य्यायायुरारोग्यवृद्धये ॥
ब्रह्महत्यादिपापौघ-यातनाया[2] विमुक्तये ।
दिवाकर करोमीह स्नानं दक्षिणमानसे ॥
अनेन स्नानपूजादि कुर्य्यात् श्राद्धं सपिण्डकम् ।
कृत्वा नत्वाऽथ मौनार्कमिमं मन्त्रमुदीरयेत् ॥
कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा ।

---

(१) ग पुस्तके स्वभूपृष्ठस्य ।
(२) ग पुस्तके यातनाय ।

अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ।
आगच्छन्तु महाभागा युष्माभीरक्षितास्त्विह ॥
मदीयाः पितरो ये च कुले जाताः सनाभयः ।
तेषां पिण्डप्रदाताऽहमागतोऽस्मि गयामिमाम् ॥
फल्गुतीर्थं व्रजेत्तस्मात् सर्व्वतीर्थोत्तमोत्तमम् ।
मुक्तिर्भवति कर्त्तॄणां पितॄणां[1] श्राद्धतः सुराः ॥
ब्रह्मणा प्रार्थितो विष्णुःफल्गुतो ह्यभवत् पुरा ।
दक्षिणाग्नौ हुतं नूनं तद्भवं[2] फल्गुतीर्थकम् ॥
यस्मिन् फलति फल्गौ गौः कामधेनुर्जलं मही ॥
दृष्टेरन्तर्गतं यस्मात् फल्गुतीर्थं न निष्फलम् ॥
तीर्थानि यानि सर्व्वाणि भुवनेष्वखिलेषु च ।
तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह ॥
गङ्गा पादोदकं विष्णोः फल्गुर्ह्यादिगदाधरः ।
हिमद्रवस्वरूपेण तस्माद्गङ्गाधिकां विदुः ॥
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ॥
फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः ।
पितॄणां विष्णुलोकाय भुक्ति-मुक्तिप्रसिद्धये ॥
फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत् ।

---

(१) क ग पुस्तकद्वये मानसे ।

(२) मूलपुस्तके तद्व्रजः ।

सपिण्डकं स्वसूत्रोक्तं नमेदथ पितामहम् ॥

ॐ नमः शिवाय देवाय ईशानपुरुषाय च।

अघोरवामदेवाय सद्योजाताय शम्भवे ॥

नत्वा पितामहं देवं मन्त्रेणानेन पूजयेत्।

फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्।

आत्मानं पितृभिः सार्द्धं नयेद्वैष्णवं पदम् ॥

ॐ नमो वासुदेवाय नमः सङ्कर्षणाय च।

प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे ॥

पञ्चतीर्थे नरः स्नात्वा ब्रह्मलोकं नयेत् पितॄन् ॥

अमृतैः पञ्चभिः स्नानं पुष्पवस्त्राद्यलङ्कृतम्।

न कुर्य्याद्यो गदापाणे स्तस्य श्राद्धमनर्थकम् ॥

नागकूटात् गृध्रकूटादिष्टाच्चोत्तरमानसात्[1]।

एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥

मुण्डपृष्ठनगाधस्तात् फल्गुतीर्थमनुत्तमम्।

अत्र श्राद्धादिना सर्व्वे पितरो मोक्षमाप्नुयुः ॥

आदाविति पञ्चतीर्थीकर्म्मणि चादावुत्तरमानसे बिधिः। मन्त्रेणेति—उत्तरे मानसे इत्यादिमन्त्रं प्रकृतस्नानीयमन्त्रानन्तरं पठित्वा स्नानमज्जनं कर्त्तव्यमित्यर्थः।

ततः प्रकृततर्पणानन्तरमाब्रह्मस्तम्बपर्य्यन्तमित्यादिना मन्त्रेण देवविधिनैकोऽञ्जलिर्देयः। ततः पित्रादि-मातामहादि-मात्रादि-मातामह्यादीनां पार्व्वणं कृत्वा प्रेतशिलावदक्षय्यपिण्डं दद्यादिति।

(१) मूले—यूपादुत्तरमानसात्।

अष्टकासु चेत्यादिना—अष्टकाभ्युदयिक-क्षयाह-गयासु च चतसृषु स्त्रीणां पृथक् श्राद्धमित्यर्थः।

वृद्धीति—आभ्युदयिकं मातृपक्रमकं गयायां पितृपक्रमकं श्राद्धाचरणमित्यर्थः।

अत्र च श्राद्धोद्देश्यानां शाश्वतब्रह्मप्राप्तिः फलमुत्तर-मानसस्य गयाशिरोऽभ्यन्तरत्वात् तत्र च—

शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे।
यन्नाम्ना पातयेत् पिण्डं तं नयेद् ब्रह्म शाश्वतम्॥

इति वचनात्।

एवमक्षय्यतृप्तिर्वा फलं पुष्करेष्वक्षयं श्राद्धमित्युपक्रम्य एवमेव गयाशीर्षेऽक्षयवटे फल्गुतीर्थे उत्तरमानसे मतङ्गवाप्यां विष्णुपदे चेति विष्णुवचनात्।

सूर्य्यमिति—सूर्य्यलोकगमनकामनया सूर्य्यनति-सूर्य्यार्च्चनञ्च कार्य्यमिति।

अतोभयत्र ॐ नमो भानवे इत्यादिमन्त्र इत्यर्थः। तत्र दक्षिणमानसे त्रिधाविभक्ते उत्तरभागे उदीचीमध्यभागः कनखलं दक्षिणभागो दक्षिणमानसम्।

अत्र तीर्थत्रये प्रत्येकं श्राद्धे स्नाने पितृमुक्तिः फलम्। दक्षिण-मानसस्नाने तु मन्त्रः—ॐ दक्षिणे मानस इत्यादिः। ब्रह्महत्यादी-त्यादि च श्लोकद्वयमधिकम्। नमामि सूर्य्यमित्यादिस्तु दक्षिणार्क-दर्शने मन्त्र इति वर्त्तुलार्थः।

कव्यवाल इत्यादिमन्त्रं पठित्वा दक्षिणमानसात् फल्गु-

तीर्थं गन्तव्यम्। अत्र दशाश्वमेधफलप्राप्तिकामनया स्नानम् तत्र फल्गुतीर्थे इत्यादिमन्त्रः। तत्र स्नात्वा तर्पणं कार्य्यं तत्र च स्वधोदीरणानन्तरं पितरं प्रीणयामीत्यादि प्रयोज्यं ततः पितृ-मुक्तिकामनया तत्र श्राद्धं कार्य्यमिति वर्त्तुलार्थः।

नमेदथेत्यनन्तरं—मधुस्रवादक्षिणकूलस्थं पितामहम्—नमः शिवायेत्यादि पठित्वा नमेत् पूजयेच्चेत्यर्थः।

ततः पुनर्गदाधरप्राच्यां फल्गुतीर्थे पित्रादिसहितात्मवैष्णव-पदनयनकामनया तत्र स्नात्वा गदाधरं पश्येत्।

गदाधरस्य—प्रतिमारूपोऽपि तदधिकरणीभूतमुण्डपृष्ठाद्रिरपि। तदुक्तं वायुपुराणे—

अव्यक्तरूपी यो देवो मुण्डपृष्ठाद्रिरूपतः।
फल्गुतीर्थादिरूपेण नमाम्यादिगदाधरम्॥ इति।
शिलापर्व्वतफल्ग्वादिरूपेण व्यक्तमास्थितः।
शिलापादादिरूपेण व्यक्ताव्यक्ततया स्थितः।
गदाधरादिरूपेण व्यक्त आदिगदाधरः॥

दर्शनानन्तरम्—

ओँ नमो वासुदेवायेत्यादिना तन्नमस्कार-पूजे कृत्वा पितृब्रह्मलोकगमनकाम इत्यादि सङ्कल्पवाक्यं कृत्वा पवित्रो-पग्रहपाणिराचम्य वारिणा शिरोऽभ्युक्ष्य उत्तरमानसोदीची-कनखल दक्षिणमानसफल्गुतीर्थेषु यथाक्रमं सविधिस्नानतर्पणे प्रत्येकं कृत्वा ततो दुग्धदधिघृतमधुखण्डात्मकेन पञ्चामृतेनाष्टोत्तरशतपलमितेन स्नपयित्वा वस्त्रपुष्पालङ्कारैरर्च्चयेदित्यर्थः।

अथैतदनुष्ठानक्रमः—

गयाप्राप्तितृतीयदिने फल्गुतीर्थे स्नानादि-देवार्च्चनान्तं कृत्वा पवित्रोपग्रहपाणिराचम्य वारिणाऽभ्युक्ष्य तत्रोत्तरमानसं गत्वा—ॐ अद्य पापक्षयकाम उत्तरमानसे स्नानमहं करिष्ये। इति सङ्कल्प्य स्नानीयमन्त्रान् पठित्वा—

ॐ उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥

इति पठित्वा मज्जनं कार्य्यम् ।

ततस्तर्पणम्—तत्र च पित्राद्यञ्जलिषु स्वधोदीरणानन्तरं पितरं प्रीणयामीति प्रयोज्यम् ।

ततस्तर्पणशेषे—देवविधिना—

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्व्वे मातृमातामहादयः ॥

इति पठित्वा एकोऽञ्जलिर्देयः ।

ततः ॐ अद्यामुकगोत्राणां पितृ-पितामह-प्रपितामहाना-ममुकामुकशर्म्मणाममुकगोत्राणां मातृ-पितामही-प्रपितामहीना-ममुकामुकदेवीनाममुकगोत्राणां मातामह-प्रमातामह-वृद्धप्रमा-तामहानाममुकामुकशर्म्मणाममुकगोत्राणां मातामही-प्रमाता-मही-वृद्धप्रमातामहीनाममुकामुकदेवीनां शाश्वतब्रह्मप्राप्तिकामो-ऽक्षयतृप्तिकामो वा श्राद्धमहं करिष्ये। इति सङ्कल्प्य द्वादशदैवतं श्राद्धमाचरेत् । मातामह्यादित्रिकवर्ज्जमिति हेमाद्रिः ।

गयायां सर्व्वत्रैव षट्पुरुषश्राद्धमिति प्राञ्चः ।

तथाच—तत्रैतदन्यतमं श्राद्धं कृत्वा दक्षिणदिशि उपविश्य समूलान् दक्षिणाग्रान् कुशानास्तीर्य्य—

ॐ कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः॥
आगच्छन्तु महाभागा युष्माभीरक्षितास्त्विह।
मदीयाः पितरो ये च कुले जाताः सनाभयः॥
तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम्॥
ते सर्व्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम्॥

इति पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं कृत्वा एतानि पाद्यादीनि 'ॐ पित्रादिभ्यो नमः' इति पञ्चोपचारेण पित्रादीन् सम्पूज्य—

ॐ आब्रह्मस्तम्बपर्य्यन्तं देवर्षि-पितृ-मानवाः।
तृप्यन्तु पितरः सर्व्वे मातृ-मातामहादयः॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्॥

इति पठित्वा सकृत्तिलोदकाञ्जलिदानरूपमावाहनं पुनः कृत्वा—ॐ-पिता पितामहश्चैव तथैव प्रपितामहः।

मातामहस्तत्पिता च प्रमातामहकादयः॥
माता पितामही चैव तथैव प्रपितामही।
तेषां पिण्डो मया दत्तोऽक्षय्यमुपतिष्ठताम्॥

इति पौराणिकं मन्त्रमुच्चार्य्य तिल-दधि-मधु-घृत-जलयुतं मुष्टिमितशक्तुकृतमेकं पिण्डं मिलितेभ्यो दद्यात्। इति।

तत ॐ पितृसूर्य्यलोकनयनकामनया उत्तरार्कस्य नतिमहं करिष्ये। पूजायामयमेव सङ्कल्पः।

तत—ॐ नमो भानवे भर्त्रे सोम-भौम-ज्ञरूपिणे।
जीव-भार्गव-सौरेय-राहु-केतुस्वरूपिणे॥

इति मन्त्रेण नतिः पूजा च कार्य्या। ततो दक्षिणमानसं गत्वा तत्रोदीच्याम्—ॐ अद्य पितृमुक्तिकाम उदीचीतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य पूर्व्ववत् स्नान-तर्पणे कृत्वा पूर्व्ववदेव द्वादश-दैवतं षड्दैवतं वा पार्व्वणं कृत्वा मध्यमं कनखलतीर्थं गच्छेत्। तत्रापि—

ॐ अद्य पितृमुक्तिकामः कनखलतीर्थे स्नानमहं करिष्ये, इति सङ्कल्प्य,—स्नानतर्पणे पितृमुक्तिकामनया तत्र श्राद्धञ्च कृत्वा—तत ॐ अद्य पितृमुक्तिकामो दक्षिणमानसे स्नानमहं करिष्ये इति सङ्कल्प्य स्नानीयसर्व्वमन्त्रान्ते—

ॐ दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये।
दिवाकर करोमीह स्नानं दक्षिणमानसे॥

इति पठित्वा मज्जेत्।

ततः पूर्व्ववत्तर्पणं कृत्वा पितृमुक्तिकामनया तत्र श्राद्धञ्च कृत्वा—

ॐ नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च।
पुत्रपौत्रधनैश्वर्य्यायायुरारोग्यवृद्धये॥

इति मन्त्रेण दक्षिणार्कस्य दर्शनं पूजा च मौनेनैव [1]कर्त्तव्या। यतः स मौनार्कनामा।

ततः—ॐ कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा। इत्यादि ( [2]आगतोऽस्मि गयामित्यन्तं ) दक्षिणमानस एव पठित्वा गदाधरपूर्व्वदेशस्थमतिप्रशस्तं फल्गुतीर्थं गच्छेत्।

तत्र च—ॐ अद्य दशलक्षाश्वमेधजन्यपुण्यफलविलक्षणफल-प्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये, इति सङ्कल्प्य प्रकृत-स्नानीयमन्त्रान्ते—

ॐ फल्गुतीर्थे [3]पुण्यजले करोमि स्नानमादृतः।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये॥

इति पठित्वा मज्जेत्।

ततः पूर्व्ववत्तर्पणं कृत्वा पितृमुक्तिकामनया द्वादशदैवतं षड्दैवतं वा श्राद्धं तत्र कुर्य्यात्। ततो मधुस्रवादक्षिणदिगवस्थितं पितामहम्—

ॐ नमः शिवाय देवाय ईशानपुरुषाय च।
अघोरवामदेवाय सद्योजाताय शम्भवे॥

इति पठित्वा पितामहं प्रणमेत् पूजयेच्च। ततः पुनः फल्गुतीर्थमागत्य—

ॐ अद्य पित्रादिसहितात्मवैष्णवपदनयनकामः फल्गुतीर्थे

---

(१) ग पुस्तके तस्य तु कर्म्म मौनेनैव कर्त्तव्यम्।

(२) क पुस्तके चिह्नितांशः पतितः।

(३) ख पुस्तके विष्णुजले।

स्नात्वा गदाधरदर्शनमहं करिष्ये। इति सङ्कल्प्य तत्र सविधि स्नानं कर्त्तव्यम्। गदाधरस्य प्रतिमारूपस्तदधिकरणीभूतमुण्डपृष्ठाद्रि-रूपस्य इति।

तद्दर्शनानन्तरम्—

ॐ नमो वासुदेवाय नमः सङ्कर्षणाय च।
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे॥

इति पठित्वा गदाधरं प्रणमेत् पूजयेच्च।

तत उत्तरमानसं गत्वा ॐ अद्य पितृब्रह्मलोकनयनकामः पञ्चतीर्थ्यां स्नानमहं करिष्ये। इति सङ्कल्प्योत्तरमानसे उदीच्यां कनखले दक्षिणमानसे फल्गुतीर्थे च यथाक्रमं सविधि प्रत्येकं स्नानतर्पणे कुर्य्यात्।

ततो गदाधरसमीपं गत्वा दुग्ध-दधि-घृत-मधुखण्डात्मकेन पञ्चामृतेनाष्टोत्तरशतपलमितेन गदाधरं स्नपयित्वा पुष्पवस्त्रालङ्कारै-रर्च्चयेदिति।

एतेषाञ्च कर्म्मणां मध्ये चरमं पञ्चामृतस्नानमेवावश्यकम्। अकरणे [1]निन्दार्थवादात्। इतराणि तु काम्यानि स्वतन्त्राणि चेति यथाशक्ति कार्य्याणीति।

इति पञ्चतीर्थीकृत्यम्।

---

(१) ख पुस्तके निन्दानुवादात्।

## अथ पञ्चतीर्थीकर्म्मापेक्षया यावद्द्वितीयं दिनं तत्कृत्यमाह ।

[1]वायुपुराणम्—

प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत् ।
धर्म्मारण्यं तत्र धर्म्मो यस्माद्यागमकारयत् ॥
मतङ्गवाप्यां स्नात्वा तु तर्पणं श्राद्धमाचरेत् ।
गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत् ॥
प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
[2]मयागत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता ।
पूर्व्ववत् ब्रह्मतीर्थे च कूपे श्राद्धादि कारयेत् ॥
तत् कूप-यूपयोर्मध्ये कुर्व्वंस्तारयते पितॄन् ।
धर्म्मं धर्म्मेश्वरं नत्वा महाबोधितरुं नमेत् ॥

तदयमनुष्ठानक्रमः—

स्नात्वा देवार्च्चनान्तं कर्म्म कृत्वा ॐ अद्य ब्रह्मलोकगमनकामो धर्म्मारण्यगमनमहं करिष्ये। इति प्रामाणिक[3]प्रसिद्धिसिद्धं सङ्कल्पं कृत्वा तत्र गत्वा मतङ्गवाप्याम्—

'ॐ अद्य सर्व्वपापक्षयकामो मतङ्गवाप्यां स्नानमहं करिष्ये'। इति सङ्कल्प्य स्नातव्यम्। पुष्करे स्नानमात्रेण सर्व्वपापेभ्यः

---

(१) ग पुस्तके वामनपुराणे ।

(२) क ख पुस्तकद्वये समागत्य ।

(३) क ख पुस्तकद्वये प्रसिद्धिपदं नास्ति ।

पूतो भवतीत्युपक्रम्य एवमेव फल्गुतीर्थे उत्तरमानसे मतङ्गवाप्या-मिति विष्णुवचनात् ।

ततस्तत्र स्नान-तर्पणे कृत्वा ॐ अद्याक्षयपितृतृप्तिकामो मतङ्ग-वाप्यां श्राद्धमहङ्करिष्ये, इति सङ्कल्प्य प्रकृतपार्व्वणं कृत्वा मतङ्गवाप्या एव उत्तरदिगवस्थितं मतङ्गेशं नत्वा—

ॐ प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।
[1]मयागत्य मतङ्गेऽस्मिन् पितॄणां निष्कृतिः कृता ॥

इति पठित्वा—ॐ पितृतरणकामः कूप-यूपयोर्मध्ये श्राद्धमहं करिष्ये इति सङ्कल्प्य पार्व्वणं कुर्य्यात् । कूपश्चैक एतद्वाप्या आग्नेयकोण-क्षेत्रमध्येऽवटरूपोऽस्ति तत्तीरे च श्राद्धं पिण्डदानं वा पतितस्यापि किन्तु तत्र गर्भहन्तृ-गुरुतल्पग इत्येवं निर्द्देशः कार्य्यः । ततो धर्म्मं धर्म्मेश्वरं महाबोधितरुञ्च यथाक्रमं स्वर्गकामो नमेदिति ।

इति पञ्चतीर्थीदिनाग्रिमदिनकृत्यम् ।

---

## अथ पञ्चतीर्थीदिनोत्तरतृतीयदिनकृत्यम् ।

तत्र वायुपुराणे,

तृतीये ब्रह्मसरसि श्राद्धं कुर्य्यात् सपिण्डकम् ।
स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये ॥

---

(१) ख पुस्तके समागत्य ।

श्राद्धाय पिण्डदानाय तर्पणायात्मशुद्धये।
तत्कूप-यूपयोर्मध्ये कुर्व्वंस्तारयते पितॄन्॥
स्नानं कृत्वोच्छ्रितो यूपो ब्रह्मणो यूप इत्यतः।
कृत्वा ब्रह्मसरःश्राद्धं ब्रह्मलोकं नयेत् पितॄन्॥
गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः।
तेषां सेचनमात्रेण पितरो मोक्षगामिनः॥
आम्रं ब्रह्मशिरोद्भूतं[1] सर्व्वदेवमयं विभुम्।
विष्णुरूपं प्रसिञ्चामि पितॄणाञ्चैव मुक्तये॥

आम्राश्च सिक्ताः पितरश्च तृप्ताः
[2]एकक्रिया द्व्यर्थकरी प्रसिद्धा।
आम्रस्य मूले सलिलं दधानो
नोपेक्षणीयो विबुधैर्मनुष्यः॥

यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत्।
ब्रह्माणञ्च नमस्कृत्य पितॄन् ब्रह्मपुरं नयेत्॥
ॐ नमो ब्रह्मणेऽजाय जगज्जन्मादिकारिणे।
भक्तानाञ्च पितॄणां हि तारकाय नमोऽस्तु ते॥
ततो यमबलिं क्षिप्त्वा मन्त्रेणानेन संयतः।
यमराज-भ्रमराजौ निश्चलार्थं हि संस्थितौ॥
ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे।
ततः श्वानबलिं दद्यात् मन्त्रेणानेन नारद॥

---

(१) क ख पुस्तकद्वये ब्रह्मसरोद्भूतम्।

(२) ग पुस्तके एका क्रिया।

वैवस्वतकुलोद्भूतौ द्वौ श्याव-शवलौ शुनौ।
ताभ्यां बलिं प्रयच्छामि रक्षेतां पथि सर्व्वदा॥
ततः काकबलिं दत्वा पुनः स्नानं समाचरेत्।
ऐन्द्र-वारुण-वायव्या याम्या वै नैर्ऋतास्तथा॥
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयोज्झितम्।

सपिण्डकमिति अक्षय्यपिण्डसहितमित्यर्थः।

तदिति स्नानं कृत्वा यूप-कूपयोर्मध्ये तच्छ्राद्धं कुर्व्वन् पितॄं-स्तारयति इत्यर्थः। कृत्वेति—ब्रह्मसरसि श्राद्धं कृत्वा पितॄन् ब्रह्म-लोकं नयेदित्यर्थः। अनयोस्तु फलयोः समुच्चय एकत्रैवा-न्वयात्[1]। गोप्रचारेति—आम्रमित्यादिश्लोकं पठित्वा आम्रसेकः कार्य्यः। स च शिष्टाचारात् ब्रह्मसरोजलेन दर्भैरिति। ॐ नमो ब्रह्मण इत्यादि ब्रह्मनमस्कारमन्त्रः। यमराजेत्यादिः—यमबलि-मन्त्रः। वैवस्वत इत्यादिः—श्वबलिमन्त्रः। ऐन्द्र इत्यादिः काकबलिमन्त्रः।

तदयं प्रयोगः—

पञ्चतीर्थीदिनोत्तरतृतीयदिने फल्गुतीर्थे देवार्च्चनान्तं कर्म्म कृत्वा ब्रह्मसरो गत्वा ॐ अद्य पापक्षयकामोऽस्मिन् ब्रह्मसरसि स्नानमहं करिष्ये—इति सङ्कल्प्य प्रकृतमन्त्रान्ते—

ॐ स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये।
श्राद्धाय पिण्डदानाय तर्पणायात्मशुद्धये॥

इति पठित्वा तर्पणञ्च कृत्वा।

---

(१) ग पुस्तके आम्नानात्।

ॐ अद्य पितृब्रह्मलोकनयनकामो ब्रह्मकूप-यूपयोर्मध्ये श्राद्ध-महं करिष्ये। इति सङ्कल्प्य द्वादशदैवतं नवदैवतं षड्दैवतं वा श्राद्धं कृत्वा उत्तरमानसादत्त्यपिण्डं दत्त्वा—ॐ पितृमोक्षकामो ब्रह्म-कल्पिताम्रसेचनमहं करिष्ये। इति सङ्कल्प्य—

'ॐ आम्रं ब्रह्मसरोद्भूतं[1] सर्व्वदेवमयं विभुम्।

विष्णुरूपं प्रसिञ्चामि पितॄणाञ्चाथ मुक्तये॥

इति पठित्वा कुशत्रयेणाचारात् ब्रह्मसरोजलेन गोप्रचार-समीपस्थान् ब्रह्मकल्पितानाम्रान् सिञ्चेत्।

ततः—ॐ अद्य वाजपेयजन्यफलसमफलप्राप्तिकामो ब्रह्मयूप-प्रदक्षिणमहं करिष्ये। इति सङ्कल्प्य प्रदक्षिणं कुर्य्यात्।

ततः—'ॐ पितृब्रह्मपुरगमनकामो ब्रह्मनमस्कारमहं करिष्ये इति सङ्कल्प्य—

ॐ नमो ब्रह्मणेऽजाय जगज्जन्मादिकारिणे।

भक्तानाञ्च पितॄणां हि तारकाय नमोऽस्तु ते॥

इति पठित्वा ब्रह्मसरोवायव्यकोणस्थं ब्रह्माणं प्रणमेत्।

ततः—ॐ यमराज-भ्रमराजौ निश्चलार्थं हि संस्थितौ[2]।

ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे॥ इति पठित्वा ॐ यमायैष बलिर्नम इत्यनेन कुशोदकेन देववत् यमबलिं दद्यात्। ततः—

ॐ वैवस्वतकुलोद्भूतौ द्वौ श्याव-शबलौ शुनौ।

---

(१) क पुस्तके रसोद्भूतम्।

(२) ग पुस्तके स्थिरीकृतौ।

ताभ्यां पिण्डं प्रयच्छामि रक्षेतां पथि सर्व्वदा ॥ इति पठित्वा ॐ श्वन एष बलिर्नमः—इति देववद्दर्भोदकेन श्वबलिं दद्यात् । ततः—

ॐ ऐन्द्र-वारुण-वायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयोज्झितम् ॥

इति पठित्वा "काकेभ्य एष बलिर्नमः" दर्भोदकेन देवबलिवत् काकबलिं दद्यात् । श्लोकेनैव यम-श्व-काकबलयो देया न तु वाक्येनापीत्यन्ये । काकबल्यनन्तरन्तु स्नानम् ।

इति पञ्चतीर्थीदिनोत्तरतृतीयदिनकृत्यम् ।

---

## अथ पञ्चतीर्थीदिनोत्तरचतुर्थदिनकृत्यम् ।

तत्र वायुपुराणे—

फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाचरेत् ।
गयाशिरस्यथ श्राद्धं पदे कुर्य्यात् सपिण्डकम् ॥
साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रयं कृतम् ।
क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः ॥
गयाशिरो[1] नगाद्याश्च साक्षात्तत् फल्गुतीर्थकम् ।
मुखं गयासुरस्यैतत् स्नात्वा श्राद्धमथाक्षयम् ॥
आद्यो गदाधरो देवो व्यक्ताऽव्यक्तात्मना स्थितः ।
विष्ण्वादिपदरूपेण पितॄणां मुक्तिहेतवे ॥

---

(१) ग पुस्तके—शिरे ।

तत्र विष्णुपदं दिव्यं दर्शनात् पापनाशनम् ।
स्पर्शनात् पूजनाच्चैव पितॄणां [1]मोक्षदायकम् ॥
श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मना ।
विष्णुलोकं समुद्धृत्य नयेत् विष्णुपदे नरः ॥
श्राद्धं कृत्वा रुद्रपदे नयेत् कुलशतं नरः ।
[2]सहात्मना शिवपुरं तथा ब्रह्मपदे नरः ॥
ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत् पितॄन् ।
दक्षिणाग्निपदे श्राद्धी वाजपेयफलं लभेत् ॥
गार्हपत्यपदे श्राद्धी राजसूयफलं लभेत् ।
श्राद्धं कृत्वाहवनीये वाजिमेधफलं लभेत् ॥
श्राद्धं कृत्वा सत्यपदे ज्योतिष्टोमफलं [3]लभेत् ।
आवसथ्यपदे श्राद्धी सोमलोकमवाप्नुयात् ॥
श्राद्धं कृत्वा चन्द्रपदे चन्द्रलोकं नयेत् पितॄन् ।
श्राद्धी सूर्य्यपदे पश्च पापिनोऽर्कपुरं नयेत् ॥
सर्व्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वै पदम् ।
ब्रह्मणश्च पदञ्चापि श्रेष्ठं तत्र प्रकीर्त्तितम् ॥
प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतम् ।
श्रेयस्करं भवेत्तत्र श्राद्धकर्त्तुश्च नारद ॥

---

(१) मूले दत्तमक्षयम् ।
(२) ग पुस्तके अत्र श्लोकान्तरम्—
श्राद्धं कृत्वाऽगस्त्यपदे ब्रह्मलोकं नयेत् पितॄन् ।
अन्येषाञ्च पदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत् ॥
(३) ख पुस्तके पतितमिदं पद्यम् ।

कश्यपस्य पदे दिव्ये [१]भरद्वाजमुनिः पुरा।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम्॥
शुक्ल-कृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ।
दृष्ट्वा हस्तद्वयं तत्र पितृसंशयमागतः॥
ततः स्वमातरं शान्तां भारद्वाजस्तु पृष्टवान्।
कश्यपस्य पदे कस्मिन् शुक्ले कृष्णेऽथवा करे।
पिण्डो देयो मया मातर्जानासि[२] पितरं वद॥

शान्तोवाच—

भारद्वाज[३]महाप्राज्ञ पिण्डं कृष्णाय देहि भो।
भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः॥
श्वेतोऽदृश्योऽब्रवीत् पुत्रं देहि मह्यं ममौरसः।
कृष्णोऽब्रवीत् क्षेत्रजस्त्वं ततो मे देहि पिण्डकम्॥
शुक्लोऽब्रवीत् स्वैरिणीयं यतोऽतस्त्वं ममौरसः।
[४]स्वैरिणी त्वब्रवीद्दादौ क्षेत्रिणे बीजिने ततः॥
भारद्वाजस्ततः पिण्डं कश्यपस्य पदे ददौ।
हंसयुक्तेन यानेन ब्रह्मलोकमुभौ गतौ।
भीष्मो विष्णुपदे श्रेष्ठे आहूय तु पितॄन् स्वकान्॥
श्राद्धं कृत्वा विधानेन पिण्डदानाय चोद्यतः।
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शान्तनोः॥

---

(१) ग पुस्तके भारद्वाजो महामुनिः।
(२) ख पुस्तके नात्र जानामि।
(३) क पुस्तके महाभाग।
(४) मूलपुस्तके स्वैरिण्यथाब्रवीद्दातम्।

भीष्मः पिण्डं ददौ भूमौ नाधिकारः करे यतः।
शान्तनुः प्रहृसंतुष्टः शास्त्रार्थे निश्चलो भवान्॥
त्रिकालदृष्टिर्भवतु अन्ते विष्णुश्च ते गतिः।
इच्छया मरणञ्चास्तु इत्युक्ता मुक्तिमागतः॥
रामो रुद्रपदे रम्ये पिण्डार्पणकृतोद्यमः।
पिता दशरथः स्वर्गात् प्रसार्य्य करमागतः॥
नादात् पिण्डं करे रामो ददौ रुद्रपदे ततः।
शास्त्रार्थाति(१)क्रमाद्भीतं रामं दशरथोऽब्रवीत्॥
तारितोऽहं त्वया पुत्र रुद्रलोकोऽह्यभून्मम।
पदे पिण्डप्रदानेन हस्ते तु स्वर्गतिर्न हि॥
त्वञ्च राज्यं चिरं कृत्वा पालयित्वा प्रजादिकम्।
यज्ञान् सदक्षिणान् कृत्वा विष्णुलोकं गमिष्यसि॥
सहाऽयोध्याजनैः सर्व्वैः कृमिकीटादिभिः सह।
इत्युक्ता दशरथः पुत्रं रुद्रलोकं परं ययौ।
गयाशिरसि यः पिण्डं येषां नाम्ना तु निर्व्वपेत्।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः॥
गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः।
कन्द-मूल-फलाद्यैर्वा दद्यात् स्वर्गं नयेत् पितॄन्॥
पदानि यत्र दृश्यन्ते विष्ण्वादीनां तदग्रतः।
श्राद्धं कृत्वा सपिण्डञ्च तेषां लोकं नयेन्नरः॥

---

(५) क पुस्तके—क्रमातीतम्।

सर्व्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः।
प्रयान्ति पितरः सर्व्वे ब्रह्मलोकमनामयम् ॥
दैत्यासुरस्य यच्छिरो गदया तद्द्विधा कृतम्।
यतः प्रक्षालिता तीर्थे गदालोलन्तदा स्मृतम् ॥

साक्षादिति प्रशस्तमित्यर्थः। क्रौञ्चपादः मुण्डपृष्ठे।

क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत्।
तस्य पादा(दोऽ)ङ्कितो यस्मात् क्रौञ्चपादस्ततः स्मृतः ॥

इति वायुपुराणात्।

पञ्चपापिन इति पञ्चमहापातकिनोऽपीत्यर्थः।

अन्येषां क्रौञ्चादीनां पदानि चतुर्युगं तदुक्तं वायुपुराणे—

विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम्।
काश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥
पञ्चाग्नीनां पदान्यत्र इन्द्राऽगस्त्यपदे परे।
रवेश्च कार्त्तिकेयस्य क्रौञ्चमातङ्गकस्य च।
मुख्यलिङ्गानि सर्व्वाणि पदानीति निबोधत ॥

श्रेयस्करमिति श्रेयो मोक्षः, श्रेयो निःश्रेयसामृतमिति कोषात्।

एवं पदे श्राद्धात् कर्त्तुरपि मोक्षो भवतीत्यर्थः।

तदयमत्र प्रयोगः—

ॐ अद्य दशलक्षाश्वमेधजन्यफलसमफलप्राप्तिकामः फल्गुतीर्थे स्नानमहं करिष्ये इति सङ्कल्प्य प्रकृतस्नानविध्यन्ते—

ॐ फल्गुतीर्थे पुण्यजले करोमि स्नानमादृतः।
पितॄणां विष्णुलोकाय भुक्ति-मुक्तिप्रसिद्धये ॥

इति मन्त्रं पठित्वा फल्गुतीर्थे मज्जेत्। ततस्तर्पणं तत्र पितृ-तर्पणादौ स्वधोदीरणानन्तरं पितरं प्रीणयामीति प्रयोज्यम्। ततः-पदेषु श्राद्धम्। तत्र यद्यपि ब्रह्म-विष्णु-रुद्र-कश्यपपदानामन्यतम-मेवारम्भसमाप्त्योर्विहितं तथापि रुद्रपदे आरम्भः—

फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम्।
कृत्वा श्राद्धं गयाशीर्षे कुर्य्याद्रुद्रपदादिह॥

इति गारुड़ात्।

तथाचादौ रुद्रपदसमीपं गत्वा ॐ अद्यापुनरावृत्तिकामो रुद्रपदस्पर्शनमहं करिष्ये।

इति सङ्कल्प्य स्पृष्ट्वा श्राद्धमारभ्य तद्द्रव्याणि प्रोक्ष्य ॐ अद्यात्म-सहित कुलशतशिवपुरनयनकामो रुद्रपदे श्राद्धमहं करिष्ये इति सङ्कल्प्य द्वादशदैवतं नवदैवतं षड्दैवतं वा श्राद्धं कुर्य्यात्।

ततो विष्णुपदसमीपं गत्वा ॐ अद्य पापक्षयकामो विष्णुपद-दर्शनमहं करिष्ये इति सङ्कल्प्य विष्णुपदं दृष्ट्वा—ॐ अद्य पितृमोक्ष-कामो विष्णुपदस्पर्शनमहं करिष्ये इति सङ्कल्प्य तत्स्पृष्ट्वा ॐ अद्य पितृमोक्षकामो विष्णुपदे विष्णुपूजनमहं करिष्ये इति सङ्कल्प्य विष्णुप्रकाशकमन्त्रेण विष्णुं पञ्चोपचारैः सम्पूज्य ततः श्राद्धीयद्रव्याणि पुण्डरीकाक्षस्मरणपूर्व्वकं कुशोदकेन सम्प्रोक्ष्य—ॐ अद्यात्मसहित कुलसहस्रोद्धरणपूर्व्वकविष्णुलोकनयनकामो विष्णुपदे श्राद्धमहं करिष्ये—

इति सङ्कल्प्य द्वादशदैवतं नवदैवतं षड्दैवतं वा सविश्वेदेव—पार्व्वणश्राद्धं कृत्वा तद्वेदिदक्षिणतः—उपविश्य इत्युपक्रम्य ऋण-

त्वयादित्यन्तं प्राङ्मुखः प्रेतशिलास्थानीयं कर्म्म कुर्य्यात् । सन्न्यासिनान्तु विष्णुपदे दण्डस्पर्शनं कर्त्तव्यम् ।

दण्डं संस्पर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः ।

न्यस्य दण्डं विष्णुपदे मुच्यते पितृभिः सह ॥

इति वायुपुराणात् ।

तत ॐ अद्यात्मसहितकुलशतनरकोद्धरणपूर्व्वक ब्रह्मलोक-नयनकामो ब्रह्मपदे श्राद्धमहं करिष्ये इति सङ्कल्प्य तत्र रुद्रपदवत् श्राद्धं कुर्य्यात् ।

अथ दक्षिणाग्निपदे श्राद्धस्य वाजपेयफलम् । गार्हपत्यपदे श्राद्धस्य राजसूयफलम् । कार्त्तिकेयपदे श्राद्धस्य पितृशिवलोक नयनं फलम् ।

क्रौञ्चपदे श्राद्धस्य पितृब्रह्मलोकनयनफलम् । कश्यपपदे श्राद्धस्य पितृब्रह्मलोकनयनं फलम् । श्राद्धोपसंहारस्तु कश्यपपदे कर्त्तव्यः ।

अथ गयाशिरसि—ॐ अद्यामुकगोत्रस्यामुकशर्म्मणः स्वर्ग-प्राप्तिकामो गयाशिरसि पिण्डदानमहं करिष्ये इति सङ्कल्प्य स्व-सूत्रोक्तरीत्याऽवनेजनादि पिण्डसमुत्थापनपर्य्यन्तं कर्म्म कुर्य्यात् ।

तत ॐ अद्यामुकगोत्रस्यामुकशर्म्मणो मोक्षप्राप्तिकामो गया-शिरसि पिण्डदानमहं करिष्ये इति सङ्कल्प्यावनेजनादि—पिण्ड-समुत्थापनपर्य्यन्तं कर्म्म कुर्य्यात् । एवं स्त्रीपिण्डोऽपि देयः ।

अत्र न सम्बन्ध्यादरो येषां नाम्नेति सामान्यशब्दस्वरसात् । एतच्च पिण्डदानं जिह्वालोल-मधुस्रवा-मुण्डपृष्ठोत्तरमानसदक्षिण-मानसाभ्यन्तरे गदाधरावासादिप्रदेशे क्वापि कर्त्तव्यम् ।

क्रौञ्चपादात् फल्गुतीर्थं यावत् साक्षाद्गयाशिरः।

इति वचनात्।

क्रौञ्चपदस्य मुण्डपृष्ठे।

पदाङ्कितां प्रेतशिलामधिकृत्य वायुपुराणे—

तां दृष्ट्वा सर्व्वलोकस्य महापापौघपातकी[1]।
पूतः कर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक्॥
शिलास्थितेषु तोयेषु[2] स्नात्वा कृत्वाऽथ तर्पणम्।
श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्ति ते॥
स्थास्यन्ति च मरिष्यन्ति यान्तु ब्रह्मपुरीं नराः।
जरायुजा अण्डजा वा देहं त्यक्त्वा शिलोपरि।
गच्छन्ति विष्णुसायुज्यं कुलैः सप्तशतैः सह॥

---

## अथ पञ्चतीर्थ्युत्तरपञ्चमदिनकृत्यम्।

तत्र वायुपुराणे—

पञ्चमेऽह्नि गदालोले कृत्वा स्नानादि पूर्व्ववत्।
श्राद्धं सपिण्डकं कुर्य्यात्ततोऽक्षयवटे नरः॥
तत्र श्राद्धादिकं कृत्वा पितॄन् ब्रह्मपुरं नयेत्।
ब्रह्मप्रकल्पितान् विप्रान् भोजयेत् पूजयेदथ॥

---

(१) ग पुस्तके महापापोऽतिपातकी।

(२) ख पुस्तके तीर्थेषु।

स्नातश्राद्धोऽक्षयवटे अन्नेनैव प्रयत्नतः[१] ।
दृष्ट्वा नत्वाऽथ सम्पूज्य वटेशञ्च[२] समाहितः ॥
पितॄन् नयेद्ब्रह्मपुरमक्षयञ्च सनातनम् ।
गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥

तथा—

गदालोले महातीर्थे [३]गदाप्रक्षालने वरे ।
स्नानं करोमि शुद्ध्यर्थमक्षयाय स्वरामये ॥

तथा चात्र पापक्षयः स्वर्गप्राप्तिश्च फलम् ।

मन्त्रस्तु—

एकार्णवे वटस्याग्रे यः शेते योगनिद्रया ।
[४]कामरूपधरस्तस्मै नमस्ते योगशायिने ॥
संसारवृक्षशस्त्रायाऽशेषपापहराय च[५] ।
[६]अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै ॥
कलौ माहेश्वरा लोका येन तस्माद्गदाधरः ।
लिङ्गरूपोऽभवत्तञ्च वन्दे श्रीप्रपितामहम् ॥

गदालोले इति-फल्गुप्रवाहे गदालोलं नाम तीर्थम् ।

---

(१) क ख पुस्तकद्वये अनेनैव प्रमाणतः ।

(२) ग पुस्तके वटे शश्वत् ।

(३) क पुस्तके पाद— ।

(४) क पुस्तके बाल— ।

(५) क पुस्तके पापक्षयाय च । ख पुस्तके सर्व्वपापहराय च ।

(६) मूलपुस्तके अक्षयाय ब्रह्मदाते ।

तदुक्तं वायुपुराणे—

हेत्यसुरस्य च[1] शिरो गदया यद्द्विधा कृतम् ।
यतः प्रक्षालिता तीर्थं गदालोलं ततः स्मृतम् ॥

हेतिनामकस्यासुरस्य शिरश्छित्त्वा गदाधरेण यत्र गदा प्रक्षालिता तद्गदालोलं नाम तीर्थमित्यर्थः ।

हेत्युपाख्यानन्तु वायुपुराणे—

हेती रक्षो ब्रह्मपुत्र[2]स्तपस्तेपेऽद्भुतं महत् ।
ब्रह्मादीन् तपसा तुष्टान् वरं वव्रे वरप्रदान् ॥
दैत्यादितियैः शस्त्राद्यैर्विविधैर्मनुजैरपि ।
कृष्णेशानादिचक्राद्यैरवध्यः स्यां महाबलः ॥
तथेत्युक्त्वाऽन्तर्हितास्ते हेतिर्देवानथाजयत् ।
इन्द्रत्वमकरोद्धेतिः सुरा[3] ब्रह्म-हरादयः ॥
हरिञ्च शरणं जग्मुरूचुर्हेतिं जहीति च ।
ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ॥
ब्रह्मास्त्रं मे प्रयच्छध्वं हेतिं हन्यां हि येन तम् ।
इत्युक्तास्ते ततो देवा विष्णवे तां गदां ददुः ॥
उपेन्द्र त्वं जहीहीत्थं हेतिं प्रोचुरजादयः ।
दधार तां गदामादौ देवैरुक्तो गदाधरः ।
गदया हेतिमाहत्य देवेभ्यस्त्रिदिवं ययौ ॥

---

(१) क पुस्तके हेतेरसुरस्य ।

(२) क पुस्तके ब्रह्मवपुः ।

(३) ग पुस्तके भीताः ।

तत्र च गदालोलतीर्थे स्नानम्। अत्र च प्रकृतसकलमन्त्र-पाठानन्तरं गदालोल इत्यादि पठित्वा मज्जनं कार्य्यमित्यर्थः। तत्रेति गदालोले श्राद्धस्य पिण्डदानस्य वा पितृब्रह्मलोकनयनं फलमित्यर्थः। ब्रह्मेति-तत्रादावक्षयवटतले श्राद्धं तस्य पितॄणा-मक्षयतृप्तिः फलम्। ततो ब्रह्मप्रकल्पितसन्तानजब्राह्मणभोजनं तस्य पितृब्रह्मलोकनयनं फलम्।

ततो वटेशदर्शन-नति-पूजाः। तत्रापि प्रत्येकं पितृब्रह्मलोक-नयनमेव फलमित्यर्थः। एतन्नमस्कारे तु एकार्णव इत्यादिमन्त्रः। ततोऽक्षयवटनमस्कारे तु प्राहृत्तिकक्रमात् संसारवृक्ष इत्यादि-मन्त्रः। नयेदिति प्रपितामहनमस्कारस्य पितृरुद्रपदनयनं फलम्। तस्य नमस्कारे "कलौ माहेश्वरा लोकाः" इत्यादिर्मन्त्रः।

तदित्थमत्र प्रयोगः—

कृतदेवार्च्चनान्तकर्म्मा गदालोलं गत्वा—तत्र ॐ अद्य पापक्षय-स्वर्गप्राप्तिकामो गदालोले स्नानमहं करिष्ये। इति सङ्कल्प्य स्नायात्।

तत्र प्रकृतमन्त्रपाठानन्तरम्,—

ॐ गदालोले महातीर्थे गदाप्रक्षालने वरे।
स्नानं करोमि शुद्ध्यर्थमक्षयाय सुरालये॥

इति मन्त्रं पठित्वा मज्जेत्। ततस्तर्पणम्।

तत ॐ अद्य पितृब्रह्मलोकनयनकामो गदालोले श्राद्धमहं करिष्ये—इति सङ्कल्प्य श्राद्धं कुर्य्यात्। यदि पिण्डदानमात्रं

(१) ख पुस्तके प्राक्पूक।

क्रियते तदाऽप्येवमेव सङ्कल्पः। पिण्डदानन्तु स्वसूत्रोक्तविधिना कार्य्यम्। ततोऽक्षयवटं गत्वा तन्मूलसन्निहिते आचारादुत्तरदिग्भागे-ॐ अद्य पितॄणामक्षयत्वप्राप्तिकामोऽक्षयवटे श्राद्धमहं करिष्ये— इति सङ्कल्प्य तत्र श्राद्धं कुर्य्यात्।

तत ॐ पितृब्रह्मलोकनयनकामो ब्रह्मप्रकल्पितान् ब्राह्मणानहं भोजयिष्ये। इति सङ्कल्प्य तान् त्रीन् भोजयेत्। तदलाभे ब्राह्मणान्तरमपि। ॐ अद्य कोटिब्राह्मणभोजनजन्यफलसमफलप्राप्तिकामोऽक्षयवटे एकं ब्राह्मणमहं भोजयिष्ये। इति सङ्कल्प्य तत्रैकं ब्राह्मणं भोजयेत्।

तदुक्तं वायुपुराणे—अक्षयवटप्रकरणे—

एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता। इति।

तत ॐ अद्य पितृब्रह्मलोकनयनकामो वटेशदर्शनमहं करिष्ये। इति सङ्कल्प्य वटेशं प्रतिमारूपं पश्येत्। अनेनैव क्रमेण नतिं पूजाञ्च कुर्य्यात्। तथा तत्रैव—

उपोषितोऽथ गायत्रीतीर्थे महानदीस्थिते[1]।
गायत्र्याः पुरतः स्नातः प्रातः सन्ध्यां समाचरेत्॥
श्राद्धं सपिण्डकं कृत्वा नयेद्ब्रह्मण्यतां कुले[2]।
तीर्थे स मुच्यते स्नात्वा सावित्र्याः पुरतो नरः॥
सन्ध्यामुपास्य मध्याह्ने नयेत् कुलशतं दिवम्।
प्राची-सरस्वतीस्नातः सरस्वत्यास्ततोऽग्रतः॥

---

(१) मूले—नद्यां समाहितः।

(२) मूले—नयेद्ब्रह्म स्वकान् पितॄन्। क पुस्तके वेदब्राह्मण्यतां कुले।

सन्ध्यामुपास्य सायाह्ने नयेत् सर्व्वन्नतां कुलम् ।
बहुजन्मकृतात् सन्ध्यालोपान्मुक्तस्त्रिसन्ध्यकृत् ॥
विशालायां लेलिहाने तीर्थे च भरताश्रमे ।
पदाङ्किते मुण्डपृष्ठे गदाधरसमीपतः ॥
तीर्थे चाकाशगङ्गायां गिरिकर्णमुखेषु च ।
[1]श्राद्धदः पिण्डदो ब्रह्मलोकं कुलशतं नयेत् ॥
स्नातो गोदावैतरण्यां त्रिःसप्तकुलमुद्धरेत् ।
देवनद्यां गोप्रचारे श्राद्धदः स्वर्नयेत् पितॄन् ॥
पुष्करिण्यां घृतकुल्यां मधुकुल्यां तथैव च ।
पुष्करण्यां गदालोले तीर्थे च मकरे [2]तथा ॥
कोटितीर्थे रुक्मकुण्डे[3] पिण्डदः स्वर्नयेत् पितॄन् ।
मार्कण्डेयेश-कोटीशौ नत्वा स्यात् पितृतारकः ॥

पाण्डुशिलां प्रस्तुत्य तत्रैव—

युधिष्ठिरस्तु तस्यां हि श्राद्धं कर्त्तुं ययौ मुने ।
शिलायां पिण्डदानेन प्रहृष्टो व्यासनन्दनः ॥
वरं ददौ स्वपुत्राय राज्यं कुरु महीतले ।
अकण्टकन्तु सम्पूर्णं त्वं मे त्राताऽसि पुत्रक ।
स्वर्गं व्रज शरीरेण भ्रातृभिः परिवारितः ॥
दृष्टिमात्रेण सम्भूतान् नरकस्थान् दिवं नय ।
इत्युक्त्वा प्रययौ पाण्डुः शाश्वतं पदमव्ययम् ॥

---

(१) क पुस्तके स्नात्वाऽथ । (३) क पुस्तके-दण्डे ।
(२) क पुस्तके चाम्बरके । (३) ग पुस्तके रुक्मिणीये ।

घृतकुल्या मधुकुल्या देविका च महानदी ॥
शिलायां सङ्गता तत्र मधुस्रवा प्रकीर्त्तिता ।
अयुतं ह्यश्वमेधानां स्नानकृल्लभते नरः ॥
तर्पयित्वा पितृगणं कृत्वा श्राद्धं सपिण्डकम् ।
सहस्रकुलमुद्धृत्य नयेद्विष्णुपदं नरः ॥
उद्भिज्जाः स्वेदजा वाऽपि ह्यण्डजा ये जरायुजाः ।
मधुस्रवां समासाद्य मृता विष्णुपुरं ययुः ॥
दशाश्वमेधिके हंसतीर्थे [1]श्राद्धाद्दिवं नयेत् ।
दशाश्वमेध-हंसौ च नत्वा शिवपुरं व्रजेत् ॥
मतङ्गस्य पदे श्राद्धकृद् ब्रह्मलोकभाक् ।
निर्मथ्याग्नीन् शमीगर्भे विधिर्विंश्वादिभिः सह ॥
लेभे तीर्थन्तु यज्ञार्थं त्रिषु लोकेषु विश्रुतम् ।
मखसंज्ञं हि तत्तीर्थं पितॄणां मुक्तिदायकम् ।
तर्पणात् पिण्डदानाच्च स्नानकृन्मुक्तिमाप्नुयात् ॥
पितॄन् स्वर्गं नयेन्नत्वा रामेशाङ्गारकेश्वरौ ।
[2]गदाकूपे पिण्डदानादश्वमेधफलं लभेत् ॥
तस्मात् कूपाद् भस्मनाऽथ स्नानात्तारयते पितॄन् ।
धौतपादे निःचीरायाः[3] सङ्गमे स्नानकृन्नरः ॥
श्राद्धी नाम पुष्करिण्यां ब्रह्मलोकं नयेत् पितॄन् ।

---

(१) क पुस्तके श्राद्धी दिवम् ।
(२) क पुस्तके गया- ।
(३) क पुस्तके निःशल्यायाः ।

सुषुम्नायां महाकौश्यां त्रिःसप्तकुलमुद्धरेत् ।
स्नातो नत्वा वशिष्ठेशं तस्यास्तीरेऽश्वमेधभाक् ॥
पिण्डदो धेनुकारण्ये कामधेनुपदेषु च ।
स्नातो नत्वा कामधेनुं ब्रह्मलोकं नयेत् पितॄन् ॥
कर्दमाले गयानाभौ मुण्डपृष्ठसमीपतः ।
स्नात्वा श्राद्धी नयेत् स्वर्गं पितॄन् नत्वा च चण्डिकाम् ।
फल्गुतीर्थे श्मशानाख्यसङ्गमादीशमर्च्चेत्र च ॥
गयागजो गयादित्यो गायत्री च गदाधरः ।
गया गयासुरश्चैव षड्गयं मुक्तिदायकम्[१] ॥
गयायान्तु वृषोत्सर्गात् त्रिःसप्तकुलमुद्धरेत् ।
यत्र यत्र स्थितो विप्र उदितो विजितेन्द्रियः ॥
आद्यं गदाधरं ध्यायन् श्राद्धपिण्डादि कारयेत् ।
कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेद् ध्रुवम् ॥
ततो दध्योदनेनैव दत्त्वा नैवेद्यमुत्तमम् ।
जनार्द्दनाय देवाय समभ्यर्च्च्य यथाविधि ॥
दद्यान्निक्षिप्य पिण्डांस्तु तच्छेषेणैव जीवताम् ।
दैत्यस्य मुण्डपृष्ठे तु यस्मात् सायं स्थिता शिला ॥
शिलाऽसौ मुण्डपृष्ठाद्रिः पितॄणां ब्रह्मलोकदः ।
रामे वनं गते शैलमारुह्य भरतः स्थितः ॥
पित्रे पिण्डादिकं दत्त्वा रामेशं स्थाप्य तत्र च ।
स्नात्वा नत्वा च रामेशं रामं सीतां समाहितः ॥

---

(१) क पुस्तके षड्गया मुक्तिदायिका ।

श्राद्धं पिण्डप्रदानञ्च कृत्वा विष्णुपुरं नयेत् ।
पितृभिः सह धर्म्मात्मा कुलानाञ्च शतैः सह ॥
शिलादक्षिणहस्ते च स्थापितः कुण्डपर्व्वतः ।
तत्र श्राद्धादिना सर्व्वान् पितॄन् ब्रह्मपुरं नयेत् ॥
कुण्डेनाथ तपस्तप्तं सीताद्रेर्द्दक्षिणे गिरौ ।
मतङ्गस्य पदे पुण्ये पिण्डदः स्वर्गयेत् पितॄन् ॥
वामहस्ते शिलायाश्च जयन्तो विधृतो[1] गिरिः ।
उदयाद्रिरिरानीतो ह्यगस्त्येन महात्मना ॥
स्थापितः पिण्डदस्तत्र पितॄन् ब्रह्मपुरं नयेत् ।
कुण्डमुद्यन्तकन्तत्र स्नात्वाऽलं तपसे कृतम्[2] ॥
ब्रह्मा तत्र च सावित्री-कुमाराभ्यां सह स्थितः ।
हाहा-हूहूप्रभृतयो गीतनादं प्रचक्रिरे ॥
स्नातस्तत्र च मध्याह्ने सावित्रीं समुपास्य च ।
कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥
अगस्त्यस्य पदे स्नातः पिण्डदो ब्रह्मलोकगः ।
पितृभिः सह धर्म्मात्मा पूज्यमानो दिवौकसैः ॥
ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः ।
परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ॥
नत्वा गयाकुमारञ्च ब्राह्मण्यं लभते नरः ।
सोमकुण्डाभिषेकाद्यैः सोमलोकं नयेत् पितॄन् ॥

---

(१) मूलपुस्तके तथाचोद्यन्तको गिरिः ।
(२) क पुस्तके कुण्डकस्तत्र चोद्यन्त आत्मनस्तपसे कृतः ।

बलिः काकशिलायाञ्च काकेभ्य ऋणमोचदः[1] ।
स्वर्गद्वारेश्वरं नत्वा स्वर्गाद्‌ब्रह्मपुरं नयेत् ॥
पिण्डदो व्योमगङ्गायां निर्म्मलः स्वर्नयेत्[2] पितॄन् ।
शिलायां दक्षिणे हस्ते भस्मकूटमधारयत् ॥
धर्म्मोऽजस्तत्र च हरस्तन्नाम समकारयत् ।
ततोऽसौ भस्मकूटाद्रिर्भस्मस्नानात्तु नाकदः ॥
वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः ।
उदग्रे[3] रुक्मिणीकुण्डं पश्चिमे कपिला नदी ॥
कपिलेशो नदीतीरे उमासोमसमागमे ।
कपिलायां नरः स्नात्वा कपिलेशं नमेद्यजेत् ॥
श्राद्धदः स्वर्गभागी स्यात् महेशीकुण्ड एव च ।
गौरी च मङ्गला तत्र सर्व्वसौभाग्यदाऽर्च्चिता ॥
जनार्द्दनो भस्मकूटे[4] तस्य हस्ते तु पिण्डदः ।
मन्त्रेण चात्मनोऽन्येषां सव्येनापि तिलैर्विना ॥
पिण्डञ्च[5] दधिसम्मिश्रं सर्व्वे ते विष्णुलोकगाः ।
आत्मानं पितृभिः सार्द्धं विष्णुलोकं नयेन्नरः ॥
एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
गयाशीर्षे[6] त्वया देयं मह्यं पिण्डं मृते मयि ॥

---

(१) क ख पुस्तके ऋणमोचदः ।
(२) क ख पुस्तके स्वर्गयेत् ।
(३) क पुस्तके तत्समीपे ।
(४) क ख पुस्तके—कूपे ।
(५) मूलपुस्तके जीवताम् ।
(६) क पुस्तके अन्तकाले ।

यस्मै पिण्डो मया दत्तस्त्वामुद्दिश्य जनार्द्दन ।
देहि देव गयाशीर्षे तस्मै तस्मिन् मृते शुभम्[1] ॥
जनार्द्दन नमस्तुभ्यं नमस्ते पितृरूपिणे ।
पितृपते नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥
नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचन ।
लक्ष्मीकान्त नमस्तेऽस्तु नमस्ते पितृमोक्षद ॥
पुण्डरीकाक्षमभ्यर्च्य स्वर्गगः स्याज्जनार्द्दन ।
वामजानु सुसम्पात्य नत्वा भीमो जनार्द्दनम् ॥
श्राद्धं सपिण्डकं कृत्वा श्रातृभिर्विष्णुलोकभाक् ।
शिलायां वामपादे[2] तु प्रेतकूटो गिरिर्धृतः ॥
धर्मराजेन पापाढ्यो गिरिः प्रेतशिलाश्रयः ।
पादेन दूरे निक्षिप्तः शिलायाः प्रेतभारतः[3] ॥
प्रेता धानुष्करूपेण करग्रहणकारकाः[4] ।
[5]पृथक्स्थिताश्च बहवो विघ्नकारिण एव च ॥
श्राद्धादिकरणं नृणां तीर्थे पितृविमुक्तिदम् ।
गतः शिलाद्रिसम्पर्कात् प्रेतकूटः पवित्रताम् ।
प्रेतकुण्डस्तु तत्रास्ते देवास्तत्र पदे स्थिताः ।

---

(१) क ख पुस्तकद्वये मृते तु तम् ।
(२) मूले—दक्षिणे पादे ।
(३) ख पुस्तके पापभारतः ।
(४) ग पुस्तके—कानने ।
(५) ग पुस्तके पृष्ठे ।

श्राद्धपिण्डादिकृत् स्नातः प्रेतत्वान्मोचयेत् पितॄन्।
कीकटेषु गया पुण्या पुण्यं राजगृहं वनम्॥
च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना।
वैकुण्ठो लोहदण्डश्च गिरिकूटश्च शोभनः[1]॥
श्राद्धपिण्डादिकृत्तत्र पितॄन् ब्रह्मपुरं नयेत्।
शिलादक्षिणपादे तु गृध्रकूटो गिरिर्धृतः॥
धर्म्मराजेन सुस्थैर्य्यकरणायाशु पावनः[2]।
गृध्ररूपेण संसिद्धास्तपः कृत्वा महर्षयः॥
अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः शिवः।
दृष्ट्वा गृध्रेश्वरं स्नात्वा याति शम्भोःपदं नरः॥
तत्र गृध्रवटं नत्वा प्राप्तकालो दिवं व्रजेत्।
ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत्॥
आदिपादेन गिरिणा आक्रान्तश्च शिलोदरम्।
तत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः॥
तं दृष्ट्वा मुच्यते विघ्नैः पितॄन् शिवपुरं नयेत्।
गायत्रीञ्च गयादित्यं स्नातो दृष्ट्वा दिवं व्रजेत्॥
ब्रह्माणं चादिपादस्थं दृष्ट्वा स्यात् पितृतारकः।
नाभौ च पिण्डदो यस्तु पितॄन् ब्रह्मपुरं नयेत्॥
नितम्बे मुण्डपृष्ठस्य अरविन्दवनन्त्वभूत्।
मुण्डपृष्ठारविन्दाद्री दृष्ट्वा पापं विनाशयेत्॥

---

(१) क पुस्तके शोभनः।
(२) क ग पुस्तकद्वये—करणाय सुपावनः।

क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत्।
तस्य पदाङ्कितो यस्मात् क्रौञ्चपादः प्रकीर्त्तितः॥
स्नातो जलाशये तत्र नयेत् स्वर्गं कुलत्रयम्॥

उपोषित इति पूर्व्वदिने कृतोपवासः। गायत्र्या इति गायत्री च गयाग्राममध्ये तत्सम्मुखप्राक्‌देशे महानद्यां गायत्री-तीर्थं तत्र स्नात्वा प्रातः सन्ध्योपासनं कार्य्यम्। सपिण्डकमिति श्राद्धं पूर्व्वोक्तपिण्डदानसहितं तत्र कार्य्यम् कुलब्रह्मलोकनयन-मात्र फलम्।

इदन्तु चिन्त्यते—अत्र स्नान-सन्ध्यावन्दनयोः स्वातन्त्र्येण विहितत्वात् आरम्भनीयावत् साधनफलञ्च विश्वजिन्न्यायात् स्वर्गं इति श्रोत्योपक्रमः।

तीर्थं इति सावित्र्याः पुरतो मध्याह्ने स्नात्वा सन्ध्योपासने कुलशत-स्वर्गनयनफलमित्यर्थः। प्राचीति—सरस्वत्यग्रे प्राच्यां सरस्वत्यां स्नात्वा सायंसन्ध्योपासने कुलसर्व्वस्ततानयनं फल-मित्यर्थः। बह्विति सन्ध्यात्रयवन्दने बहुजन्मकृतसन्ध्यालोप-जनितपापविमुक्तिः फलमित्यर्थः। विशालायामिति विशालादि-तीर्थसप्तकाऽन्यतरस्मिन् श्राद्धे पिण्डदाने वा कुलशतब्रह्मलोक-नयनं फलमित्यर्थः। स्नात इति गोदायां वैतरण्याञ्च प्रत्येक-मेकविंशतिकुलोद्धारः फलमित्यर्थः। वैतरणी च भस्मकूटस्थित-देवनदीपूर्व्वतः। अत्र च सन्तरणे आचारप्राप्तमन्त्रः—

'[1]याऽसौ वैतरणी नाम नदी त्रैलोक्यविश्रुता।

---

(१) क पुस्तके या सा।

सा च तीर्णा महाभाग पितॄणां तारणाय वै ॥

अत्र च पित्रादिनरकोद्धरणकामनया गोदानमप्याचरन्ति। देवनद्यामिति—देवनद्यादिनवके पिण्डदाने प्रत्येकं पितृस्वर्गनयनमित्यर्थः। मार्कण्डेयेति मार्कण्डेयेशस्य कोटीशस्य च नमस्कारे प्रत्येकं पितृतारणं फलमित्यर्थः। दृष्टेति पाण्डुशिलादर्शने नरकस्थपितृपूतत्वस्वर्गनयनफलमित्यर्थः।

इत्युक्तेति—दत्तश्राद्धस्य पाण्डोः शाश्वताव्ययपदस्मरणात् पाण्डुशिलाश्राद्धे तादृक्फलप्राप्तिः फलमित्यर्थः। पाण्डुशिला चेयं पितामहसमीपस्थ-चम्पकवने। घृतकुल्येति एताश्चतस्रः मुण्डपृष्ठदक्षिणभागे शिलासङ्गता मधुस्रवापदवाच्याः तस्याञ्च स्नानेऽश्वमेधायुतं पुण्यफलमित्यर्थः। तर्पणे सपिण्डकश्राद्धे च प्रत्येकं सहस्रकुलोद्धरणपूर्व्वकविष्णुलोकनयनं फलमित्यर्थः। उद्भिज्जा इति मधुस्रवायाः स्मरणे।

दशेति—दशाश्वमेधिके हंसतीर्थे श्राद्धे च प्रत्येकं पितृस्वर्गनयनं फलम्।

पितामहदक्षिणे महानद्यां दशाश्वमेधः। मतङ्गस्येति मतङ्गपदे श्राद्धकर्त्तुर्ब्रह्मलोकभावित्वं भवतीत्यर्थः। निर्मथ्येति—कुण्डस्नानात् कर्त्तुर्मुक्तिरेवं तर्पणात् पिण्डदानाच्च पितॄणां मुक्तिर्भवतीत्यर्थः।

उद्यन्तपर्व्वतसमीपे मथो(ख)कुण्डे पितॄनिति—रामेश्वरस्य चाङ्गारकेश्वरस्य च नमस्कारे प्रत्येकं पितृस्वर्गनयनं फलम्। गयेति गयाकूपे दातुरश्वमेधफलप्राप्तिरित्यर्थः।

अत्र च प्रथमवर्षोत्तरं पतितादीनामपि पित्रादीनां श्राद्धं पिण्डदानञ्च तन्नतस्वर्गकामनया कर्त्तव्यम्।

क्रियते पतितानान्तु गते संवत्सरे क्वचित्।
देशधर्म्मप्रमाणत्वाद्गयाकूपेषु बन्धुभिः।
मार्त्तण्डपादकूपे वा श्राद्धं हरिहरं स्मरन्॥

इति ब्रह्मपुराणात्।

स्मरन्निति व्यत्ययेन तृतीयार्थे प्रथमा।

पतितास्तु ब्रह्मपुराणे—

शृङ्गि दंष्ट्रि नखि-व्याल विष बह्नि-स्त्रिया जलैः।
आदरात् परिहर्त्तव्यः कुर्व्वन् क्रीड़ां मृतस्तु यः।
नागानां विप्रियं कुर्व्वन् दग्धश्चाप्यथ विद्युता।
निगृहीतः स्वयं राज्ञा चौरदोषेन कुत्रचित्।
परदारान् रमन्तश्च द्वेषात्तत्पतिभिर्हताः।
असमानैश्च सङ्कीर्णैश्चाण्डालाद्यैश्च विग्रहम्।
कृत्वा तैर्निहताश्चाथ चाण्डालादीन् समाश्रिताः॥
गराग्निविषदाश्चैव पाषण्डाः क्रूरबुद्धयः
क्रोधात् प्रायं विषं बह्निं शस्त्रमुद्बन्धनं जलम्।
गिरिवृक्षप्रपातञ्च ये कुर्व्वन्ति नराधमाः
कुशिल्पजीविनो ये च सूनालङ्कारकारिणः।
मुखे भगाश्च ये केचित् क्लीवप्राया नपुंसकाः
ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥ इति—

शृङ्ग्यादिभिः क्रीड़ा दर्पेण, व्याल-विषाभ्यां क्रीड़ा जाङ्गलिकत्वाभिमानेन, वह्निना च मान्त्रिकत्वाभिमानेन स्त्रिया यौवनमदेन जलैर्बाहुसन्तरणादिना।

विद्युतेति शोकादिभिर्विद्युत्पातमङ्गीकृत्य तद्देशं गतो हतो विद्युद्धतः। गरो नारिकेलजलकर्पूरघटितः पाकविशेषो विषप्रतिमः। पाषण्डास्त्रयीबाह्याः। क्रूरबुद्धयो यावज्जीवं परानिष्टचिन्तकाः। कुशिल्पिनः ब्राह्मणादयश्चर्म्मादिशिल्पजीवकाः। सूनालङ्कारकारिणः—ब्राह्मणादय एव सन्तो बधस्थानाधिकृता इति।

तस्मादिति तत्कूपभस्मना स्नाने पितॄणां नरकतारणं फलमित्यर्थः। धौतपाद इति धौतपादे निःचीरायाः सङ्गमे रामपुष्करिणीनामके स्नात्वा पित्रादिश्राद्धकरणे विशिष्ट एव पित्रादिब्रह्मलोकनयनं फलमित्यर्थः। सुषुम्नाया इति सुषुम्नायां श्राद्धस्य त्रिःसप्तकुलोद्धारः फलमित्यर्थः। सुषुम्ना गयाग्राममध्ये। स्नात इति वशिष्ठस्य तीर्थे तेन वशिष्ठकुण्डे स्नात्वा वशिष्ठेशनमस्कारेणाश्वमेधतुल्यं फलमित्यर्थः। [1]गृध्रकूटोत्तरे वशिष्ठाश्रमस्तत्र वशिष्ठकुण्ड-वशिष्ठेश्वरौ।

पिण्डद इति धेनुकारण्य पिण्डदानस्य तथा कामधेनुपदे पिण्डदानस्य तथा कामधेनुनमस्कारस्य च प्रत्येकं ब्रह्मलोकनयनं फलमित्यर्थः। कर्द्दमान इति कर्द्दमाले गयानाभौ तथा मुण्डपृष्ठसमीपे स्नानपूर्व्वकश्राद्धे पितृस्वर्गनयनं फलं तथा चण्डिकानम-

(१) क पुस्तके गृध्रवटोत्तरे।

स्कारेऽपीदं फलमित्यर्थः। फल्ग्विति—फल्ग्वीशस्य चण्डीशस्य सङ्गमेशस्य च नमस्कारे प्रत्येकं पितृस्वर्गनयनं फलमित्यर्थः।

गयागज इति एते षट् गयायां मुक्तिदायकाः। अत्र च पूजा-परत्वं प्रकरणात्। गया तु महानदी देवनदी उदीची कनखल-नन्दामध्यसर्व्वतीर्थनिरन्तरा। गयाशिरस्तु नगकूट-स्टध्रकूटोत्तर[१]-मानसमध्यगतम्। गयायामिति—गयायां वृषोत्सर्गस्यैकविंशति-कुलोद्धारः फलम्।

यत्र यत्रेति गयायां यत्र कुत्रचित् प्रदेशे श्राद्धे पिण्डदाने च प्रत्येकं कुलशतस्योद्धारपूर्व्वक-ब्रह्मलोकनयनं फलमित्यर्थः। स्नात्वेति भरताश्रमे महानद्यां स्नात्वा रामेशं रामं सीताञ्च दृष्ट्वा "राम राम महाबाहो" इति मन्त्रं पठेदित्यर्थः। श्राद्ध-मिति तत्र रामेशसन्निधाने रामपदे पित्रादिकुलशतसहित-स्वविष्णुपदनयनकामनया श्राद्धं पिण्डदानञ्च कर्त्तव्यमित्यर्थः।

शिलेति शिलादक्षिणहस्ते कुण्डनामा पर्व्वतः स्थापितस्तत्र श्राद्धे पिण्डदाने च पितॄणां ब्रह्मपुरनयनं फलमित्यर्थः। मतङ्ग-स्येति सीताद्रिदक्षिणगिरौ मतङ्गपदे पिण्डदानात् पितृस्वर्गनयनं फलमित्यर्थः। वामहस्त इति शिलाया वामहस्ते उद्यन्त-पर्व्वते पिण्डदानात् पितृब्रह्मपुरनयनं भवतीत्यर्थः। कुण्ड-मुद्यन्तक इति तत्र उद्यन्तककुण्डे मध्याह्ने स्नात्वा सावित्रीनामक-मध्याह्नसन्ध्यावन्दने कोटिजन्मावच्छिन्नधनाढ्य—वेदपारगविप्रत्वं फलमित्यर्थः।

---

(१) क पुस्तके वटोत्तर।

अगस्त्यऽस्येति—पदे पिण्डदातुर्द्दिवौकोगणपूज्यमानपितृसहितब्रह्मलोकगमनं फलमित्यर्थः। ब्रह्मयोनिमिति योनिसङ्करविमुक्तिपूर्व्वकपरब्रह्मगमनकामनया ब्रह्मयोनिप्रवेशनिर्गमौ कार्य्यावित्यर्थः। नत्वेति गयाकुमारनमस्कारे ब्राह्मण्यं फलमित्यर्थः। सोमेति सोमकुण्डे स्नान-तर्पण-पिण्डैः पितृसोमलोकनयनं फलमित्यर्थः। बलिरिति काकशिलायां काकबलिकर्त्तुः सद्यो मोक्षलाभ इति। स्वर्गेति स्वर्गद्वारेश्वरनमस्कारात् स्वर्ग-तदुत्तरब्रह्मलोकप्राप्तिरित्यर्थः। पिण्डद इति आकाशगङ्गायां पिण्डदानेन स्वनैर्मल्यपितृस्वर्गनयने भवतः। प्रेतशिलायामिति प्रेतशिलादक्षिणहस्ते भस्मकूटनामा पर्व्वतः—तत्र भस्मना स्नानात् स्वर्गो भवतीत्यर्थः।

वट इति—तत्रैवाद्रौ अक्षयवटेश्वर प्रपितामहाग्रे रुक्मिणीकुण्डं तत्पश्चिमे कपिलानाम्नी नदी तदुत्तरे कपिलेश्वरः। उमेति तस्यां नद्यां उमासोमसमागमे स्नात्वा कपिलेश्वरनमस्कारात् पूजातो वा फलं विश्वजिन्न्यायात् स्वर्ग इति। श्राद्धद इति—माहेश्वरीकुण्डे चकारात् रुक्मिणीकुण्डे च श्राद्धकर्त्तुः। गौरी चेति। तत्र माहेश्वरीकुण्डे मङ्गला तत्पूजनात् सर्व्वसौभाग्यप्राप्तिर्भवतीत्यर्थः। * * *

इति महामहोपाध्यायवाचस्पतिमिश्रविरचिते तीर्थचिन्तामणौ चतुर्थो गयाप्रकाशः॥ * ॥ * ॥

---

# अथ वाराणसीमाहात्म्यम् ।

संसारिणो नरकपावकदह्यमाना-
नालोक्य मौलिनिहितेन[1] सुधाकरेण ।
या निर्म्ममे निखिलदुःखहरी हरेण
तामन्तरीक्षनगरीमनिशं स्मरामि ॥

मत्स्यपुराणे—ईश्वर उवाच ।

वाराणसी तु भुवनत्रयसारभूता
रम्या सदा मम पुरी गिरिराजपुत्रि ! ।
तत्रागता विविधदुष्कृतकारिणोऽपि
पापक्षये विरजसः प्रतिभान्ति मर्त्त्याः ॥
इदं गुह्यतमं क्षेत्रं सदा वाराणसी मम ।
सर्व्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्व्वदा ॥

स्कन्दपुराणे—

ब्रह्मघ्न-गोघ्न गुरुतल्पग-भिन्नवृत्त-
न्यासापहारि कुहकादिनिषिद्धवृत्तिः ।
संसारभूतदृढपाशविमु(यु)क्तदेहो
वाराणसीं मम पुरीं समुपैतु लोकः ॥
क्षेत्रं ममेदं सुरसिद्धजुष्टं संप्राप्य मर्त्त्यः सुकृतप्रभावात् ।
ख्यातो भवेत् सर्व्वसुरासुराणां मृतश्च यायात्[2] परमं पदं सः ॥

---

(१) ग पुस्तके—मिलितेन ।

(२) क पुस्तके यो याति ।

क्षेत्रेऽस्मिन्निपतन्ति ये सुकृतिनो भक्ताः सदा मानवाः
पश्यन्तोऽन्वहमादरेण शुचयः सन्तः सदाऽमत्सराः ।
ते मर्त्या भवदुःखपाशरहिताः संशुद्धकर्म्मक्रियाः
भित्वा सम्भवबन्धजालगहनं विन्दन्ति मोक्षं पदम् ॥

---

## अथ क्षेत्रमानम् ।

तत्र मत्स्यपुराणे—

[1]द्वियोजनमथार्द्धञ्च पूर्व्व-पश्चिमतः स्थितम् ।
अर्द्धयोजनविस्तीर्णं दक्षिणोत्तरतः स्थितम् ॥
वाराणसी नदी या तु या च शुष्कनदी तथा ।
भीष्मचण्डिकमारभ्य पर्व्वतेश्वरमन्तिके ॥

ब्रह्मपुराणे ब्रह्मवाक्यम्—

[2]वरणा चाप्यसिश्चैव द्वे नद्यौ सुरवल्लभे ।
अन्तराले तयोः क्षेत्रं भूमावपि विशेषतः ॥
पञ्चक्रोशप्रमाणन्तु क्षेत्रं दत्तं मया तव ।

स्कन्दपुराणे—

चतुःक्रोशं चतुर्दिक्षु क्षेत्रमेतत् प्रकीर्त्तितम् ।
योजनं विद्धि चार्व्वङ्गि मृत्युकालेऽमृतप्रदम् ॥

---

(१)　मूलपुस्तके द्वियोजनन्तु तत्‌क्षेत्रं
(२)　क पुस्तके वरुणा

अत्र कल्पभेदेन परिमाणभेदो द्रष्टव्यः। असिवरणयोर्मध्यं वाराणसीक्षेत्रमिति तु नियम एव, तेनासितः पूर्व्वं वरणातः पश्चाद्वाराणसीति मन्तव्यम्।

तत्रैव—

अयनन्तूत्तरे ज्ञेयमिति चण्डेश्वरं मम।
दक्षिणं शङ्कुकर्णस्तु ॐकारन्तूत्तरं मम।
दशकोव्यस्तु तीर्थानां संविशन्त्यत्र पर्व्वणि॥

लिङ्गपुराणे—शिववाक्यम्—

पिङ्गला नाम या नाड़ी आग्नेयी सा प्रकीर्त्तिता।
शुष्का सरिच्च सा ज्ञेया लोलार्को यत्र तिष्ठति॥
इड़ानाम्नी तु या नाड़ी सा सौम्या सम्प्रकीर्त्तिता।
[1]वरणासीसमा ज्ञेया केशवो यत्र संस्थितः॥
आभ्यां मध्ये तु या नाड़ी सुषुम्ना सा प्रकीर्त्तिता।
मत्स्योदरी च सा ज्ञेया विषुवं तत्प्रकीर्त्तितम्॥

वाराणस्यान्तु पूर्व्वदिशि द्वारदेशे मित्रावरुणनामकं लिङ्ग-द्वयं "मित्रावरुणनामानौ द्वारदेशव्यवस्थितौ" इति लिङ्गपुराणात्।

एवञ्च लोलार्क-केशवयोः शुष्कनदी-वरणतीरस्थयोर्मध्यं मत्स्यो-दरीसंज्ञकनदीचिह्नितम्। असी(सि)वरणयोर्मध्यं वाराणसीक्षेत्रमिति वक्तुंलार्थः।

(१) क पुस्तके सर्व्वत्र वरुणा।

(२) ग पुस्तके वरुणा नाम या।

मात्स्ये—

विमुक्तं न मया यस्मान्मोच्यते न[1] कदाचन ।
महत् क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥
प्रयागादपि तीर्थाग्र्यादिदमेव महत् स्मृतम् ।
अल्पायासेन चैवात्र मोक्षप्राप्तिः प्रजायते ॥

तथा तत्रैव—

नानावर्णा विवर्णाश्च चाण्डाला ये जुगुप्सिताः ।
किल्बिषैः पूर्णदेहाश्च प्रकृष्टैः पातकैस्तथा ।
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ॥
दुष्टान् वा दीनकृपणान् पापान् दुष्कृतकारिणः ।
देवोऽनुकम्पया सर्व्वान् नयत्यात्मपरां गतिम्[2] ॥

ब्राह्मे ब्रह्मवाक्यम्—

क्षेत्रमध्याद्यदा गङ्गा गमिष्यति सरित्पतिम् ।
तेन सा महती पुण्या पुरा रुद्र भविष्यति ॥
पुण्या चोदङ्मुखी गङ्गा प्राची चैव सरस्वती ।
उदङ्मुखी योजने द्वे गच्छते जाह्नवी नदी ॥
त एते विबुधाः सर्व्वे मया सह सवासवाः ।
उत्तमे वा समेष्यन्ति कपालं तत्र मोचय ॥
तस्मिन् तीर्थोत्तमे[3] गत्वा पिण्डदानेन वै पितॄन् ।
श्राद्धेषु प्रीणयिष्यन्ति तेषां लोकोत्तमा दिवि ॥

---

(१) क पुस्तके मोक्षं ते न । (२) ग पुस्तके चात्म परं पदं ।
(३) क पुस्तके तीर्थे तु यः ।

अत्र क्षेत्रमध्यादिति वचनात् यद्यपि वाराणसीमध्ये गङ्गा-प्रवाह इत्यापाततः प्रतीयते तथापि—

वरणा चाप्यसिश्चैव द्वे नद्यौ सुरनिर्म्मिते।
अन्तराले तयोः क्षेत्रं भूमावपि विशेषतः॥

इति पूर्व्वलिखितवचनपर्य्यालोचनया असिवरणावाह्यस्य वाराणसीक्षेत्रत्वाभावे सिद्धे क्षेत्रमध्यपदं क्षेत्रस्पर्शनमात्रपरम्। ग्राममध्ये गत इतिवत्।

---

## अथ वाराणसीप्रवेशफलम्।

तत्र लैङ्गे—

ब्रह्महा योऽभिगच्छेत्तु अविमुक्तं कदाचन।
तस्य क्षेत्रस्य माहात्म्यात् ब्रह्महत्या निवर्त्तते॥
अविमुक्तं गता ये वै महापापकृतो नराः।
अक्षया ह्यजराश्चैव अदेहाश्च भवन्ति ते॥
अज्ञानाज् ज्ञानतो वापि स्त्रिया वा पुरुषेण वा॥
यत्किञ्चिदशुभं कर्म्म कृतं मानुषबुद्धिना।
अविमुक्तं प्रविष्टस्य तत्सर्व्वं भस्मसाद्भवेत्॥

---

## अथ तद्वासफलम्।

तत्र लिङ्गे—

सदा यजति यज्ञेन सदा दानं प्रयच्छति।
सदा तपस्वी भवति ह्यविमुक्ते स्थितो नरः॥
न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे न पुष्करे।
या गतिर्विहिता पुंसामविमुक्तनिवासिनाम्॥
सर्व्वात्मना तपः[1] सत्यम् प्राणिनां नात्र संशयः।
अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः॥
अविमुक्तं न सेवन्ते मूढ़ा ये तामसा नराः।
विण्मूत्ररजसां मध्ये ते वसन्ति न संशयः॥
अविमुक्ते स्थिता नित्यं पांशुभिर्वायुनेरितैः।
स्पृष्टा दुष्कृतकर्म्माणो यास्यन्ति परमां गतिम्॥
यस्तत्र निवसेद्विप्रः प्रयतात्मा समाहितः।
[2]त्रैकाल्यमपि भुञ्जानो वायुभक्षः सदा भवेत्॥

मासमेतद्वासे तु—

तत्र मासं वसेद्धीरो यवाहारो जितेन्द्रियः।
सम्यक् तेन व्रतं चीर्णं दिव्यं पाशुपतं महत्॥
जन्ममृत्युभयं तीर्त्वा स याति परमां गतिम्।
स श्रेयसीं गतिं पुण्यां तथा योगगतिं लभेत्॥

---

(१) ग पुस्तके तपस्तप्तं प्राणिना।

(२) ग पुस्तके त्रैलोक्यमपिरेतसाम्।

[1]न वियोगगतिर्लभ्या जन्मान्तरशतैरपि।
प्राप्यते क्षेत्रमाहात्म्यात् प्रभावाच्छङ्करस्य तु॥
एकाहारस्तु यस्तिष्ठेत् मासन्तत्र वरानने।
यावज्जीवकृतं पापं मासेनैकेन नश्यति॥

---

## अथ कदाचिदपि वाराणसीवासमारभ्य यावज्जीवमपरित्यागे तु।

लिङ्गे—

आ देहपतनाद्यावत् क्षेत्रं यो न विमुञ्चति।
ब्रह्मचर्य्यव्रतैः सम्यक् सम्यगिष्टं मखैर्भवेत्॥
आ देहपतनाद्यावत् क्षेत्रं यो न विमुञ्चति।
न केवलं ब्रह्महत्या प्राक्कृतञ्च निवर्त्तते॥

प्राक्कृतः संसारबन्धः।

मात्स्ये—

विघ्नैरालोड्यमानोऽपि योऽविमुक्तं न मुञ्चति।
स मुञ्चति जरां मृत्युं जन्म चैतदशाश्वतम्॥

ब्राह्मे—

आ देहपतनादेतत्[2] क्षेत्रं सेवन्ति मानवाः।
ते मृता हंसयानेन दिव्यं यान्त्यकुतोभयाः॥

दिव्यं देवपदम्।

---

(१) ग पुस्तके—न हि योगगतिः। (२) ग पुस्तके ये तु।

## अथात्र मरणफलम् ।

तत्रैव—

विषयासक्तचित्तोऽपि त्यक्तभक्तिमतिर्नरः ।
इह क्षेत्रे मृतः सोऽपि संसारं न पुनर्विशेत् ॥
स्वर्गापवर्गयोर्हेतुरेतत्तीर्थवरं भुवि ।
यस्तत्र पञ्चतां याति मोक्षं याति न संशयः ॥
जन्मान्तरसहस्रेण युञ्जन् योगी यदाप्नुयात् ।
तमिहैव परं मोक्षं मरणादधिगच्छति ॥

इह जन्मनीत्यर्थः ।

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसङ्कराः ।
कृमिम्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये ।
चन्द्रार्द्धमौलयः सर्व्वे ललाटाक्षा वृषध्वजाः ॥
शिवे मम पुरे देवि जायन्ते तत्र मानवाः ।
प्राणांस्त्यजन्ति ये तत्र प्राणिनस्तरवस्तथा[1] ॥
रुद्रत्वं ते समासाद्य मोदन्ते च मया सह ।
अकामो वा सकामो वा अपि तिर्य्यग्गतोऽपि वा ॥
अविमुक्ते त्यजन् प्राणान् मम लोके महीयते ।
मम भक्तिपरा नित्यं नान्यभक्ताश्च ये नराः ॥
तस्मिन् प्राणान् परित्यज्य गच्छन्ति परमां गतिम् ।

---

(१) क पुस्तके तत्त्वतस्तथा ।

मन्मना मम[1] भक्तश्च मयि सर्व्वार्पितक्रियः।
यथेह मोक्षमाप्नोति अन्यत्र न तथा क्वचित् ॥
अग्निप्रवेशं ये कुर्य्युरविमुक्ते विचारतः।
प्रविशन्ति सुखं ते मामपुनर्भाविनो जनाः।
कुर्व्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि।
अविमुक्ते ह्यन्तकाले भक्तानामीश्वरः स्वयम्।
कर्म्मभिः प्रेर्य्यमाणानां कर्णजापं प्रयच्छति।

लैङ्गे—

अन्तकाले मनुष्याणां छिद्यमानेषु मर्म्मसु।
वायुना प्रेर्य्यमाणानां स्मृतिर्नैवोपजायते।
येऽविमुक्ते स्थिता रुद्रा भक्तानां प्रीतिदायकाः।
कर्णजापं प्रयच्छन्ति डिमिचण्डेश्वरादयः ॥

[2]रामतापिन्यां शिवं प्रति श्रीरामवाक्यम्—

मुमूर्षोर्दक्षिणे यस्य कस्यापि वा स्वयम्।
उपदेक्ष्यसि मे मन्त्रं स मुक्तो भविता शिव ! ॥

कर्णजापस्तारकब्रह्मोपदेशः।

अत्र मरणस्य यद्यपि परममुक्ति सायुज्य सालोक्य सारूप्याणि फलत्वेन श्रूयन्ते तथापि शुचीनां परमात्मभक्तानां तदर्पितकर्म्मणां परममुक्तिस्ततोऽपकृष्टानामग्निप्रवेशादिना सायुज्यं तिर्य्यक्प्रभृतीनां

---

(१) ग पुस्तके मयि।

(२) क पुस्तके पतितमिदं पद्यम्।

मत्यन्तपापीयसां च सारूप्यम् । ततोऽप्यधमानां सालोक्यमिति द्रष्टव्यम् । तथैव पूर्व्वलिखितनानावचनस्वरसात् ।

केचित्तु—चतुर्विधपरिमाणायां काश्यां यथायथा योगपीठादिप्रकर्षस्तथा तथा मरणफलापकर्ष इत्याहुः ।

नरकगमनाभावस्तु सर्व्वेषामेव । तदुक्तं लैङ्गे—

नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्व्वे यान्ति परां गतिम् ॥
उद्देशमात्रं कथिता अविमुक्तगुणास्तव ।
समुद्रस्येव रत्नानामविमुक्तस्य विस्तरः ॥

तथा—ज्ञानविज्ञाननिष्ठानां परमानन्दमिच्छताम् ।
या गतिर्विहिता नृणां स्वर्णाले तु मृतस्य सा ॥

स्वर्णालमुपक्रम्य—

प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ।
अनन्ता सा गतिस्तस्य योगिनामेव या स्मृता ।
हिरण्यगर्भ-व्याघ्रेश्वरयोः समीपे स्वर्णालेश्वरः ।

तथा विश्वनाथस्थाने अविमुक्त-महाश्मशान-योगपीठेति नामत्रयवाच्ये मृतस्य परममुक्तिरिति प्रपञ्चयिष्यते । मणिकर्णिकायां मृतस्य[1] च परममुक्तिरिति तापनी ।

---

(१) ग पुस्तके स्वर्णाले तु ।

## अथात्र स्नानादिफलम् ।

मात्स्ये—

दशानामश्वमेधानां यज्ञानां यत् फलं स्मृतम् ।
तदवाप्नोति स धर्म्मात्मा स्नात्वा तत्र वरानने ॥
स्वल्पमप्यत्र यो दद्याद् ब्राह्मणे वेदपारगे ।
शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ॥
उपवासन्तु यः कृत्वा विप्रान् सन्तर्पयेन्नरः ।
स [1]सौत्रामणियज्ञस्य फलं प्राप्नोति निश्चितम् ॥

विप्रानिति बहुवचनं कपिञ्जलन्यायात् त्रित्वपरम् ।

ब्राह्मे वाराणसीं प्रकृत्य—

तत्र दीपप्रदानेन ज्ञानवत् स्फुरतीन्द्रियम् ।
प्राप्नोति धूपदानेन स्थानं रुद्रनिषेवितम् ॥
वृषभं तरुणं सौम्यं चतुर्वत्सतरीयुतम् ।
यश्चाङ्कित्वा मोचयति स याति परमां गतिम् ॥
पितृभिः सहितो मोक्षं गच्छत्यत्र न संशयः ।
अङ्कयचक्रत्रिशूलाभ्यां दक्षिण-वामपार्श्वयोः ॥

अन्यत्र तथा दर्शनात् ।

अतएव इतिकर्त्तव्यतान्तरमपि । न चाङ्कयित्वेति विशेषोपदेशादस्य बाधः सर्व्वशाखाप्रत्ययमेकं कर्म्मेति न्यायादन्यासामपि वृषोत्सर्गेतिकर्त्तव्यतानामत्रान्वयात् । नापि तद्विकृतीभूतेऽत्र गवोत्सर्गे विशेषोपदेशादन्यस्य बाधः । तेन सहास्य प्रकृतिविकृति-

(१) क ग पुस्तकद्वये सत्रनाम्नः ।

भावाभावात् न हि तद्धर्म्मोऽत्रातिदिश्यते निषिध्यते वा येन तथा स्यात् किन्तु कर्म्मेदं स्वतन्त्रमेव विधीयते गोदानादिवत्। स याति परमां गतिमिति तु तत्स्तुत्यर्थवादः, एकं वृणीतेतिवत् ।

तथा—

किमत्र बहुनोक्तेन यद्दानं क्रियते नरैः ।
धर्म्मकर्म्मार्थमुद्दिश्य तदनन्तफलं लभेत् ॥
अर्च्चयेदथ मां देवि अविमुक्ते वरानने ।
तस्य धर्म्मं प्रवच्यामि यावदाप्नोति मानवः ॥
दशसौवर्णकं[1] पुष्पं योऽविमुक्ते प्रयच्छति ।
अग्निहोत्रफलं धूपे गन्धदाने शृणु प्रिये ॥
भूमिदानेन तत्तुल्यं गोप्रदानफलं स्मृतम् ।
सम्मार्ज्जने पञ्चशतं सहस्रमनुलेपने ॥
माल्ये शतसहस्रन्तु अनन्तं गीतवादिते ।

एकस्मिन् पुष्पे दशसुवर्णदानजन्यं फलं तथा धूपेऽग्निहोत्रजन्यं गन्धे भूमिदानजन्यं सम्मार्ज्जने गोपञ्चशतीदानजन्यमनुलेपने गोसहस्रदानजन्यं मालायां गोलच्चदानजन्यं गीते वाद्ये चानन्तगोदानजन्यं फलं भवतीत्यर्थः ।

सहस्रमित्यत्राविशेषितसहस्रपदं गोसहस्रपरमिति कल्पतरौ तथा व्याख्यानात् पितृभिःसह मोच्चं प्राप्नोतीत्यग्रे फलनिर्द्देशात् ।

---

(१) मूले सौवर्णिकम् ।

# तत्र लिङ्गार्च्चने ।

अविमुक्ते महादेवमर्च्चयन्ति स्तुवन्ति ये ।
सर्व्वपापविनिर्मुक्तास्ते तिष्ठन्त्यजरामराः ॥
अविमुक्तं समासाद्य लिङ्गमर्च्चयते नरः ।
कल्पकोटिशतैश्चापि तस्य नास्ति पुनर्भवः ॥
अमरो ह्यक्षयश्चैव क्रीड़ेत् स भवसन्निधौ ।
ये तु ध्यानं समासाद्य युक्तात्मानः समाहिताः ॥
सन्नियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम् ।
अविमुक्ते स्थिता नित्यं कृतार्थास्ते द्विजोत्तमाः ॥

तथा—

एकाहमुपवासं यः करिष्यति यशस्विनि ! ।
फलं वर्षशतस्येह लभते मत्परायणः ॥

वर्षशतस्योपोषितस्येत्यर्थः ।

लिङ्गे—

अतः परन्तु संवेद्यं गङ्गावरणसङ्गमम् ।
श्रवणद्वादशीयोगे बुधवारो यदा भवेत् ॥
तदा तस्मिन्नरः स्नात्वा सन्निहत्याफलं लभेत् ।
श्राद्धं करोति यस्तत्र तस्मिन् काले यशस्विनि ।
तारयित्वा पितॄन् सर्व्वान् विष्णुलोकं स गच्छति ॥

सन्निहत्या कुरुक्षेत्रस्था नदी । मात्स्ये—

वाराणसी-जाह्नवीभ्यां सङ्गमे लोकविश्रुते ।
दत्त्वाऽन्नञ्च विधानेन न स भूयोऽभिजायते ॥

असियुक्ता वरणा वाराणसी । स्कान्दे—

नदी वाराणसी येयं जाह्नव्या सह सङ्गता ।
सङ्गमे देवनद्याश्च यः स्नात्वा मनुजः शुचिः ॥
अर्च्चयेत् सङ्गमेशानं तस्य जन्मभयं कुतः ।

सङ्गमश्च अनन्तकेशवतः प्राच्याम् ।

वेदेश्वरस्य पूर्व्वेण स्वयं तिष्ठति केशवः ।
केशवस्य च पूर्व्वेण विश्रुतः सङ्गमेश्वरः ॥

इति वाराणस्यामीशानकोणवर्णने लिङ्गपुराणात् ।

मात्स्ये—

वायव्ये तु दिशो भागे तस्य पीठस्य सुन्दरि ।
लिङ्गं संस्थापितं तत्र सगरेण चतुर्मुखम् ॥

पीठो योगपीठम् ।

सागराद्वायवे भागे भद्रदोहं सरः स्मृतम् ।
गवां चीरेण संजातं सर्व्वपातकनाशनम् ॥
कपिलानां सहस्रस्य सम्यग्दत्तस्य यत् फलम् ।
तत् फलं लभते मर्त्त्यः स्नानात्तत्र न संशयः ॥
पूर्व्वभाद्रपदायुक्ता पौर्णमासी यदा भवेत् ।
तदा पुण्यतमः कालोऽप्यश्वमेधफलप्रदः ॥

विश्वनाथायतनवायव्ये वरणापूर्व्वे भीष्मचण्डिकाऽस्ति ।

तत्र च मात्स्ये—तत्प्रकरणे

यत्र सा दृश्यते देवी भीष्मचण्डिकाविश्रुता ।
वीभत्से विकृते भीमे श्मशाने वसते सदा ॥

अन्तकेश्वरपूर्व्वे सर्व्वेश्वरदक्षिणे मालतीश्वरोत्तरे [1]कृत्तिवासेश्वरं लिङ्गम्।

तदुपक्रम्य लैङ्गे—

वाराणस्यां प्रमुच्यन्ते ये जनास्तत्र संस्थिताः।
कृमिकीटाः प्रमुच्यन्ते महापातकिनश्च ये॥

तथा—

कृत्तिवासेश्वरं[1] लिङ्गं ये व्रजन्ति शुभार्थिनः।
ते रुद्रस्य शरीरान्तःप्रविष्टाश्चापुनर्भवाः॥
अनेन च शरीरेण प्राप्ता निर्व्वाणमुत्तमम्।
दशकोटिसहस्राणि तीर्थानां यत्र विश्रुतिः॥
कृत्तिवासेश्वरो[2] यत्र तत्र सर्व्वे व्यवस्थिताः।
तस्मिन् लिङ्गे तु सान्निध्यं त्रिलोक्या नाऽत्र संशयः॥

तथा—

जन्मान्तरसहस्रेण मोक्षो लभ्येत वा नवा[3]।
एकेन जन्मना तत्र कृत्तिवासे तु लभ्यते॥
पूर्व्वजन्मकृतं पापं तपसाऽपि विशुध्यति।
तत्क्षणान्नश्यते पापं तस्य लिङ्गस्य दर्शनात्॥

तथा—

कृते तु त्र्यम्बकं प्रोक्तं त्रेतायां कृत्तिवाससम्।
महेश्वरस्तु देवस्य द्वापरे नाम गीयते॥

---

(१) ख—कृत्तिकेश्वरम्। ग—कृमिकीटेश्वरम्।
(२) ग—कृमिकीटेश्वरः। (३) क—पुस्तके—मानवैः।

हस्तिपालेश्वरं नाम कलौ सिद्धैस्तु गीयते।

तथा,—

कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः।

यदीच्छेत्तारकं ज्ञानं शाश्वतञ्चामृतं पदम्॥

तथा,—

दर्शनाद्देवदेवस्य ब्रह्महाऽपि प्रमुच्यते।

दर्शने पूजने चैव सर्व्वयज्ञफलं लभेत्॥

श्रद्धया परया देवं येऽर्च्चयन्ति सनातनम्।

फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहितः॥

पुष्पैः फलैस्तथा धूपैर्दीपैर्नैवेद्यकैस्तथा।

क्षीरेण मधुना चैव तोयेन सह सर्पिषा॥

तर्पयन्ति परं लिङ्गमर्च्चयन्ति शिवं शुभम्।

डुडुकार-नमस्कारैर्नृत्यगीतैस्तथैव च॥

सुखवाद्यैरनेकैश्च स्तोत्रमन्त्रैस्तथैव च।

उपोष्य रजनीमेकां भक्त्या परमया हरम्॥

ते यान्ति परमं स्थानं सदाशिवमनामयम्॥

भूताह्नि[1] चैत्रमासस्य पूजयेत् परमेश्वरम्।

स तु विश्वेश्वरं प्राप्य क्रीड़ते यक्षराड़िव॥

वैशाखस्य चतुर्दश्यां योऽर्च्चयेत् प्रयतः शिवम्।

विशाखलोकमासाद्य तस्यैवानुचरो भवेत्॥

ज्यैष्ठमासे चतुर्दश्यां योऽर्च्चयेत् श्रद्धया हरम्।

---

(१) ग पुस्तके—भूताह्ने।

स्वर्गलोकमवाप्नोति यावदाचन्द्रतारकम् ॥
चतुर्दश्यां शुचौ मासे योऽर्चयेत्तु सुरेश्वरम्।
सूर्य्यस्य लोके सुमुखि क्रीड़ते यावदीप्सितम् ॥
श्रावणस्य चतुर्द्दश्यां कामलिङ्गसमन्वितम्।
स याति वारुणं लोकं क्रीड़ते चाप्सरैः सह ॥
मासि भाद्रपदे नक्तमर्च्चयित्वा तु शङ्करम्।
पुष्पैः फलैश्च विविधैरिन्द्रस्यैव स लोकभाक्[1] ॥
पितृपक्षे चतुर्द्दश्यां पूजयित्वा तथेश्वरम् ॥
सम्प्राप्य पितृलोकन्तु क्रीड़ते पूजितस्तु तैः।
प्रबोधमासे[2] देवेशमर्च्चयित्वा महेश्वरम्।
स चन्द्रलोकमासाद्य क्रीड़ते यावदीप्सितम् ॥
बहुले मार्गशीर्षस्य[3] पूजयित्वा पिणाकिनम्।
विष्णुलोकमवाप्नोति क्रीड़ते कालमक्षयम् ॥
अर्च्चयित्वा तथा पुष्ये स्थाणुं हृष्टेन चेतसा।
प्राप्नोति तस्य वै स्थानं मोदते तेन वै सदा ॥
माघे समर्च्चयित्वा वै पुष्प-मूल-फलैः शुभैः।
प्राप्नोति शिवलोकन्तु भुक्त्वा संसारसागरम् ॥
कृत्तिवासेश्वरं देवमर्च्चयेत्तं प्रयत्नतः।
अविमुक्ते च वस्तव्यं यदीच्छेन्मामकं पदम् ॥

कृष्णादिक्रमेण चतुर्द्दशीष्विमानि कर्म्माणि शिवरात्रिमुप-

---

(१) ग—इन्द्रस्यैति स लोकताम्। (२) ग—प्रबोधयेत् सः।
(३) क पुस्तके—मार्गशीर्षे च।

क्रमस्य फाल्गुनादौ कथनात्। तथा व्यासेश्वरपश्चिमे घण्टाकर्णह्रदः। तत्र लिङ्ग,—

स्नानं कृत्वा ह्रदे तस्मिन् व्यासेशस्य च दर्शनात्।
यत्र तत्र मृतो देवि वाराणस्यां मृतो भवेत्॥

तथा,—

[1]दण्डखाते नरः स्नात्वा तर्पयित्वा स्वकान् पितॄन्।
नरकस्थाश्च ये देवि पितृलोके वसन्ति ते॥
पिशाचत्वं गता ये वै नराः पापेन कर्म्मणा।
तेषाञ्च पिण्डदानेन [2]देहस्योद्धरणं भवेत्॥
दर्शनात्तस्य खातस्य कृतकृत्योऽभिजायते॥

तत्रैव ललितामुपक्रम्य,—

ये च त्वां पूजयिष्यन्ति तस्मिन् स्थाने स्थिताः स्वयम्।
तेषां त्वं विविधान् भोगान् सम्प्रदास्यसि मानसे॥
जागरं ये प्रकुर्व्वन्ति तवाग्रे दीपधारिणः[3]।
तेषां त्वमक्षयान् लोकान् [4]निनयिष्यसि भाविनि॥
आलयं ये प्रकुर्व्वन्ति भूमिं सम्मार्ज्जयन्ति च।
तेषामष्टसहस्रस्य सुवर्णस्य फलं भवेत्॥
त्वामुद्दिश्य च यो देवि ब्राह्मणं ब्राह्मणीं तथा।
भोजयिष्यति देवेशि तस्य पुण्यफलं शृणु॥

---

(१) ग पुस्तके—दन्तखाते।

(२) ग पुस्तके—वासः स्वर्गे महीयते।

(३) ख पुस्तके—तत्र पूजाविधानतः।

(४) ग पुस्तके—विचरिष्यसि।

तव लोके वसेत् कल्पमिहैव भारते [1]पुनः ।
नरो वा यदि वा नारी सर्व्वभोगसमन्वितौ ।
धनधान्यसमायुक्तौ जायेते महतां कुले ॥
सुभगौ दर्शनीयौ च रूप-यौवनदर्पितौ ।
भवेतामीदृशौ देवि सर्व्वसौभाग्यभाजनौ ॥
मानुष्यं दुर्लभं प्राप्य विद्युत्सम्पातचञ्चलम् ।
येन दृष्टाऽसि सुश्रोणि तस्य जन्मभयं कुतः ॥
पृथ्वीं प्रदक्षिणीकृत्य यत् फलं लभते नरः ।
तत्फलं ललितायाञ्च वाराणस्यां न संशयः ॥
माघे मासि चतुर्द्दश्यां[2] तस्मिन् काल उपोषितः ।
अर्च्चयित्वा तु यो देवि जागरं तत्र कारयेत् ।
तस्यर्द्धिमत्कुलं देवि त्रैलोक्ये याति दुर्लभम् ॥

तथा,—

नलकुवरेश्वरं नाम सर्व्वसिद्धिप्रदायकम् ।
तस्यैव दक्षिणे देवि मणिकर्णीति विश्रुतम् ॥
तस्य चाग्रे महातीर्थं सर्व्वपातकनाशनम् ।
मणिकर्णीश्वरो देवः कुण्डमध्ये च तिष्ठति ॥
अनेनैव तु देहेन सिध्यते तस्य दर्शनम् ।

तथा,—

तस्य दक्षिणपार्श्वे तु गङ्गया स्थापितं पुरा ।
गङ्गेश्वरेति नामानं सुरलोकप्रदायकम् ॥

---

(१) क पुस्तके—इहैवागच्छते पुनः ।    (२) ग पुस्तके—चतुर्थ्यान्तु ।

तथा,—

अन्यदायतनं वक्ष्ये वाराणस्यां सुरेश्वरि ! ।
यत्र वै देवदेवस्य रुचिरस्थानमीप्सितम् ॥
नीयमानं पुरा देवि तल्लिङ्गं शशिमौलिनः ।
राक्षसैरन्तरीक्षस्थैर्व्रजमानैस्तु सत्वरम् ॥
अस्मिन् देशे यदायातास्तदा देवेन चिन्तितम् ।
अविमुक्तेन मोक्षस्तु कथं मे सम्भविष्यति ॥
इदमर्थन्तु देवेशो यावच्चिन्तयते प्रभुः ।
तावत् कुक्कुटशब्दस्तु तस्मिन् देशे समुत्थितः ॥
शब्दं श्रुत्वा तु तं देवि राक्षसास्त्रस्तचेतसः ।
लिङ्गमुत्सृज्य भीतास्ते प्रभातसमये गताः ।
गतैस्तु राक्षसैर्देवि लिङ्गं तत्रैव तं शिवः ॥
स्थाने तु रुचिरे शुभ्रे देवदेवः स्वयं प्रभुः ।
अविमुक्ते तत्र मध्ये अविमुक्ततरं स्मृतम् ॥
तदा विमुक्तं हि सुरैर्हरस्य नाम स्मृतं पुण्यतमाविमुक्तम् ।
मोक्षप्रदं स्थावरजङ्गमानां ये प्राणिनः पञ्चतां सम्प्रयान्ति ॥
कुक्कुटाश्चापि देवेशि तस्मिन् स्थाने स्थिताः सदा ।
अद्यापि तत्र हन्यन्ते पूज्यमानाः शुभार्थिभिः ॥
अविमुक्तं सदा देवि यश्चेयाद्दक्षया नरः ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥

दक्षया दक्षिणया दक्षिणत आरभ्य अविमुक्तस्थानप्रवेशरूपेति यावत् ।

देवस्य दक्षिणे भागे वापी तिष्ठति शोभना ।
तस्यास्तीर्थोदकं पीत्वा पुनरावृत्तिर्न विद्यते ॥
पीतमात्रेण तेनैव उदकेन सुरेश्वरि ।
त्रीणि लिङ्गानि वर्त्तन्ते हृदये पुरुषस्य तु ॥
यैस्तु तत्र जलं पीतं कृतार्थास्ते हि मानवाः ।
तेषान्तु तारकं ज्ञानमुत्पत्स्यति न संशयः ॥
वापीजलेन च स्नात्वा दृष्ट्वा च दण्डनायकम् ।
अविमुक्तं ततो दृष्ट्वा कैवल्यं लभते क्षणात् ॥
तत्र सन्ध्यामुपासित्वा ब्राह्मणः सकृदेव तु ।
कृतसन्ध्योऽथ विप्रः स्यात् पञ्च षट् च शतं समाः ॥
पुरीं वाराणसीं तान्तु श्मशानञ्चाविमुक्तकम् ।
अविमुक्तेश्वरञ्चैव दृष्ट्वा गणपतिर्भवेत् ॥

तथा—

अविमुक्तेश्वरं लिङ्गं सम्यक् दृष्ट्वा तु मानवः ।
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥
अविमुक्तक्षेत्रस्यैव श्मशानमिति संज्ञान्तरम् ।

लैङ्गे—अविमुक्तस्य चाग्रे तु लिङ्गं पश्चान्मुखं स्मृतम् ।
प्रीतिकेश्वरनामानं प्रीतिं यच्छति शाश्वतीम् ॥
अविमुक्तस्योत्तरेण लिङ्गं पश्चान्मुखं स्मृतम् ।
अविमुक्तं ततो देवि नाम्ना वै लक्षणेश्वरः ॥
तेन दृष्टेन देवेशि ज्ञानवान् जायते नरः ।
तस्य चोत्तरतो देवि लिङ्गं यद्वै चतुर्मुखम् ॥

चतुर्थेश्वरनामानं पापानां भयमोचनम् ।

स्कान्दे—

क्षेत्रं वाराणसी पुण्या मुक्तिदन्तु भविष्यति ।
अविमुक्तेश्वरं मां वै योऽत्र द्रक्ष्यति मानवः ॥
गाणपत्ये गतिस्तस्य यत्र तत्र स्थितस्य हि ।
प्राणानिह च संन्यस्य प्राप्यते मुक्तिरुत्तमा ॥

तदयं सङ्क्षेपः—

अविमुक्तश्मशानोभयसंज्ञके क्षेत्रे शिवस्थापितमविमुक्तेश्वरं लिङ्गं विश्वनाथनाम्ना लोकप्रसिद्धम् । तदेव च कुक्कुटमण्डपस्थानं तत्र च दक्षिणद्वारेण प्रवेशेऽप्यपुनरावृत्तिः फलम् । तस्य तु दक्षिणे वापी विज्ञान-प्रजननत्वाद्विज्ञानवापीत्वेन प्रसिद्धा तस्यास्तु जल-पानाद्धृदये लिङ्गत्रयोदयः तारकज्ञानमपुनरावृत्तिश्च भवति ।

वाराणसीमविमुक्तनामकञ्च विश्वनाथगृहक्षेत्रं विश्वनाथञ्च दृष्ट्वा गणपतिर्भवति ।

एतत्क्षेत्रस्य प्रथमावरणे प्राच्यां प्रीतिकेश्वरनामानं पश्चिमा-भिमुखं लिङ्गमुत्तरस्यां पश्चिमाभिमुखं लक्ष्मीश्वरनामकं लिङ्गं वायव्ये मगधेश्वरं दक्षिणस्यां विज्ञानवापी तद्दक्षिणे कामेश्वरं लिङ्गं एतदभ्यन्तरेऽविमुक्ततरे क्षेत्रे मृतस्य परं मुक्तिर्भवति ।

तथा द्वितीयावरणे प्राच्यां मणिकर्णिकेश्वरः, उत्तरस्यां चतुर्थेश्वरः, दक्षिणस्यां गङ्गेश्वरः ।

तथा—सप्तकोट्यस्तु लिङ्गानि अस्मिन् स्थाने स्थितानि हि ।
तेषां दर्शनमात्रेण यज्ञानां फलमाप्नुयात् ॥

एतानि सिद्धलिङ्गानि कूपाः पुण्यास्तथा ह्रदाः।
वाप्यो नद्योऽथ कुण्डानि तथा ते परिकीर्त्तिताः॥
एतेषु चैव यः स्नानं करिष्यति समाहितः।
लिङ्गानि स्पर्शयित्वा च संसारे न विशेत् पुनः॥
पृथिव्यां यानि तीर्थानि अन्तरीक्षे च यानि च।
तेषां मध्ये च ये श्रेष्ठा मया ते कीर्त्तिताः शुभाः॥
तीर्थयात्रा वरारोहे कथिता पापनाशिनी।
येन चैषा कृता दृष्टा सोऽपि वै मुक्तिभाग्भवेत्॥
अविमुक्तञ्च सुश्रोणि मया मध्यमकं शुभम्।
तत्र तु कण्टकं नाम मृत्युकालेऽमृतप्रदम्॥
अतःपरं प्रवक्ष्यामि यात्राकालांस्तु सर्व्वगे।
चैत्रमासे च देवैस्तु यात्रेयं विहिता शुभे॥
तस्यैव कामकुण्डे तु स्नानपूजनतत्परैः।
ज्यैष्ठमासे तु सिद्धैस्तु यात्रेयञ्च कृता पुरा॥
रुद्रावासस्य कुण्डे तु स्नानपूजनतत्परैः।
आषाढ़े वापि यात्रेयं गन्धर्व्वैश्च कृता पुरा॥
श्रियो देव्यास्तु कुण्डस्थैः स्नानपूजनतत्परैः।
विद्याधरैस्तु यात्रेयं श्रावणे मासि तत्परैः॥
लक्ष्मीकुण्डस्य संस्थैश्च स्नानपूजनतत्परैः।
पितृभिश्चापि यात्रेयमाश्विने मासि तत्परैः॥
मार्कण्डेयह्रदस्थैश्च स्नानपूजनतत्परैः।
कृता यक्षैस्तु यात्रेयं मासि मार्गशिरे शुभा॥

कपालमोचनस्थैस्तु स्नानपूजनतत्परैः ।
गुह्यकैश्चैव यात्रेयं पौषे मासि वरानने ॥
कालेश्वरस्य कुण्डस्थैः स्नानपूजनतत्परैः ।
पन्नगैश्चैव यात्रेयं माघे मासि तु तत्परैः ॥
कोटितीर्थे तु संस्थैश्च स्नानपूजनतत्परैः ।
पिशाचैस्तु यदा तस्मिन् फाल्गुनस्य चतुर्द्दशी ॥
तेन सा प्रोच्यते देवी पिशाची नाम विश्रुता ।
अतःपरं प्रवक्ष्यामि यात्रायां निष्कृतिं पराम् ॥
उदकुम्भास्तु दातव्या मिष्टान्नेन समन्विताः ।
तेन देवि तदा प्राप्तं पूर्व्वोक्तं फलमेव तु ॥
अतःपरं प्रवक्ष्यामि यात्रा याश्च वरानने ।
शुक्लपक्षे चतुर्द्दश्यां भवकान्ता महाफला ॥
तत्र गौरी तु द्रष्टव्या तां शृणुष्व वरानने ।
स्नानं कृत्वा तु गन्तव्यं गोप्रेक्षे तु यशस्विनि ॥
तस्मिन्नहनि सा देवी अर्च्चितव्या प्रयत्नतः ।
तस्मात् स्थानात्तु गन्तव्यमविमुक्तस्य चोत्तरे ॥
तत्र देवी सदा गौरी पूजितव्या प्रयत्नतः ।
अन्या चापि परा प्रोक्ता सर्व्वर्त्तानमिता शुभा ॥
द्रष्टव्या चैव सा देवी सर्व्वकामफलप्रदा ।
सर्व्वान् कामानवाप्नोति यदि ध्यायेत मानवः ॥
ततस्तु भोजयन् विप्रान् मम भक्तान् शुभव्रतान् ।
वासैः सदक्षिणैश्चैव यथार्हमतिपुष्कलैः ॥

पञ्चगौरीन्तु यः कृत्वा भक्त्या देवि समाहितः।
सर्व्वांश्चैव रसान् गन्धान् गौरीमुद्दिश्य ब्राह्मणे॥
उत्तमं श्रेय आप्नोति सौभाग्येन समन्वितः।

सर्व्वरसो गन्धर्व्वशास्त्रोक्तः। ब्राह्मणे दद्यादिति शेषः।

तथा तत्रैव—

विनायकान् प्रवक्ष्यामि अस्य क्षेत्रस्य विघ्नदान्।
ढोण्डिन्तु प्रथमं दृष्ट्वा तथा किल विनायकम्॥
दिव्यं विनायकञ्चैव गोप्रेक्षं हस्तिदन्तिनम्।
विनायकं तथैवान्यं सिन्दूर्थं नाम विश्रुतम्॥
चतुर्थ्यां देवि द्रष्टव्या एवं पञ्च विनायकाः।
लड्डुकाश्च प्रदातव्या एतानुद्दिश्य ब्राह्मणे॥
एतेन चैव धर्म्मेण सिद्धिमान् जायते नरः।
अतःपरं प्रवक्ष्यामि चण्डिकाः क्षेत्ररक्षिकाः॥
दक्षिणे रक्षते दुर्गा नैर्ऋते चोत्तरेश्वरी॥
अङ्गारेशी पश्चिमे तु वायव्ये भद्रकालिका।
उत्तरे भीमचण्डा च महामत्तेशानतस्तथा॥
ऊर्द्धकेशसमायुक्ता शङ्करी पूर्व्वतः स्मृता।
अधःकेशी तथाग्नेय्यां चित्रघण्टा तु मध्यतः॥
एतास्तु चण्डिका देवीर्यो वै द्रक्ष्यति मानवः।
तस्य तुष्टाश्च ताः सर्व्वाः क्षेत्रं रक्षन्ति तत्पराः॥
विघ्नं कुर्व्वन्ति सततं पापानां देवि सर्व्वदा।
तस्माद्देवि सदा पूज्याश्चण्डिकाः सविनायकाः॥

अन्यच्च ते प्रवक्ष्यामि तस्मिन् क्षेत्रे सुरेश्वरि ।
तिस्रो नद्यस्तु तत्रस्था वहन्ति च शुभोदकाः ॥
तासां दर्शनमात्रेण विप्रहत्या निवर्त्तते ।
एकाऽपि तत्र त्रिस्रोता मन्दाकिनी तथाऽपरा ॥
मत्स्योदरी तृतीया च एतास्तिस्रस्तु पुण्यदाः ।
मन्दाकिनी तथा पुण्या मध्यमेश्वरसंस्थिता ॥
पितामहस्रोतिका च अविमुक्ते तु पुण्यदा ।
मत्स्योदरी तु ॐकारे पुण्यदा सर्व्वदैव हि ॥
तस्मिन् स्थाने यदा गङ्गा आगमिष्यति भाविनि ! ।
तदा पुण्यतमः कालो देवानामपि दुर्लभः ॥
वरणासिक्तसलिले जाह्नवीजलविप्लुते ।
तत्र नादेश्वरे पुण्ये स्नातः किमनुशोचति ॥
तस्मिन् काले च तत्रैव स्नानं देवि कृतं मया ।
तेन हस्ततलाद्देवि कपालपातनं क्षणात् ॥
कमालमोचनं नाम तत्रैव सुमहत् सरः ।
पावनं सर्व्वसत्वानां पुण्यदं पुण्यदेहिनाम् (?) ॥
मत्स्योदरीजले गङ्गा ॐकारेश्वरसन्निधौ ।
तदा तस्मिन् जले स्नात्वा दृष्ट्वा चोङ्कारमीश्वरम् ॥
शोकं जरां मृत्युवर्त्मं न तेन स्पृशति नरः ।
तस्मिंस्तु यः शिवः साक्षादोङ्कारेश्वरसंज्ञितः ॥
एतद्रहस्यमाम्नातं स्नेहात्तव वरानने ।
अकारश्च उकारश्च मकारश्च प्रकीर्त्तितम् ॥

अकारस्तत्र विज्ञेयो विष्णुलोकगतिप्रदः।
तस्य दक्षिणपार्श्वे तु उकारः परिकीर्त्तितः॥
तत्र सिद्धिं परां प्राप्तो देवाचार्य्यो बृहस्पतिः।
उकारं तत्र विज्ञेयं ब्रह्मणः पदमव्ययम्॥
तयोस्तथोत्तरे भागे मकारं बिन्दुसंज्ञितम्।
तस्मिन् लिङ्गे तु संसिद्धः कपिलर्षिर्महामुनिः॥
तस्मात्त्वमपि गाङ्गेय! मनःस्थैर्य्यं यदीच्छसि।
लिङ्गस्याराधने यत्नं कुरुष्व नियतव्रतः॥
निर्म्ममो निरहङ्कारः पदमाप्नोति शाश्वतम्।

तथा,—

वाराणसीमभ्युपेत्य पञ्चायतनमुत्तमम्।
आराध्यमानो देवेशं तस्मिन् स्थाने स्थितः सदा॥

गाङ्गेयः स्कन्दः प्रक्रमात्।

स्कन्दपुराणे,—

ततोऽहमास्थितो देवि स्थानेऽस्मिन् स्वयमेव हि।
गोप्रेक्षक इति ख्यातः संस्तुतः सर्व्वदैवतैः॥
गोप्रेक्षेश्वरमागत्य दृष्ट्वाऽभ्यर्च्य च मानवः।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते॥
ततस्ता दह्यमानास्तु प्रसवैः सुरभीरपि।
ह्रदेऽस्मिन् पेतुरभ्येत्य शान्तास्तोयं पपुस्तदा॥
कपिलाह्रद इत्येवं ततः प्रभृति कथ्यते।
अत्रापि स्वयमेवाहं वृषध्वज इति स्मृतः॥

सान्निध्यं भवने देवि सदा मे दृश्यतां स्थितम् ।
कपिलाङ्कदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ॥
वृषध्वजमिमं दृष्ट्वा सर्व्वयज्ञफलं लभेत् ।
स्वर्लोकतां मृतश्चापि अर्च्चयित्वा तु मामिह ॥
लभते देहभेदेन गणत्वञ्चातिदुर्लभम् ।
अस्मिन् देवप्रदेशे तु गावो वै ब्रह्मणा स्वयम् ॥
शान्त्यर्थं सर्व्वलोकानां सर्व्वदुर्गा यथासुखम् ।
भद्रदोहं सरस्तत्तु पुण्यं पापहरं शुभम् ॥
शिरो भूत्वाहमत्रस्तः स्वर्गो मद्दर्शनाद्भवेत् ॥
अत्राहं ब्रह्मणानीय स्थापितः परमेष्ठिना ।
ब्रह्मणश्चापि संगृह्य विष्णुना स्थापितः पुनः ॥
पुनश्चापि ततो ब्रह्मा स्वर्लोकेश्वरसंज्ञकम् ।
स्थापयामास मे लिङ्गं स्वर्णालेश्वरनामकम् ॥
दृष्ट्वैनमपि देवेशं मम लोके महीयते ।
प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ॥
अनन्ता सा गतिस्तस्य योगिनामिव सा स्मृता ।
अस्मिन्नेव महादेशे दैत्यो दैवतकण्टकः ॥
व्याघ्ररूपं समास्थाय निहतो दर्पितो बली ।
व्याघ्रेश्वर इति ख्यातो नित्यमत्राहमास्थितः ॥
न पुनर्दुर्गतिं यान्ति दृष्ट्वैनममरेश्वरम् ।
हिमवत्स्थापितं लिङ्गं शैलेश्वरमिति श्रुतम् ।
दृष्ट्वैतन्मनुजो देवि न दुर्गतिमवाप्नुयात् ॥

उत्पलो विदलश्चैव यौ दैत्यौ ब्रह्मणो वरात्।
दृप्तौ लिङ्गञ्च तद्दृष्ट्वा त्वयैव निहतौ शुभौ॥
सावज्ञं क(ण्ट)न्यकेनात्र तस्येदं चिह्नमास्थितम्॥
दृष्ट्वैव मम लिङ्गन्तु जेष्ठस्थानसमाश्रितम्।
न शोचति पुनर्मर्त्त्यः सिद्धो जन्मनि जन्मनि॥
समन्ताच्चैव देवैर्मे लिङ्गानि स्थापितानीह।
दृष्ट्वा च नियतं मर्त्त्यो देहभेदे गणो भवेत्॥
नदी वाराणसी चेयं पुण्या पातकनाशिनी।
क्षेत्रमेतदलङ्कृत्य जाह्नव्या सह सङ्गता॥
स्थापितं सङ्गमे तस्मिन् ब्रह्मणा लिङ्गमुत्तमम्।
सङ्गमेश्वरमित्येवं ख्यातं देवि प्रदृश्यताम्॥
सङ्गमे देवनद्याश्च यः स्नात्वा मनुजो भुवि।
अर्च्चयेत् सङ्गमेशानं तस्य जन्मभयं कुतः॥
स्थापितं लिङ्गमेतच्च शुक्रेण तव सूनुना।
नाम्ना शुक्रेश्वरं लिङ्गं सर्व्वसिद्धामरार्च्चितम्॥
दृष्ट्वैव मानवः सद्यो मुक्तः स्यात् सर्व्वपातकैः।
मृतश्च न पुनर्जन्म संसारे तु लभेन्नरः॥
जम्बूकोऽत्र हतो दैत्यो मयाऽतो जम्बूकेश्वरः।
तमेनं मां तत्र दृष्ट्वा सर्व्वान् कामानवाप्नुयात्॥
देवैः शक्रपुरोगैश्च एतानि स्थापितानीह।
यस्माल्लिङ्गानि पुण्यानि सर्व्वकामप्रदानि च॥
एवमेतानि पुण्यानि मन्निवासानि पार्व्वति!।

कथितानि तव क्षेत्रे वाक्यं गुह्यतरं शृणु ॥
महालयालयस्थं मां केदारे च व्यवस्थितम्।
गणत्वं लभते दृष्ट्वा क्षेत्रेऽस्मिन् हरवल्लभे! ॥
गाणपत्यपदं तस्मादतः सा मुक्तिरुत्तमा।
अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः ॥
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते।
शैलेशं सङ्गमेशञ्च स्वर्नी(र्णा)लं मध्यमे पुरे ॥
हिरण्यगर्भमीशानं गोप्रेक्षञ्च वृषध्वजम्।
उपशान्तशिवञ्चैव ज्येष्ठस्थाननिवासिनम् ॥
शुक्रेश्वरञ्च विख्यातं व्याघ्रेशं जम्बूकेश्वरम्।
दृष्ट्वा न जायते मर्त्त्यः संसारे दुःखसागरे ॥
इति कल्पतरौ वाराणसी-माहात्म्यम्।

---

## अथ माहात्म्यं काशीखण्डे—

अविमुक्तेशमात्रं यत्तदप्यक्षयतां व्रजेत्।
अविमुक्तं गतः कश्चिन्नरकं नैति किल्विषी ॥
अविमुक्ते कृतं पापं किन्तु वज्रं भवेद्दृढम्।

भविष्ये—

त्रैलोक्ये यानि तीर्थानि सत्क्षेत्राणि च कृत्स्नशः।
सेवन्ते सततं गङ्गां काश्यामुत्तरवाहिनीम् ॥
दशाश्वमेधे यः स्नात्वा दृष्ट्वा विश्वेश्वरं शिवम्।

सद्यः पापैर्विमुक्तोऽसौ मुच्यते भवबन्धनात् ॥
गङ्गा हि सर्व्वतः पुण्या ब्रह्महत्याऽपहारिणी ।
वाराणस्यां विशेषेण यत्र चोत्तरवाहिनी ॥
वरणायास्तथास्याश्च जाह्नव्याः सङ्गमे नरः ।
स्नानमात्रेण सर्व्वेभ्यः पातकेभ्यो विमुच्यते ॥
काश्यामुत्तरवाहिन्यां गङ्गायां कार्त्तिके तथा ।
स्नात्वा विमुच्यते माघे महापापाऽतिपातकैः ॥
सर्व्वलोकेषु तीर्थानि यानि ख्यातानि तानि च ।
सर्व्वाण्येतान्यशेषेण वाराणस्यान्तु जाह्नवीम् ॥
उत्तराभिमुखीं पुण्यामागच्छन्ति दिने दिने ।
नित्यं पर्व्वसु सर्व्वेषु पुण्यैरायतनैः सह ॥
महापातकदोषादिदुष्टानां स्पर्शसम्भवम् ।
व्यपोहितं स्वपापञ्च जनः पापापनुत्तये ॥
जन्मान्तरशतेनापि सत्कर्म्मनिरतस्य च ।
अन्यत्र ऋषभिश्चापि[1] मोक्षो लभ्येत वा न वा ॥
एकेन जन्मना चात्र गङ्गायां मरणेन च ।
मोक्षस्तु प्राप्यते काश्यां नरेणानियतात्मना ।
तदारभ्य मुने काश्यां ख्यातो धर्म्मनदो ह्रदः ॥

---

(१) ग पुस्तके ऋषयश्चापि ।

## अथ पञ्चनदम् ।

( तत्र काशीखण्डे । )

धर्म्मो हरस्वरूपेण महापातकनाशनः ।
धुनी च धूतपापा सा सर्व्वतीर्थमयी शुभा ॥
हरिर्महोच्चसङ्घातान् कूलजानिव पादपान् ।
किरणा धूतपापा च पुण्यतोया सरस्वती ॥
गङ्गा च यमुना चैव पञ्चनद्योऽत्र कीर्त्तिताः ।
अतः पञ्चनदं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥
तत्राप्लुतो न गृह्णीयाद्देहितां पाञ्चभौतिकीम् ।
अस्मिन् पञ्चनदीनाञ्च सम्भेदेऽघौघभेदिनि ।
स्नानमात्रात् प्रयात्येव भित्वा ब्रह्माण्डमण्डपम् ॥
प्रयागे माघमासे तु सम्यक् स्नातस्य यत्फलम् ।
तत्फलं स्यादिहैकेन काश्यां पञ्चनदे ध्रुवम् ॥
स्नात्वा पञ्चनदे तीर्थे कृत्वा च पितृतर्पणम् ।
विन्दुमाधवमभ्यर्च्च्य न भूयो जन्मभाग्भवेत् ॥
यावत्संख्यास्तिला दत्ताः पितृभ्यो जलतर्पणे ।
पुण्ये पञ्चनदे तीर्थे तृप्तिः स्यात्तावदाब्दिकी ॥
श्रद्धया यैः कृतं श्राद्धं तीर्थे पञ्चनदे शुभे ।
तेषां पितामहा मुक्ता नानायोनिगता अपि ॥
यमलोके पितृगणैर्गाथेयं परिगीयते ।
महिमानं पाञ्चनदं दृष्ट्वा श्राद्धविधानतः ॥

अस्माकमपि वंशेऽत्र कश्चित् श्राद्धं करिष्यति ।
काश्यां पञ्चनदं प्राप्य येन [1]मुचामहे वयम् ॥
तत्र पञ्चनदे तीर्थे यत्किञ्चिद्दीयते [2]यदि ।
कल्पत्रयेऽपि न भवेत्तस्य पुण्यस्य सङ्क्षयः ॥
वन्ध्याऽपि वर्षपर्य्यन्तं स्नात्वा पञ्चनदे ह्रदे ।
समर्च्य मङ्गलां देवीं पुत्रं जनयति ध्रुवम् ॥
जलैः पाञ्चनदैः पुण्यैर्वाससा परिशोधितैः ।
महाफलमवाप्नोति स्नापयित्वेष्टदेवताम् ॥
पञ्चामृतानां कलसैरष्टोत्तरशतामितैः ।
तुलितोऽधिकतां प्राप्तो विन्दुः पञ्चनदाम्बुनः ॥
पञ्चकूर्चेन पीतेन गात्रशुद्धिरुदाहृता ।
सा शुद्धिः श्रद्धया प्राश्य विन्दुं पाञ्चनदत्त्विमम् ॥
भवेदवभृथस्नानाद्राजसूयाश्वमेधयोः ।
यत्फलं तच्छतगुणं स्नानात् पाञ्चनदे तदा ॥
राजसूयाऽश्वमेधौ च भवेतां स्वर्गसाधनम् ।
आब्रह्मघटिकाच्छान्तं[3] भुक्त्यै पाञ्चनदाप्लुतिः ॥
स्वर्गराज्याभिषेकोऽपि न तथा सम्मतः सताम् ।
अभिषेकः पाञ्चनदो यथाऽनल्पसुखप्रदः ॥
शतं समास्तपस्तप्त्वा कृते यत्प्राप्यते फलम् ।
तत् कार्त्तिके पञ्चनदे सकृत् स्नानेन लभ्यते[4] ॥

---

(१) क युच्यामहे ।  (३) क गौरीम् ।
(२) ख वसु ।  (४) ग पञ्चनदाम्भसा ।

इष्टापूर्त्तेषु धर्म्मेषु यावज्जीवकृतेषु च ।
अन्यत्र यत् फलं तत्स्यादूर्ज्जे [1]धर्म्मनदाप्लवात् ॥
न धूतपापसदृशं तीर्थं क्वापि महीतले ॥
यदेकस्नानतो नश्येदघं जन्मत्रयार्ज्जितम् ।
कृते धर्म्मनदं नाम त्रेतायां धूतपापकम् ॥
द्वापरे विन्दुतीर्थञ्च कलौ पञ्चनदं स्मृतम् ।
विन्दुतीर्थे नरो दत्त्वा काञ्चनं कृष्णलोन्मितम् ॥
न दरिद्रो भवेत् क्वापि न सुवर्णैर्वियुज्यते ।
गोभूतिलहिरण्याश्च वासोऽथ स्रक् विभूषणम् ॥
यत्किञ्चिद्विन्दुतीर्थेऽन्नं दत्वाऽक्षयमवाप्नुयात् ।
एकामप्याहुतिं दत्वा सुसिद्धेऽग्नौ विधानतः ॥
पुण्ये धर्म्मनदे तीर्थे कोटिहोमफलं लभेत् ।
तत्पञ्चनदतीर्थस्य महिमानमनन्तकम् ॥
को हि वर्णयितुं शक्तश्चतुर्वर्गशुभौकसः ॥

इति काशीमाहात्म्यं सम्पूर्णम् ।

इति श्रीमहामहोपाध्याय-श्रीवाचस्पतिमिश्र विरचिते
तीर्थचिन्तामणौ पञ्चमः काशी- प्रकाशः
सम्पूर्णतामगात् ।

---




(१) घ पञ्चनदाप्लवात् ।